**खिन्नः** श्रान्तः । तच्च राज्ञो विशेषणम् । **सभ्यैरेवे**त्येवकारेण राज्ञो व्यावृत्तिः । तेन कालान्तरवद्राजसंनिधानापेक्षा प्राड्विवाकेनास्मिन्पक्षे न कर्तव्येत्यर्थः । **सभामेवे**त्येवकारेण स्थलान्तरव्यावृत्तिः । **याज्ञवल्क्यः** (२. ३)

अपश्यता कार्यवशाद् व्यवहारान्नृपेण तु ।
सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥

**बृहस्पतिः**

राजा कार्याणि संपश्येत्प्राड्विवाकोऽथवा द्विजः ।
न्यायाङ्गान्यग्रतः कृत्वा सभ्यशास्त्रमते स्थितः ॥

ब्राह्मणाभावे क्षत्रियं वैश्यं वा प्राड्विवाकं कुर्यान्न तु शूद्रम् । तथा च **मनुः** (८.२०-२१)

जातिमात्रोपजीवी वा कामं स्याद् ब्राह्मणब्रुवः ।
धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथंचन ॥
यस्य शूद्रस्तु कुरुते राज्ञो धर्मविवेचनम् ।
तस्य सीदति तद्राज्यं पङ्के गौरिव पश्यतः ॥

एतेषां नृपादीनां सभाङ्गत्वं प्रदर्शयंस्तेषामुपयोगमाह **बृहस्पतिः**

नृपाधिकृतसभ्याश्च स्मृतिर्गणकलेखकौ ।
हेमाग्न्यम्बुस्वपुरुषाः साधनाङ्गानि वै दश ॥
एषां मूर्धा नृपोऽङ्गानां मुखं चाधिकृतः स्मृतः ।
बाहू सभ्याः स्मृतिर्हस्तौ जङ्घे गणकलेखकौ ॥
हेमाग्न्यम्बु दृशौ हृच्च पादौ स्वपुरुषस्तथा ।
दशानामपि चैतेषां कर्म प्रोक्तं पृथक् पृथक् ॥
वक्ताध्यक्षो नृपः शास्ता सभ्याः कार्यपरीक्षकाः ।
स्मृतिर्विनिर्णयं ब्रूते जयदानं दमं तथा ॥
शपथार्थे हिरण्याग्नी अम्बु तृषितक्षुब्धयोः[1] ।

---

१ तृषितक्षुच्चयोः—इति ब; तृषितकुच्चयोः—इति अ-क.

गणको गणयेदर्थं लिखेन्न्यायं च लेखकः ॥
प्रत्यर्थिसभ्यानयनं साक्षिणां च स्वपूरुषः ।
कुर्यादलग्नकौ रक्षेदर्थिप्रत्यर्थिनौ सदा ॥
एतद्दशाङ्गं करणं यस्मिन्नध्यास्य पार्थिवः ।
न्यायान्पश्येत्कृतमतिः सा सभाध्वरसंमिता ॥

अत्र **अधिकृताध्यक्ष**शब्दाभ्यां प्राड्विवाको गृह्यते । **दमो** दण्डः । **एतद्दशाङ्गं करणं** एतत्सभालक्षणं करणं शरीरं दशाङ्गमित्यर्थः । **यस्मिन्** सभालक्षणे शरीरे । अस्यां सभायां राजादीनामुपवेशनप्रकारमाह **बृहस्पतिः**

पूर्वामुखस्तूपविशेद्राजा सभ्या उदङ्मुखाः ।
गणकः पश्चिमास्यस्तु लेखको दक्षिणामुखः ॥ इति ।

**सभ्य**ग्रहणं प्राड्विवाकस्याप्युपलक्षणम् । राजसभातोऽन्यान्यपि कानिचिदमुख्यानि वादनिर्णयस्थानानि दर्शयति **बृहस्पतिः**

राज्ञो ये विदिताः सम्यक्कुलश्रेणिगणादयः ।
साहसन्यायवर्ज्यानि कुर्युः कार्याणि ते नृणाम् ॥
कुलश्रेणिगणाध्यक्षाः प्रोक्ता निर्णयकारिणः ।
एषामग्रे निश्चितस्य प्रतिज्ञा तूत्तरोत्तरा ॥
विचार्य श्रेणिभिः कार्यं कुलैर्यन्न विनिश्चितम् ।
गणैश्च श्रेण्यविज्ञातं गणाज्ञातं नियुक्तकैः ॥
कुलादिभ्योऽधिकाः सभ्यास्तेभ्योऽध्यक्षोऽधिकः स्मृतः ।
सर्वेषामधिको राजा धर्म्यं यत्नेन निश्चितम् ॥
उत्तमाधममध्यानां विवादानां विचारणात् ।
उपर्युपरिबुद्धीनां चरन्तीश्वरबुद्धयः ॥

**कुलं** ज्ञातिसम्बन्धिबन्धूनां समूहः । **श्रेणि**र्भिन्नजातीयानामेककर्मोपजीविनां समूहः । **गणो** विजातीयानां नानाकर्मोपजीविनामेकग्रामादिवासिनां समूहः । **आदि**शब्देन सभ्यादीनां ग्रहणम् । **साहसन्यायव-**

ज्यानि साहसाख्यव्यवहारपदव्यतिरिक्तानि । **नियुक्तकाः** सभ्याः ।
**याज्ञवल्क्यः** (२.३०)

नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च ।
पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम् ॥

**नृपेणाधिकृताः** प्राड्विवाकादयः । **पूगशब्दो** गणशब्दसमानार्थः । वनेचरादीनां वनादिषु सभा भवतीत्याह **बृहस्पतिः**

ये चारण्यचरास्तेषामरण्ये करणं भवेत् ।
सेनायां सैनिकानां तु सार्थेषु वणिजां तथा ॥

**करणं** सभा । इति श्रीकोदण्ड[1]....द्योते सभानिरूपणम् ॥ २ ॥

अथ व्यवहारदर्शनप्रकारः । तत्र व्यवहारदर्शनकालमाह **कात्यायनः** (श्लो. ६०–६१)

सभास्थानेषु पूर्वाह्णे कार्याणां निर्णयं नृपः ।
कुर्याच्छास्त्रप्रणीतेन मार्गेणामित्रकर्शनः ॥
दिवसस्याष्टमं भागं मुक्त्वा भागत्रयं तु यत् ।
स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः ॥

**अष्टमो भागः** प्रथमप्रहरस्य पूर्वमर्धं **भागत्रयमे**तदुत्तरमावर्तनात् प्राचीनं भागत्रयम् । अत्र वर्ज्यास्तिथीर्दर्शयति **संवर्तः**

चतुर्दशी ह्यमावास्या पौर्णमासी तथाष्टमी ।
तिथिष्वासु न पश्येत व्यवहारान्विचक्षणः ॥ इति ।

अनिषिद्धायां तिथौ पूर्वाह्णे निर्णयार्थं शास्त्रपर्यालोचनं कुर्यात् । तथा च **बृहस्पति**रपि

पूर्वाह्णे तामधिष्ठाय वृद्धामात्यानुजीविभिः ।
पश्येत्पुराणधर्मार्थशास्त्राणि शृणुयात्तथा ॥ इति ।

निर्णयार्थमिति शेषः । **धर्मशास्त्राणि** दर्शितानि **पितामहेन**

साङ्गा वेदास्तु चत्वारो मीमांसा स्मृतयस्तथा ।
एतानि धर्मशास्त्राणि पुराणं न्यायदर्शनम् ॥ इति ।

---

1 उपरि षष्ठे पत्रे दृष्टः सर्वोऽपि भागः पुनरुक्त एवात्रापि.

**अर्थशास्त्रं** नीतिशास्त्रम् । धर्मशास्त्रनीतिशास्त्रयोर्विरोधे व्यवस्थामाह **नारदः** (व्य. मा. अ. १ श्लो. ३९)

यत्र विप्रतिपत्तिः स्याद्धर्मशास्त्रार्थशास्त्रयोः ।
अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत् ॥

धर्मशास्त्रयोर्विरोधे न्यायो विनिगमक इत्याह **याज्ञवल्क्यः**(२.२१)

स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः ।

**न्यायः** उत्सर्गापवादभावादिरूपः । **व्यवहारतः** वृद्धव्यवहारात् । **नारदो**ऽपि (व्य. मा. अ. १ श्लो. ४०)

धर्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृतः ।

न्याय[1]पर्यालोचनाभावे दोषमाह **बृहस्पतिः**

केवलं शास्त्रमाश्रित्य न कर्तव्यो हि निर्णयः ।
युक्तिहीने विचारे तु धर्महानिः प्रजायते ॥
चोरोऽचोरो साध्वसाधुर्जायते व्यवहारतः ।
युक्तिं विना विचारेण माण्डव्यश्चोरतां गतः ॥
असत्याः सत्यसदृशाः सत्याश्चासत्यसंनिभाः ।
दृश्यन्ते भ्रान्तिजनकास्तस्माद्युक्त्या विचारयेत् ॥

**साध्वसाधुः** साधुरसाधुश्छान्दसः सोर्लोपः । **व्यवहारतः** अयुक्तिकविचारात् । देशाचारपर्यालोचनमपि कर्तव्यमित्याह **मनुः** (८.३)

प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ।
अष्टादशसु मार्गेषु निबद्धानि पृथक् पृथक् ॥

कार्याणि पश्येदित्यनुषङ्गः । **मार्गेषु** व्यवहारपदेषु । देशदृष्टस्य लक्षणमाह **कात्यायनः** (श्लो. ४६)

यस्य देशस्य यो धर्मः प्रवृत्तः सार्वकालिकः ।
श्रुतिस्मृत्यविरुद्धेन देशदृष्टः स उच्यते ॥

---

१ तात्पर्यालोचनाभावे-इति क.

शास्त्राभावे तु देशदृष्टानुसारेणैव निर्णयः कार्य इत्याह **स** एव (कात्या. श्लो. ४५)

तस्माच्छास्त्रानुसारेण राजा कार्याणि साधयेत् ।
वाक्याभावे तु सर्वेषां देशदृष्टमतं नयेत् ॥

भिन्नदेशीयानां परस्परं विवादे शास्त्रदृष्टेनैव निर्णय इत्यप्याह **स** एव (कात्या. श्लो. ४७)

देशपत्तनगोष्ठेषु पुरग्रामेषु वादिनाम् ।
तेषां [1]स्वसमयैर्धर्मःशास्त्रतोन्येषु तैः सह ॥

निर्णेतव्य इति शेषः । **स्वसमयैः** स्वदेशनिबद्धैराचारैः । जातिकुलधर्मा अप्यनुसरणीया इत्यप्याह **मनुः** (८. ४१)

जातिजानपदान्धर्मान् श्रेणीधर्मांश्च धर्मवित् ।
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपालयेत् ॥

**जातिजानपदान्धर्मान्** जातिदेशसम्बन्धिनो धर्मान् । **श्रेण्यः** एककर्मोपजीविनो वणिक्कृषीवलादयः । **स्वधर्मं** दुष्टदण्डनरूपम् । कुलधर्मस्य लक्षणमुक्तं **कात्यायनेन** (श्लो. ८५)

गोत्रस्थितिस्तु या येषां क्रमादायाति धर्मतः ।
कुलधर्मं तु तं प्राहुः पालयेत्तं तथैव तु ॥

**बृहस्पतिरपि**

देशजातिकुलानां च ये धर्माः प्राक् प्रवर्तिताः ।
तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा ॥
जनापरक्तिर्भवति बलं कोशश्च नश्यति ।
उदुह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ॥
मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः ।
मत्स्यादाश्च नराः सर्वे व्यभिचाररताः स्त्रियः ॥
उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वलाः ।
अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः ॥ इति ।

**सर्वे** ब्राह्मणादयः । पूर्वे इति **कृत्यकल्पतरौ** पाठः । पूर्वे पूर्वदेशे ।

---

१ स्वसमयैर्धर्मशास्त्रतो—इति अ.

**दमो** दण्डः । यत्तु स्मृत्यन्तरेष्वेतत्कर्मकरणे प्रायश्चित्तदण्डाभिधानं तदेतद्वचनानुपात्तदेशविषयम् । वणिगादीनां मिथो विवादे राज्ञा तद्धर्मं[1] पर्यालोच्य तद्धर्माभिज्ञैरेव निर्णयः कारणीयः । तथा च **व्यासः**

वणिक्शिल्पिप्रभृतिषु कृषिरङ्गोपजीविषु ।
अशक्यो निर्णयो ह्यन्यैस्तज्ज्ञैरेव तु कारयेत् ॥

**बृहस्पति**रपि

कीनाशाः कारुकाः शिल्पिकुसीदिश्रेणिनर्तकाः ।
लिङ्गिनस्तस्कराः कुर्युः स्वेन धर्मेण निर्णयम् ॥

**कीनाशाः** कृषीवलाः । **कारुकाः** वर्धक्यादयः । **शिल्पिन**श्चित्रकारादयः । **कुसीदिनो** वार्धुषिकाः। **लिङ्गिनः** पाशुपतादयः । ब्राह्मणेषु स्ववर्णाश्रमसम्बन्धिनि कार्ये मिथो विवदमानेषु राजा स्वयं निर्णयं न कुर्यात् । किन्तु तान्संबोध्य ब्राह्मणैरेव तद्धर्मनिर्णयं कारयेत् । तथा च **मनुः** ( ८. ३९०-९१ )

आश्रमेषु द्विजातीनां कार्ये विवदतां मिथः ।
न विब्रूयान्नृपो धर्मं चिकीर्षन् हितमात्मनः ॥
यथार्हमेतानभ्यर्च्य ब्राह्मणैः सह पार्थिवः ।
सान्त्वेन प्रशमय्यादौ स्वधर्मं प्रतिपादयेत् ॥

**आश्रमेषु कार्ये** आश्रमसम्बन्धिनि कार्ये । **न विब्रूयात्** न विशिष्य ब्रूयात् । **सान्त्वेन** अनुनयेन । **प्रशमय्य** कोपमपनीय । **बृहस्पति**रपि

तपस्विनां तु कार्याणि त्रैविद्यैरेव कारयेत् ।
मायायोगविदां चैव न स्वयं कोपकारणात् ॥

**कात्यायनो**ऽपि ( श्लो. ८४ )

सम्यग्विज्ञानसम्पन्नेनोपदेशं प्रकल्पयेत् ।
उत्कृष्टजातिशीलानां गुर्वाचार्यतपस्विनाम् ॥

**सम्यग्विज्ञानसम्पन्नेने**ति तृतीयान्तं पदम् । गुरुशिष्यादीनां

---

१ तद्धर्मपर्यालोचनम्–इति क.

मिथो विवादे राजा केनचित्प्रकारेण यथाभ्यर्थितमर्थमवकलय्य विवादोपशमं कुर्यात् । न तु प्रतिज्ञोत्तरलेखनपूर्वकं विचारं कुर्यात् । एतदेवाभिप्रेत्याह **बृहस्पतिः**

गुरुशिष्यौ पितापुत्रौ दम्पती स्वामिभृत्यकौ ।
एतेषां समवेतानां व्यवहारो न सिध्यति ॥

**समवेतानां** एकस्मिन् विषये विवदमानानाम् । ईर्ष्यादिसमुद्भूतो दम्पत्योर्विवादो राजनि न निवेदनीयोपीत्याह **नारदः**

ईर्ष्यासूयासमुत्थे च संरम्भे कामहेतुके ।
दम्पती विवदेयातां स्वज्ञातिषु न राजनि ॥ इति ।

**ज्ञाति**शब्देनात्र सुहृदो लक्ष्यन्ते । विवादविषयमावेदयितुमागतस्य प्रश्नप्रकारमाह **कात्यायनः** (श्लो. ८६–८७)

काले कार्यार्थिनं पृच्छेत्प्रणतं पुरतः स्थितम् ।
किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव ॥
केन कस्मिन्कदा कस्मात्पृच्छेदेवं सभागतः ।

आवेदयितुरावेदनकाले सशस्त्रत्वादिकं निषिद्ध**मुशनसा**

सशस्त्रोऽनुत्तरीयो वा मुक्तकच्छः सहासनः ।
वामहस्तेन वा स्रग्वी वदन् दण्डमवाप्नुयात् ॥

**सहासनः** आसनस्थः । **वामहस्ते**न वामहस्तमुद्यम्य । **वदन्** कार्यमावेदयन्नित्यर्थः । प्रश्नानन्तरं कर्तव्यमाह **कात्यायनः** (श्लो. ८७-८८)

एवं पृष्टः स यद् ब्रूयात्ससभ्यैर्ब्राह्मणैः सह ।
विचार्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम् ॥
मुद्रां वा निक्षिपेत्तत्र पुरुषं वा समादिशेत् ।

**न्याय्यं** विचारयोग्यम् । **बृहस्पतिरपि**

यस्याभियोगं कुरुते तथ्येनाशङ्कयापि वा ।
तमेवानाययेद्राजा मुद्रया पुरुषेण वा ॥

आवेदनानन्तरं कार्यान्तरवैयग्र्येण राज्ञा प्रतिवादिनोऽनाह्वाने राजाज्ञया

तद्दानपर्यन्तं वाद्येव केनचित्पुरुषेण प्रतिवादिनो निरोधं कुर्यात् । तथा च **कात्यायनः** ( श्लो. २८,१०४)

> उत्पादयति यो हिंसां देयं वा न प्रयच्छति ।
> याचमानाय दौःशील्यादाकृष्योऽसौ नृपाज्ञया ॥
> आवेद्य तु नृपे कार्यमसन्दिग्धे प्रतिश्रुते ।
> तदासेधं नियुञ्जीत यावदाह्वानदर्शनम् ॥

**असन्दिग्धे प्रतिश्रुते** विचार्यत्वेन निश्चिते विचार्यत्वेन प्रतिज्ञाते च । **तदासेधं** प्रतिवाद्यासेधकं पुरुषम् । **नारदो**पि ( व्य. मा. अ. १. श्लो. ४७ )

> वक्तव्येर्थे न तिष्ठन्तमुत्क्रामन्तं च तद्वचः ।
> आसेधयेद्विवादार्थी[1] यावदाह्वानदर्शनम् ॥

**वक्तव्ये**[2] निर्णेतव्ये । **न तिष्ठन्तं** निर्णयार्थमव्याप्रियमाणम् । **उत्क्रामन्तं** अतिक्रामन्तम् । **तद्वचो** वादिवचः । आसेधस्य चातुर्विध्यमाह **स** एव ( नारद, व्य. मा. अ. १ श्लो. ४८ ) ।

> स्थानासेधः कालकृतः प्रवासात्कर्मणस्तथा ।
> चतुर्विधः स्यादासेधस्तमासिद्धो न लङ्घयेत् ॥

अमुं विवादमनिर्णीयास्मात्प्रदेशादन्यत्र पदप्रक्षेपो न कार्य इत्येवंरूप आसेधः **स्थानासेधः** । एतन्निर्णयमकृत्वा त्वयास्मिन्दिने भोजनं न कर्तव्यमित्येवमादिरूपः **कालासेधः** । निर्णयमकृत्वा ग्रामान्तरं न गन्तव्यमित्येवंरूपः **प्रवासासेधः** । परिच्छेदमविधाय सन्ध्यावन्दनादिकं न करणीयमित्येवंरूपो देशकालावच्छेदरहितः कर्मनिरोधः **कर्मासेधः** । स्वनियुक्तपुरुषेण कृतस्य निरोधस्यातिक्रमे स्वपक्षसाधनसामर्थ्ये स्वहस्तेनासेधं कुर्यात् । तथा च **कात्यायनः**

---

१ एतदर्धं न विद्यते अ-आदर्शे. २ वक्तव्ये··· अतिक्रामन्तम्-इत्येतानि वाक्यानि न सन्ति अ-आदर्शे.

३ मदनरत्न०

क्रियार्थिना निरुद्धः सन्नासेधं चेद्विलङ्घयेत् ।
स्वहस्तेनापि रोद्धव्यो यद्यसौ तां विभावयेत् ॥

**असौ** वादी **तां** क्रियाम् **विभावयेत्** साधयितुं समर्थो भवेत् । आसिद्धस्यासेधातिक्रमे दण्डमाह **कात्यायनः** ( श्लो. १०५ )

आसेधयोग्य आसिद्ध उत्क्रामन्दण्डमर्हति ।

**आसेधयोग्ये** निरोधयोग्ये कर्मणि । निरोधायोग्यविण्मूत्रोत्सर्गादिनिरोधे अतिक्रमितुर्न दण्डः प्रत्युतासेद्धुरेव । तथा चोक्तं **तेनैव** ( कात्या. श्लो. १०६ )

यस्त्विन्द्रियनिरोधेन व्याहारोच्छ्वसनादिभिः ।
आसेधयेदनासेधैः स दण्ड्यो न त्वतिक्रमात् ॥

**अनासेधै**रासेधानर्हैः । क्वचिदासेधातिक्रमे दण्डाभावमाह **नारदः** ( व्य. मा. अ. १ श्लो. ४९ )

नदीसन्तारकान्तारदुर्देशोपप्लवादिषु ।
आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात् ॥

**माधवीये** तु दुर्दशेति पाठः । **दुर्दशा** दुरवस्था । अनासेध्यानासेद्धुर्दण्डमाह **कात्यायनः** ( श्लो. ११० )

आसेधयंस्त्वनासेध्यं राज्ञा शास्य इति स्थितिः ।

अनासेध्यानाह **स** एव (कात्या. श्लो. १०७-१०८)

वृक्षपर्वतमारूढा हस्त्यश्वरथनौस्थिताः ।
विषमस्थाश्च ते सर्वे नासेध्याः कार्यसाधकैः ॥
व्याध्यार्ता व्यसनस्थाश्च यजमानस्तथैव च ।

**यजमानो** यागादिवैदिककर्म कुर्वाणः । **व्यासः**

योगी पियच्छरुद्मतो (यियक्षुरुन्मत्तो ?) धर्मार्थी व्यसनी व्रती ।
दानोन्मुखो नाभियोज्यो नासेध्यो नाह्वयेच्च तम् ॥

**योगी** अध्यात्मयोगासक्तः । **नारदः** ( व्य.मा.अ. १. श्लो.५२-५४ )

निर्वेष्टुकामो रोगार्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथान्येन राजकार्योद्यतस्तथा ॥

गवां प्रचारे गोपालाः सस्यावापे कृषीवलाः ।
शिल्पिनश्चापि तत्कालमायुधीयाश्च विग्रहे ॥
अप्राप्तव्यवहारश्च दूतो दानोद्यतो व्रती ।
विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः

**बृहस्पतिः**

शस्त्रोद्वाहोद्यतो रोगी शोकार्तोन्मत्तबालकाः ।
मत्तो वृद्धोऽभियुक्तश्च नृपकार्योद्यतो व्रती ॥
आसन्ने सैनिकः संख्ये कर्षको वापसंग्रहे ।
विषमस्थाश्च नासेध्याः स्त्रीसनाथास्तथैव च ॥

**वापसंग्रहे** वीजावापतत्संग्रहयोः । **स्त्रीसनाथाः** स्त्रियः कुलस्त्रियः सनाथाः परतन्त्राः पित्राद्यधीनाः । स्त्रिया सह रहसि स्थिताः स्त्रीसनाथा इति पौरस्त्याः । **कात्यायनः**[1] ( श्लो. ९६-९७ )

अकल्पबालस्थविरविषमस्थक्रियाकुलान् ।
कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान् ॥
मत्तोन्मत्तप्रमत्तार्तभृत्यान्नाह्वानयेन्नृपः ।
न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ॥
सर्ववर्णोत्तमां कन्यां ता ज्ञातिप्रभुकाः स्मृताः । इति ।

आसेधे कृते यस्य कार्यं नश्यति स **कार्यातिपाती** । युवती(त्य?)-श्चाप्याह्वातव्या आह **स** एव (कात्या. श्लो. ९८ )

तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः ।
निष्कुलाश्चैव पतितास्तासामाह्वानमिष्यते ॥ इति ।

**तदधीनकुटुम्बिन्यः** कुटुम्बपोषणकारिण्य आभीरादिस्त्रियः । **स्वैरिण्यो** व्यभिचारिण्यः । **गणिका** वेश्या ॥ ये त्वभियुक्तास्तद्भयात्संन्यासादिकं गृह्णन्ति तेषामपि क्वचिदाह्वानमाह **स** एव

---

1 कात्यायनः इत्यतः न हीनपक्षां–इत्यन्तो भागो नास्ति ब–आदर्शे.

ज्ञात्वाभियोगं येपि स्युर्वने प्रव्रजितादयः ।
तानप्याह्वानयेद्राजा गुरुकार्येष्वकोपयन् ॥

व्याधितादीनामप्यनिर्बन्धेनाह्वानमाह **स** एव

कालं देशं च विज्ञाय कार्याणां च बलाबलम् ।
अकल्पादीनपि शनैः शनैराह्वानयेन्नृपः ॥

शनैर्यानैराह्वानयेदिति **माधवीये** पाठः । यानैः दोलादिभिः । राज्ञाहूतस्यानागमने दण्डमाह **बृहस्पतिः**

आहूतो यत्र नागच्छेद् दर्पाद्बन्धुबलान्वितः ।
अभियोगानुरूपेण तस्य दण्डं प्रकल्पयेत् ॥

अभियोगभेदेन दण्डभेदं[1]माह **कात्यायनः** ( श्लो. १००–१०१ )

आहूतस्त्ववमन्येत यः शक्तो राजशासनम् ।
तस्य कुर्यान्नृपो दण्डं विधिदृष्टेन कर्मणा ॥
हीने कर्मणि पञ्चाशन्मध्यमे तु शतावरः ।
गुरुकार्येषु दण्डः स्यान्नित्यं पञ्चशतावरः ॥

क्वचिदाहूतस्यानागमने दण्डाभावमाह **व्यासः**

परानीकहते देशे दुर्भिक्षव्याधिपीडिते ।
कुर्वीत पुनराह्वानं दण्डं न परिकल्पयेत् ॥

आहूतस्यागमने यत्कर्तव्यं तदाह **पितामहः**

सभायाः पुरतः स्थाप्योऽभियुक्तो वादिना तथा ।
शंसितेऽन्यत्र वा स्थाने प्रमाणं सोऽन्यथा न तु ॥ इति ।

सभायामप्यभियोक्त्रादीनां मध्ये केन कदा वक्तव्यमित्यपेक्षायामाह **कात्यायनः** ( श्लो. १२१ )

तत्राभियोक्ता प्राग्[2] ब्रूयादभियुक्तस्त्वनन्तरम् ।
तयोरन्ते सदस्यास्तु प्राड्विवाकस्ततः परम् ॥

---

१ दण्डमाह–इति अ. २ प्रब्रूयात्–इति अ–क.

**नारदो**पि(व्य.मा.अ. २. श्लो. ३८) पूर्वमावेदयितुः प्रतिज्ञावादित्वमाह

राज्ञे कुर्यात्पूर्वमावेदनं यस्तस्य ज्ञेयः पूर्ववादो विधिज्ञैः ॥ इति।

क्वचित्सीमाविवादादौ यः पूर्वमावेदयति स एव न प्रतिज्ञावादी किन्तूभयोर्मध्ये योऽधिककार्यो बहुपीडो वा स पूर्ववादी । तथा चाह **स** एव

यस्य चाप्यधिका पीडा कार्यं वाभ्यधिकं भवेत् ।
तस्यार्थवादो दातव्यो न यः पूर्वं निवेदयेत् ॥

**कात्यायनो**ऽपि ( श्लो. १२२ )

यस्य स्यादधिका पीडा कार्यं वाभ्यधिकं भवेत् ।
पूर्वपक्षो भवेत्तस्य न यः पूर्वं निवेदयेत् ॥ इति ।

यत्रानयोर्विषयभेदेन युगपद्वादित्वं प्रतिवादित्वं च तत्रोत्तमवर्णस्य अधिकपीडस्य वा प्रतिज्ञावादं संशोध्य पश्चादितरस्य पक्षो निर्णेतव्यः । तथा च **बृहस्पतिः**

अहंपूर्विकया यातावर्थिप्रत्यर्थिनौ यदा ।
वादो वर्णानुरूपेण ग्राह्यः पीडामवेक्ष्य वा ॥

अनयोर्वादिप्रतिवादिनोरुभयोरन्यतरस्य वा वक्तुमसामर्थ्ये तदर्थे तत्प्रतिनिधिर्ब्रूयात् । तथा **बृहस्पतिः**

अप्रगल्भजडोन्मत्तवृद्धस्त्रीबालरोगिणाम् ।
पूर्वोत्तरं वदेद् बन्धुर्नियुक्तोन्योथवा नरः ॥

**पूर्वोत्तरं** पूर्वपक्षोत्तरम् । **कात्यायनः** ( श्लो. ८९-९० )

अधिकारोऽभियुक्तस्य नेतरस्यास्त्यसङ्गतेः ।
इतरोप्यभियुक्तेन प्रेरितोऽधिकृतो मतः ॥
समर्पितोर्थिना योन्यः परो धर्माधिकारिणि ।
प्रतिवादी स विज्ञेयः प्रतिपन्नश्च यः स्वयम् ॥

**अभियुक्तेन** प्रत्यर्थिना । **अर्थिना** वादिना । **प्रतिवादि**शब्दोऽत्र प्रतिनिधिपरो न तु प्रत्यर्थिपरः । **प्रतिपन्नश्च यः स्वयं** यः स्वयमप्य-

ह्मस्य प्रतिनिधिर्भविष्यामीति कृताङ्गीकारः। अत्र प्रतिपन्नश्चेतिशब्देन अर्थिसमर्पितत्वस्वयंप्रतिपन्नत्वयोः समुच्चितयोः प्रतिनिधित्वे प्रयोजकत्वमुक्तम्। प्रतिनिधिजयपराजयौ वादिप्रतिवादिगामिनावित्याह **नारदः**

( व्य. मा. अ. २ श्लो. २२ )

अर्थिना संनियुक्तो वा प्रत्यर्थिप्रेरितोऽपि वा।
यो यस्यार्थे विवदते तयोर्जयपराजयौ॥

**तयो**रर्थिप्रत्यर्थिनोः। यत्तु

यो न भ्राता न च पिता न पुत्रो न नियोगकृत्।
परार्थवादी दण्ड्यः स्याद् व्यवहारेषु विब्रुवन्॥

इति **कात्यायन**वचनं तदनियुक्तविषयं यत उक्तं **तेनै**व (कात्या. श्लो. ९२)

दासाः कर्मकराः शिष्या नियुक्ता बान्धवास्तथा।
वादिनो न च दण्ड्याः स्युर्यस्ततोऽन्यः स दण्डभाक्॥

केषुचिद्विवादेषु प्रतिनिधिनिषेध**स्तेनै**वोक्तः (कात्या. श्लो. ९३–९५)

ब्रह्महत्यासुरापाने स्तेयगुर्वङ्गनागमे।
अन्येष्वशक्यवादेषु प्रतिवादी न दीयते॥
मनुष्यमारणे स्तेये परदाराभिमर्शने।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे॥
पारुष्ये कूटकरणे नृपद्रोहे तथैव च।
प्रतिवादी न दाप्यः स्यात्कर्ता तु विवदेत्स्वयम्॥

**प्रतिवादी** प्रतिनिधिः। पुनः स्तेयग्रहणं तत्र सर्वथा प्रतिनिधिर्न दातव्य इत्येतदर्थम्। व्यवहारप्रवृत्त्यनन्तरं वादिप्रतिवादिनोरन्यतरस्योभयोर्वा विपत्तौ तत्पुत्रो व्यवहारनिर्णयं कुर्यात्। तथा च **बृहस्पतिः**

पूर्वोत्तरेऽभिलिखिते यत्र वादी प्रमीयते।
प्रत्यर्थी वा सुतस्ताभ्यां व्यवहारं विशोधयेत्॥

अनिर्णीतक्रियां कल्पयित्वा परामृश्य वादिनो विवदमानस्य प्रतिज्ञां भावयेत् साधयेत्। मिथ्योत्तरे इति शेषः। प्रत्यर्थी कारणं साधयेत्प्रत्यवस्कन्दने इति शेषः। प्राग्वृत्तवादी प्राङ्न्यायोत्तरवादी जयपत्रेणेति प्राङ्विवाकादीनामुपलक्षणम्। अत एव **व्यासः**

प्राड्न्याये जयपत्रेण प्राड्विवाकादिभिस्तथा । इति ।

**नारदः**

मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि ।
प्राड्न्यायविधिसिद्धौ तु जयपत्रं क्रिया भवेत् ॥

**मिथ्या** मिथ्योत्तरे । **पूर्ववादे** वादिनि क्रिया । **जयपत्रं क्रिया भवेत्** प्रमाणं भवेदित्यर्थः । **व्यासः**

प्राड्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम् ।
मिथ्योत्तरे पूर्ववादी प्रतिपत्तौ न सा भवेत् ॥

**प्रत्यर्थी** प्रतिवादी । **प्रतिपत्तौ** संप्रतिपत्त्युत्तरे । **सा** क्रिया। एकस्मिन्वस्तुनि ममेदं ममेदमिति विवदमानयोर्युगपत्सभायामागतयोर्यः पूर्वं मया लब्धमिति वदति तस्य पूर्ववादिनः क्रिया । तथा च **याज्ञवल्क्यः** (२. १७.)

साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः । इति ।

ग्राह्या भवन्तीति शेषः । साक्षिग्रहणं प्रमाणान्तरस्याप्युपलक्षणम् । यदा तु तयोरेवैकः कथयति सत्यमनेन पूर्वं लब्धं किन्त्वस्मादेवान्येन प्रतिग्रहादिना लब्ध्वा मह्यं दत्तमिति तत्र यः पश्चाल्लब्धमिति वदति तस्योत्तरवादिनः क्रिया । तथा च **स** एव (या. २. १७)

पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥

साक्षिण इत्यनुषङ्गः । **पूर्वपक्षः** पूर्वं मया लब्धमिति पक्षः । तस्य चाधरीभावः संप्रतिपन्नत्वेनासाध्यत्वात् । इदं च क्रियादानं वादिप्रतिवादिनोर्लग्नकं गृहीत्वा कार्यम् । तथा च **याज्ञवल्क्यः** (२.१०)

उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ।

निर्णयस्य कार्यं यत् साधितधनदानं दण्डद्रव्यदानं च तत् **कार्यनिर्णयः**। पूर्वनिपातशास्त्रस्यानित्यत्वात् तुल्यास्यप्रयत्नं सवर्णम् (पाणिनि १. १. ९) इति सूत्रे प्रारम्भोत्पन्नस्य (प्रारम्भो यत्नस्य ?) प्रयत्न इति वदता **महाभाष्यकारेण** क्वचित् षष्ठीसमासे षष्ठ्यन्तस्य परनिपातो

भवतीति ज्ञापनाद्वा निर्णयशब्दस्य परनिपातः । **विज्ञानेश्वरस्तु** आहिताग्न्यादिगणपाठात् कार्यशब्दस्य पूर्वनिपातमाह । प्रतिभूत्वेनाग्राह्यानाह **कात्यायनः** ( श्लो. ११४-११६ )

न स्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा ।
निरुद्धो दण्डितश्चैव संशयस्थो न च क्वचित् ॥
नैव रिक्थी न रिक्तश्च न चैवान्यत्र वासिनः ।
राजकार्यनियुक्ताश्च ये च प्रव्रजिता नराः ॥
नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम् ।
नाविज्ञातो ग्रहीतव्यः प्रतिभूत्वक्रियां प्रति ॥

**रिक्थी** रिक्थहारी भ्रात्रादिः । **रिक्तो** निर्धनः । **अन्यत्रवासिनो** देशान्तरनिवासिनः । **अविज्ञातः** विशेषतोऽपरिशीलितः । **याज्ञवल्क्यः** ( २. ५२ )

भ्रातृणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ॥

**नारदोऽपि** (दायभाग, श्लो० ३९)

साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम् ॥

लग्नकस्यालाभे तद्रक्षणार्थं यावन्निर्णयं राजपुरुषा नियोज्यास्ते च ताभ्यां वेतनं गृह्णीयुः । तथा च **कात्यायनः** (श्लो. ११७)

अथ चेत्प्रतिभूर्नास्ति कार्ययोग्यस्तु वादिनः ।
स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनम् ॥

**कार्ययोग्यः** साधितधनदानादियोग्यः । **वादिनः** विवदमानस्य । अत्रैकत्वमविवक्षितम् । **भृत्याये**त्यत्राप्येकत्वमविवक्षितम् । प्रतिभूरहितस्य पराजये धनादिग्रहणोपायमाह **स** एव ( काल्या. ११८-११९ )

द्विजातिः प्रतिभूहीनो रक्ष्यः स्याद् बाह्यचारिभिः ।
शूद्रादीन्प्रतिभूहीनान्बन्धयेन्निगडेन तु ॥

अतिक्रमेऽपयाने च दण्डयेत्तं पणाष्टकम् ।
नित्यकर्मोपरोधस्तु न कार्यः सर्ववर्णिनाम् ॥ इति ।

इयं मिथ्योत्तरादिषु यथायोग्यं वादिप्रतिवादिनोरन्यतरस्मै दातव्यत्वेनोक्ता क्रिया । यो हीनवादिलक्षणयुक्तस्तस्य दण्डमात्रार्हत्वे दण्डं गृहीत्वा दातव्या पराजयार्हत्वे तु न[1] देया । हीनलक्षणराहित्ये तु अविलम्बेन देया । तत्र हीनवादिनं दर्शयति **कात्यायनः** ( श्लो. ३८५–३८६ )

आकारेङ्गितचेष्टाभिस्तस्य भावं विभावयेत् ।
प्रतिवादी भवेद्धीनः सोऽनुमानेन लक्ष्यते ॥
कम्पः स्वेदोऽथ वैवर्ण्यमोष्ठशोषावमर्शने ।
भूलेखनं स्थानहानिस्तिर्यगूर्ध्वनिरीक्षणम् ।
स्वरभेदश्च दुष्टस्य चिह्नमाहुर्मनीषिणः ॥

**प्रतिवादि**ग्रहणमुपलक्षणम् । **अनुमानेन** दुष्टचिह्नेन कम्पादिना । **अवमर्शनं** लेहनम् । अन्यान्यपि हीनवादिलक्षणान्याह **याज्ञवल्क्यः** ( २. १३–१५ )

देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।
अभियोगे च साक्ष्ये च दुष्टः स परिकीर्तितः ॥

**सृक्किणी** ओष्ठप्रान्तौ । **परिशुष्यन्मुख**मिति सम्बन्धः । **वाक्चक्षुः पूजयति नो** अन्योक्तां वाचं प्रतिवचनदानेन चक्षुश्च प्रतिवीक्षणेन न पूजयति । **स्वभावात्** सभाक्षोभादिकं विनेत्यर्थः । **कालिकापुराणे**

वाचं न वदति त्रस्तः कम्पः स्वेदोथवा न तु[2] ।
विकारो वा व्यथा गात्रे गतिर्वा स्यान्न वान्यथा ॥

१ न–इति नास्ति क–आदर्शे. २ तनुः–इति अ–क–आदर्शयोः.
४ मदनरत्न०

स जयी यद्यकोपः स्यान्न चेत् प्राक्तन एव हि ।

**प्राक्तनः** पूर्ववादी । **नारदो**ऽपि (व्य.मा. अ.२ श्लो. २४)

पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः ।
वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः ॥

**कात्यायनः** ( श्लो. १९६)

न मयाभिहितं कार्यमभियुज्य परं वदेत् ।
विब्रुवंश्च भवेदेवं हीनं तमपि निर्दिशेत् ॥

**स** एव ( कात्या. श्लो. १९७ )

लेखयित्वा तु यो वाक्यमूनं वाभ्यधिकं पुनः ।
वदेद्वादी स हीयेत नाभियोगं तु सोऽर्हति ॥

**मनुः** ( ८. ५३–५८ )

आदेशं (?) यश्च दिशति निर्दिश्यापह्नुते च यः ।
यश्चाधरोत्तरानर्थान्विगीतान्नावबुध्यते ॥
अपदिश्यापदेशं च पुनर्यस्त्वपधावति ।
सम्यक् प्रणिहितं कार्यं पृष्टः सन्नाभिनन्दति ॥
असंभाष्ये साक्षिभिश्च देशे सम्भाषते मिथः ।
निरुच्यमानं प्रश्नं च नेच्छेद्यश्चापि निष्पतेत् ॥
ब्रूहीत्युक्तश्च न ब्रूयादुक्तं च न विभावयेत् ।
न च पूर्वापरं विद्यात्तस्मादर्थात्स हीयते ॥
सन्ति ज्ञातार इत्युक्त्वा दिशेत्युक्तो दिशेन्न यः ।
धर्मस्थः कारणैरेतैर्हीनं तमपि निर्दिशेत् ॥
अभियोक्ता न चेद् ब्रूयाद्बध्यो दण्ड्यश्च धर्मतः ।
न चेत्रिपक्षःद् प्रब्रूयाद्धर्मं प्रति पराजितः ॥

**आदेश्य**मभियोगम् । आदेशो यत्रार्थिप्रत्यर्थिनौ ऋणादानादिकाले स्थितौ स प्रदेश इति **कृत्यकल्पतरौ । स्मृतिचन्द्रिकायां** त्वदेश इति पठित्वा निर्णयसमयासम्भवी साक्षीति व्याख्यातम् । **अधरोत्तरान्**

पूर्वापरान्। **विगीतान्** विरुद्धान्। **अपदिश्य** उक्त्वा। **अपदेशं** व्याजम्। **अपधावति** अपसरति। **सम्यक्प्रणिहितं** सम्यगभिहितम्। **पृष्टः सन्** किमत्रोत्तरं कथयसि केन प्रमाणेन स्वपक्षं साधयसीति पृष्टः सन्। **नाभिनन्दति** नोत्तरयति। **असम्भाष्ये देशे** सम्भाषणानर्हे प्रदेशे। **निष्पतेत्** अनुक्त्वा ग्रामान्तरं गच्छेत्। पूर्वोक्तस्यार्थस्य **ब्रूहि** इत्यादिना पुनर्वचनं दार्ढ्यार्थम्। **धर्मस्थो** धर्माधिकरणस्थः। **वध्यो** वधार्हे विषये। **दण्ड्यो** दण्डार्हे विषये। **याज्ञवल्क्यः** (२. १६)

सन्दिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत्।
न चाहूतो वदेत्किञ्चिद्धीनो दण्ड्यश्च स स्मृतः॥

**स्वतन्त्रः** साधननिरपेक्षः। **साधयेत्** गृह्णीयात्। **निष्पतेत्** पलायेत। अत्र दण्डग्रहणेनैव हीनत्वे सिद्धे पुनर्वचनं प्रकृतार्थहानिज्ञापनार्थम्। अत एव **नारदः** (व्य.मा.अ. १ श्लो. ४६)

अनिवेद्य तु यो राज्ञे सन्दिग्धेऽर्थे प्रवर्तते।
प्रसह्य स विनेयः स्यात्स चाप्यर्थो न सिध्यति॥ इति।

**कात्यायनः** (श्लो. २०७)

साक्षिणो यस्तु निर्दिश्य कामतो न विवादयेत्।
स वादी हीयते तस्मात्रिंशद्रात्रात्परेण तु॥ इति।

**नारदः** (व्य. मा. अ. २ श्लो. ३३)

अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः।
आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः॥

**क्रियाद्वेषी** सभ्यादिद्वेषी। तथा च **स** एव

सभ्याश्च साक्षिणश्चैव क्रिया ज्ञेया मनीषिणा[1]।
तां क्रियां द्वेष्टि यो मोहात् क्रियाद्वेषी स उच्यते॥ इति।

**नोपस्थायी** सभ्यादिनिरूपिते काले सभायामप्राप्तः। दैविकादिविघ्नेनानागमने दोषाभावमाह **बृहस्पतिः**

१ मनीषिणः—इति ब.

आचारकरणे दिव्ये कृत्वोपस्थाननिर्णयम् ।
नोपस्थितो यदा कश्चिच्छलं तत्र न कारयेत् ॥
दैवराजकृतो दोषस्तस्मिन्काले यदा भवेत् ।
अवधित्यागमात्रेण न भवेत्स पराजितः ॥

**आचारकरणे** धर्माधिकरणे । **छलं तत्र न कारयेत्** अपराधं तत्र न मन्येतेत्यर्थः । अत्र **नारद**वाक्ये हीनः पञ्चविध इत्यभिधानं न पञ्च एवेत्यवधारणार्थमन्येषामपि हीनानां स्मरणात् । किं तर्हि तेषूत्तरोत्तरस्य हीनता गुर्वीतिज्ञापनार्थम् । तच्चोत्तरोत्तरस्य

अन्यवादी पणान्पञ्च क्रियाद्वेषी पणान् दश ।
नोपस्थाता दश द्वौ च षोडशैव निरुत्तरी[1] ॥
आहूतप्रपलायी च पणान् ग्राह्यस्तु विंशतिम् । इति

**कात्यायनो**क्तदण्डभूयस्त्वं सूचयितुम् (श्लो.२०२) । **कात्यायनः**

न परेण समुद्दिष्टानुपेयात्साक्षिणो रहः ।
भेदयेच्चैव नान्येन हीयेतैवं समाचरन् ॥

**नारदः**

उभयोर्लिखिते वाक्ये प्रारब्धे कार्यनिर्णये ।
अनुक्तं तत्र यो ब्रूयात्तस्मादर्थात्स हीयते ॥ इति ।

**बृहस्पतिः**

साक्षिणस्तु समुद्दिश्य यस्तु तान्न निगादयेत् ।
त्रिंशद्रात्रात्त्रिपक्षाद्वा तस्य हानिः प्रजायते ॥
आहूतप्रपलायी च मौनी साक्षी पराजितः ।
स्ववाक्यप्रतिपन्नश्च हीनवादी चतुर्विधः ॥
प्रपलायी त्रिपक्षेऽथ मौनकृत्सप्तभिर्दिनैः ।
साक्षिभिन्नस्तत्क्षणेन प्रतिपन्नश्च हीयते ॥

**स्ववाक्यप्रतिपन्नः** स्वयमङ्गीकृतपराजयः । अत्र त्रिंशद्रात्रादित्यादि-

---

१ निरुत्तरम्–इति अ-क.८

कालविशेषनिर्देशः कार्यलाघवगौरवानुसारी अल्पकालबहुकालोपलक्षणपरः। एतेषु हीनवादिचिह्नेषु कानिचित् साक्षिपराजितत्वादीनि चिह्नानि वाद्यभिमतार्थाभावनिश्चायकानि । तेषां दर्शने दण्डभङ्गौ कल्पनीयौ । तथा च **कात्यायनः** ( श्लो. २०६ )

दोषानुरूपं संग्राह्यः पुनर्वादो न विद्यते ।

कानिचित्त्वर्थान्तरभाषणादीनि तदभिमतार्थाभावसम्भावनाहेतुभूतानि । तेषां दर्शनेन दण्डः परिकल्प्यः । अत एव **कात्यायनः** ( श्लो.२०२ )

अन्यवादी पणान्पञ्च क्रियाद्वेषी पणान्दश ।
नोपस्थाता दश द्वौ च षोडशैव निरुत्तरः ॥
आहूतप्रपलायी च पणान् ग्राह्यस्तु विंशतिम् । इति ।

व्यवहारप्रवर्तनं तु

पलायनानुत्तरत्वादन्यपक्षाश्रयेण च ।
हीनस्य गृह्यते वादो न स्ववाक्यजितस्य तु ॥

इत्यादिभि**र्बृहस्पत्या**दिवाक्यैर्यत्राभ्यनुज्ञातं तत्र कर्तव्यम् । इतरत्र भङ्गो वक्तव्यः । पलायनादौ पुनर्वादाभ्यनुज्ञानं त्रिपक्षादिकालमध्ये वेदितव्यं न तु तत ऊर्ध्वं

प्रपलायी त्रिपक्षेण मौनकृत्सप्तभिर्दिनैः ।

इति पूर्वोदाहृतवचनात् । मन्युकृतेषु साहसादिव्यवहारेषु प्रमादेनान्यथाभिधानेपि दण्डभङ्गौ । अमन्युकृतेषु ऋणाद्यर्थव्यवहारेषु तु दण्ड एव न भङ्गः । तथा च **नारदः** (व्य.मा.अ. २ श्लो. २५)

सर्वेष्वर्थविवादेषु वाक्छले नावसीदति ।
पशुस्त्रीभूम्यृणादाने शास्योप्यर्थान्न हीयते ॥

**सर्वेष्वर्थविवादेषु** अमन्युकृतेषु विवादेषु **वाक्छले** प्रमादाभिधाने **नावसीदति** न पराजयवान् भवति। तत्र दृष्टान्तः[1]। यथा पशुस्त्रीभूम्यृणादानेषु प्रमादाभिधानेन शास्योपि दण्ड्योपि स्वाभिमताद्दर्थान्न हीयते ।

---

१ तत्र दृष्टान्तः इत्यस्मात् साधयितृत्वादर्थी इत्यन्तो ग्रन्थः (पृष्ठ ३१ पङ्क्ति ७) नास्ति **अ-क** आदर्शयोः.

अत्रार्थविवादेष्वित्यभिधानान्मन्युकृतविवादेषु प्रकृतार्थहानिरुक्ता। पूर्वपक्षोत्तरलेखनानन्तरं राजानमविज्ञाप्य वादिप्रतिवादिनोर्मिथो मेलने दण्डमाह **कात्यायनः** ( श्लो. २०६ )

आवेद्य प्रगृहीतार्थं प्रशमं यान्ति ये मिथः ।
सर्वे द्विगुणदण्ड्याः स्युर्विप्रलम्भान्नृपस्य ते ॥

**प्रगृहीतार्थं** स्वपरिगृहीतमर्थम् । यदपि

पूर्वोत्तरे संनिविष्टे विचारे संप्रवर्तिते ।
प्रशमं ये मिथो यान्ति दाप्यास्ते द्विगुणं दमम् ॥

इति **बृहस्पति**वचनं तदपि नृपवञ्चनविषयम् । तेन नृपाज्ञया मिथो मेलने न दण्डः किमुत गुण एव । तथा च **स** एव

पूर्वोत्तरेऽभिलिखिते प्रक्रान्ते कार्यनिर्णये ।
द्वयोः सन्तप्तयोः सन्धिः स्यादयःपिण्डयोरिव ॥
साक्षिसभ्यविकल्पस्तु भवेद्यत्रोभयोरपि ।
दोलायमानौ यौ सन्धिं कुर्यातां तौ विचक्षणौ ॥
प्रमाणसमता यत्र भेदः शास्त्रचरित्रयोः ।
तत्र राजाज्ञया सन्धि[1]रुभयोरपि शस्यते ॥

**साक्षिसभ्यविकल्पः** किमेते वक्ष्यन्तीत्येवंरूपं ज्ञानम् । **उभयोः** वादिप्रतिवादिनोः । **दोलायमानौ** कथमेतत्कार्यं भविष्यतीति सन्देहयुक्तौ । **प्रमाणसमता** पक्षद्वयेऽपि सभ्यानां प्रमाणं साम्यप्रतिभानम् । **भेदः शास्त्रचरित्रयोः** चरित्रं व्यवहारशास्त्रं तस्य शास्त्रान्तरेण विरोधो व्यवहारस्य व्यवहारान्तरेण विरोध इत्यर्थः । इति प्रत्याकलितनिरूपणम् ॥

अथ क्रियादानान्तरं कर्तव्यं क्रियाभेदादिकं च निर्दिष्टं तत्र क्रियादानमभिधायाह **बृहस्पतिः**

---

१ राजाज्ञया समता पक्षद्वयेपि सभ्यानां भयोरपि–इति **ब**–आदर्शे.

श्रुत्वा पूर्वोत्तरं सभ्यैर्निर्दिष्टा यस्य भावना ।
विभावयेत्प्रतिज्ञातं सोऽखिलं लिखितादिना ॥

**भावना क्रिया। आदि**शब्देन वक्ष्यमाणानामुपसंग्रहः । **याज्ञवल्क्यो**पि (२.७)

ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ।

अर्थ्यते काम्यते इत्यर्थः शोधनीयो अर्थः स यस्यास्ति **सोर्थी।** ततश्च मिथ्योत्तरे साधयितृत्वादर्थी कारणप्राङ्न्यायोत्तरयोः प्रतिवादी कारणप्राङ्न्यायसाधनकत्वेनार्थी। अयं **चार्थी प्रतिज्ञातार्थस्य** साधनीयार्थस्य **साधनं** प्रमाणं **सद्यो**ऽविलम्बेन **लेखयेदि**त्यर्थः । **व्यासः**

पूर्ववादेऽभिलिखितं यावत्स्यात्तदशेषतः ।
अर्थी तृतीयपादे तु क्रियया प्रतिपादयेत् ॥

**पूर्ववाद**ग्रहणमुत्तरस्याप्युपलक्षणम् । **क्रियया** प्रमाणेन । क्रियाभेदान्दर्शयति **बृहस्पतिः**

द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा ।
एकैकानेकधा भिन्ना मुनिभिस्तत्त्वदर्शिभिः ॥
साक्षिलेख्यानुमानं तु मानुषी त्रिविधा क्रिया ।
धटाद्या धर्मजान्त्या च दैवी नवविधा स्मृता ॥

अत्र भुक्तेः पृथगनिर्देशोऽनुमानेऽन्तर्भावात् । साक्ष्यादिभेदनिरूपणं तत्प्रकरणे करिष्यते । **कात्यायनः** (श्लो. २१४)

साक्षिणो लिखितं भुक्तिः प्रमाणं त्रिविधं विदुः ।

दिव्यापेक्षया साक्ष्यादीनां प्राबल्यमाह **याज्ञवल्क्यः** (२.२२)

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥

**एषामन्यतमस्याप्यभावे** दिव्येषु धटादिष्वन्यतमं प्रमाणत्वेन ग्राह्यमिति शास्त्रविद्भिरुच्यत इत्यर्थः । **कात्यायनो**प्यनेनैवाभिप्रायेणैकस्मिन्वस्तुनि ममेदं ममेदमिति विवदमानयोर्युगपत्सभामागतयोरेकेन सा-

क्ष्यादिप्रमाणावलम्बने अपरेण दिव्यावलम्बने साक्ष्यादिकमेव ग्राह्यम् । तथा सुवर्णशतमस्मिन्दिने इयत्या वृद्ध्या गृहीतं तदिदानीं मूलं वृद्धिं च न प्रयच्छतीत्यभियोगे प्रत्यर्थिना त्वपलापे कृते ऋणग्रहणे यदि साक्षिणः स्युः संख्यायां वृद्धिविशेषे वा न स्युस्तदाहं दिव्येन संख्यादिकं साधयिष्यामीत्यर्थिनोक्तेपि न तत्र दिव्यं ग्राह्यं स्थालीपुलाकन्यायेन संख्यावृद्धिविशेषयोर्निश्चयसम्भवादित्याह ( कात्या. २१८–२१९ )

यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् ।
मानुषीं तत्र गृह्णीयान्न तु दैवीं क्रियां नृपः ॥
यद्येकदेशप्राप्तापि क्रिया विद्येत मानुषी ।
सा ग्राह्या न तु पूर्णापि दैविकी वदतां नृणाम् ॥

**याज्ञवल्क्यो**ऽप्येकदेशे साक्ष्यादिसम्भवे दिव्यं न ग्राह्यमित्यभिप्रायेण सुवर्णरत्नाद्यनेकपदार्थविषयकेऽभियोगे प्रत्यर्थिना सर्वेषामपलापे साक्ष्यादिना यद्येकदेशमर्थी साधयति अवशिष्टं तु दिव्येन सिसाधयिषति तदा राजार्थिनं दिव्यमकारयित्वा तस्मै सुवर्णरत्नादिकं सर्वमपि प्रत्यर्थिना दापयेदिति । यत्तु भाषालेखनकाले न लेखितं पश्चादार्थिनोक्तं तत्तु न दापयेदित्याह ( या. २. २० )

निह्नुते लिखितेनैकमेकदेशविभावितः ।
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदिते ॥ इति ।

न च लिखितापेक्षया न्यूनेऽभ्यधिके वा साक्षिभिरुक्ते कृत्स्नस्यापि साध्यस्य न सिद्धिरित्येतदर्थबोधकं यद्

ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् ।
ऊने वाभ्यधिके वार्थे प्रोक्ते साध्यं न सिध्यति ॥

इति **कात्यायन**वचनं ( श्लो. ३९६ ) तद्विरोध इति वाच्यं, यत्रार्थिना सर्वस्मिन्प्रतिज्ञातेर्थे प्रमाणत्वेनोपन्यस्तैः साक्षिभिरेकदेशः साध्यते तद्विषयत्वात्। **याज्ञवल्क्य**वचनस्य त्वेतद्व्यतिरिक्तविषयत्वात्। साहसादौ तु सकलार्थसाधकत्वेनोपन्यस्तैरपि साक्षिभिरेकदेशस्याप्यभिधाने सकलार्थसिद्धिरुक्तानेनैव ।

साध्यार्थांशेऽपि गदिते साक्षिभिः सकलं भवेत् ।
स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकीर्तितम् ॥ इति ।

**साहस**शब्देन वाक्पारुष्यादीनां ग्रहणम् । यत्तु साक्षिणा यावानंशोऽभिहितस्तावत एव सिद्धिर्भवतीति बोधकं

अनेकार्थाभियोगेपि यावत्संसाधयेद्धनी ।
साक्षिभिस्तावदेवासौ लभते साधितं धनम् ॥ इति

**कात्यायन**वचनं (श्लो. ४७३) तत्पित्रादिकृतर्णानभिज्ञेन पुत्रादिना दातव्यं यत्र पित्राद्यृणं तद्विषयम् । तत्र पुत्रादेरपलापित्वाभावेन निर्दोषत्वात् ॥ साक्षिलेख्ययोर्लेख्यं प्रबलमित्यप्याह **स** एव (कात्या. श्लो. २२३)

क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिणः ॥

तथा

पूगश्रेणीगणादीनां या स्थितिः परिकीर्तिता ।
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ॥ (कात्या. श्लो. २२५)

कचित्साक्षिप्राबल्यमाह **स** एव (कात्या. श्लो. २२७–२२८)

दत्त्वादत्ते तथादत्ते स्वामिनां निर्णये सति ।
विक्रयादानसम्बन्धे क्रीत्वा धनमनिच्छति ॥
द्यूते समाह्वये चैव विवादे समुपस्थिते ।
साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ॥

**दत्त्वादत्ते** इदं तुभ्यं दत्तमित्युक्त्वा असमर्पिते । **आदत्ते** दत्त्वा पुनस्तस्मादाच्छिद्य गृहीते । ददातेस्तकारादेशाभावश्छान्दसः । **स्वामिनां निर्णये सति** स्वामिविषयके निर्णये सति तद्विषयकविवादे इत्यर्थः । **क्रीत्वा धनं** मूल्यरूपं **अनिच्छति** दातुमिति शेषः । कचिद्भुक्तेः प्राबल्यमाह **स** एव (कात्या. श्लो. २२६)

द्वारमार्गक्रियाभोगजलवाहादिके तथा ।
भुक्तिरेव हि गुर्वी स्यान्न लेख्यं न च साक्षिणः ॥ इति ।

**द्वारक्रिया** जननिःसरणप्रवेशरूपा **मार्गक्रिया** गवादिनिःसरणमार्गः। भुज्यत इति **भोगो** गृहक्षेत्रादिः। **जलवाहो** जलनिःसरणमार्गः। क्वचिद् दिव्यप्राबल्यमाह **बृहस्पतिः**

मणिमुक्तानाणकानां कूटकृन्न्यासहारकः।
हिंसकोन्याङ्गनासेवी परीक्ष्याः शपथैः सदा॥
महापापाभिशापेषु निक्षेपहरणे तथा।
दिव्यैः कार्यं परीक्षेत राजा सत्स्वपि साक्षिषु॥

**कात्यायनो**ऽपि (श्लो. २३१, २३२)

समत्वं साक्षिणां यत्र दिव्यैस्तत्रापि शोधयेत्।
प्राणान्तिकविवादेषु विद्यमानेषु साक्षिषु॥
दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः।
उत्तमेषु च सर्वेषु साहसेषु विचारयेत्॥
सद्भावं दिव्यदृष्टेन सत्सु साक्षिषु वै **भृगुः**॥ इति।

**समत्वं** सादृश्यं गुणैः संख्यया च। अन्यानपि दिव्यविषयानाह **बृहस्पतिः**

चिरन्तनोपांशुकृते चिरनष्टेषु साक्षिषु।
प्रदुष्टेषु समानेषु दिव्यैः कार्यं विशोधयेत्॥

**चिरन्तनोपांशुकृते** चिरन्तने रहःकृते च। **व्यासः**

न मयैतत्कृतं लेख्यं कूटमेतेन कारितम्।
अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयम्॥

**अधरीकृत्य** अनादृत्य। **अर्थे** तस्मिन्विषये। **नारदः** (ऋणादान, २४१, २४७, २४२)

अरण्ये विजने रात्रावन्तर्वेश्मनि साहसे।
न्यासापह्नवने चैव दिव्या सम्भवति क्रिया॥
यदा साक्षी न विद्येत विवादे वदतां नृणाम्।
तदा दिव्यैः परीक्षेत शपथैश्च पृथग्विधैः॥

स्त्रीणां शीलाभियोगे च स्तेयसाहसयोरपि ।
एष एव विधिर्दृष्टः सर्वार्थापह्नवेषु च ॥

**बृहस्पतिः**

लिखिते साक्षिवादे च सन्दिग्धं यत्र जायते ।
अनुमाने च संभ्रान्ते तत्र दिव्यं विशोधनम् ॥
नृपद्रोहे साहसे च कल्पयेद् दैविकीं क्रियाम् ।

क्वचित्साक्षिदिव्यविकल्पमाह[1] (कात्या. श्लो. २२९,२३३)

प्रक्रान्ते साहसे वादे पारुष्ये दण्डवाचिके ।
बलोद्भूतेषु कार्येषु साक्षिणो दिव्यमेव च ॥
ऋणे लेख्यं साक्षिणो वा युक्तिलेशादयोऽपि वा ।
दैविकी वा क्रिया प्रोक्ता प्रजानां हितकाम्यया ॥

**युक्तिलेशः** युक्त्येकदेशः। **आदि**शब्देन चोदनाप्रतिकालस्य ग्रहणम्। तस्य स्वरूपमनुमाननिरूपणप्रकरणे दर्शयिष्यते । व्यक्तिबहुत्वाभिप्रायेण बहुवचनम् । अत्र वाचिकपारुष्यग्रहणेन तीव्रस्य सुरापोसीत्येवमाद्याक्रोशरूपस्य वाक्पारुष्यस्य ग्रहणम् । अल्पे तु वाक्पारुष्ये

वाक्पारुष्ये च भूमौ च दिव्यं न परिकल्पयेत् ।

इति **कात्यायनेन** (श्लो.२३९) दिव्यस्य निषेधात् । अत्र कात्यायनवचने भूमिग्रहणं स्थावरमात्रस्योपलक्षणम् । तथा च **पितामहः**

स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत् । इति ।

अयं च दिव्यनिषेधः साक्ष्यादिसद्भावविषयः । यत उक्तं **ते**नैव

साक्षिभिर्लिखितेनाथ भुक्त्या चैतान्प्रसाधयेत् । इति (कात्या.२४०) ।

यदा तु न साक्ष्यादिसद्भावस्तदा दिव्यं ग्राह्यमेव । अन्यथा तस्य विवादस्य कदाचिदपि निर्णयाभावप्रसङ्गात् । न च ऋणादानाद्येष्वपि विवादेषु साक्ष्यादिसद्भावे दिव्याद्यग्रहणं साक्षाद्यभावे दिव्यग्रहणमिति स्थावरविवादे तदपेक्षया विशेषाभावादेतद्वचनमपार्थकं भविष्यतीति शङ्कनी-

---

१ विकल्पमाह स एव–इति ब.

यम् । यथा ऋणादिषु विवादेषु साक्षिसद्भावेपि प्रतिवादिना पराजये दण्डविशेषमभ्युपगम्य दिव्यं मया कर्तव्यमित्यभिधाने साक्षिषु क्रोधलोभादिपुरुषदोषाणां सम्भावितत्वाद् दिव्यस्य तु दोषराहित्येन यथावस्थितार्थज्ञापनसमर्थत्वादस्मिन्नेव विषये दैवसाध्ये पौरुषेयीं न लेखाद्यां प्रयोजयेदिति **कात्यायने**न लिखिते साक्ष्यादीनामग्राह्यत्वाभिधानाच्च दिव्यं ग्राह्यं भवति तथा स्थावरविषयेषु विवादेषु साक्षिसद्भावे प्रतिवादिना दण्डमभ्युपगम्य दिव्यं कर्तव्यमित्यभिधानेपि न दिव्यं ग्राह्यमित्येतद्विशेषावबोधनार्थत्वात् । यत्र त्वल्पकार्यत्वान्न दिव्यप्रवृत्तिर्न च साक्ष्यादिसद्भावस्तत्र राजेच्छैव प्रमाणमित्याह **पितामहः**

लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः ।
न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः ॥
निश्चेतुं ये न शक्याः स्युर्वादाः सन्दिग्धरूपिणः ।
तेषां नृपः प्रमाणं स्यात्स सर्वस्य प्रभुर्यतः ॥ इति ।

इति श्रीकोदण्डपरशु···व्यवहारविवेकोद्द्योते क्रियादानानन्तरकर्तव्यादिनिरूपणम् ॥ ३

अथ साक्षिनिरूपणम् । तत्र साक्षिस्वरूपं दर्शयति **मनुः** (८.७४)

समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिध्यति । इति ।

चक्षुषा श्रोत्रेण वा येन विवादविषयः पूर्वं प्रमितः स तत्र साक्षीत्यर्थः । **विष्णुः** (८.१३)

समक्षदर्शनात्साक्ष्यं श्रवणाद्वा । इति ।

साक्षिभेदान्दर्शयति **बृहस्पतिः**

लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ ।
यादृच्छिकश्चोत्तरश्च कार्यमध्यगतोऽपरः ॥
नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः । इति ।

**अध्यक्षः** प्राड्विवाकः । अध्यक्षग्रहणं सभ्यलेखकादीनामुपलक्षणम् । यत आह **कात्यायनः** (श्लो. ३५५)

लेखकः प्राड्विवाकश्च सभ्य[1]श्चैवानुपूर्वशः ।
नृपे पश्यति तत्कार्यं साक्षिणः समुदाहृताः ॥ इति ।

गणकस्य साक्षित्वं दूतकः खटिकाग्राहीति वक्ष्यमाण**बृहस्पति**वचनादवगन्तव्यम् । **ग्राम**ग्रहणमुपलक्षणम् । तेन यो विवादविषयो येन प्रमितः स तत्र साक्षित्वेनाकृतोऽपि साक्षी भवतीति सिध्यति । इतरथा वेतनादानादिषु विवादेषु लिखितादीनामसम्भवेन साक्ष्यभावप्रसङ्गः । एतदेवाभिप्रेत्योक्तं **मनुना** (८. ७६)

यत्रानिबद्धो वीक्षेत शृणुयाद्वापि किञ्चन ।
पृष्टस्तत्रापि तद् ब्रूयाद्यथादृष्टं यथाश्रुतम् ॥ इति ।

**अनिबद्धः** अकृतः । लिखितादीनां नवानां स्वरूपं नृपादीनां त्रयाणां यत्र स्थले साक्षित्वं तत्स्थलं च दर्शितं **तेनैव**

जातिनामाभिलिखितं येन स्वं पित्र्यमेव च ।
निवासश्च स विज्ञेयः साक्षी लिखितसंज्ञकः ॥
अर्थिक्रियां क्रियाभेदैस्तस्य कृत्वा ऋणादिके ।
प्रत्यक्षं लेख्यते यश्च लेखितः स उदाहृतः ॥
कुड्यव्यवहितो यश्च श्राव्यते ऋणिभाषितम् ।
विनिह्नुते यथाभूतं गूढः साक्षी स कीर्तितः ॥
आहूय यः कृतः साक्षी ऋणन्यासक्रियादिके ।
स्मार्यते च मुहुर्यश्च स्मारितः सोऽभिधीयते ॥
विभागदान आधाने ज्ञातिर्यत्रोपदिश्यते ।
द्वयोः समानो धर्मज्ञः कुल्यः स परिकीर्तितः ॥
अर्थिप्रत्यर्थिवचने शृणुयात्प्रेषितस्तु यः ।
उभयोः संमतः साधुर्दूतकः स उदाहृतः ॥
क्रियमाणे तु कर्तव्ये यः कश्चित्स्वयमागतः ।
अत्र साक्षी त्वमस्माकमुक्तो यादृच्छिको मतः ॥

---

१ सभ्यश्चैवा० इति अ-क.

यत्र साक्षी दिशं गच्छन्मुमूर्षुर्वा यथाश्रुतम् ।
अन्यं संश्रावयेत्तं तु विद्यादुत्तरसाक्षिणम् ॥
उभाभ्यां यस्य विश्वस्तं कार्यं वापि निवेदितम् ।
गूढचारी स विज्ञेयः कार्यमध्यगतस्तथा ॥
अर्थिप्रत्यर्थिनोर्वाक्यं यच्छ्रुतं भूभृता स्वयम् ॥
स एव तत्र साक्षी स्याद् विसंवादे द्वयोरपि ॥
निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ।
अध्यक्षः सभ्यसहितः साक्षी स्यात्तत्र नान्यथा ॥
मुषितं घातितं यच्च सीमायाश्च समन्ततः ।
अकृतोऽपि भवेत्साक्षी ग्रामस्तत्र न संशयः ॥

**जाति**र्ब्राह्मणत्वादिका । **नाम** देवदत्तादि । **स्वं** आत्मीयम् । **पित्र्यं** पितृसम्बन्धि । **निवासो** वासस्थानं वाराणस्यादिः । **अर्थिक्रिया**-मित्यस्यायमर्थः । **क्रियाभेदैः** प्रमाणविशेषैराप्तवाक्यादिभि**रर्थिक्रियां** कृत्वा अर्थिसम्बन्धिनः कार्यस्य निश्चयं कृत्वा तस्यार्थिनः सम्बन्धिनि ऋणादिके प्रत्यक्षं यो लेख्यते स लेखित उदाहृत इति । **विनिह्नुते** न प्रकाशयति । **यथाभूतं** यथाश्रुतमर्थम् । **न्यासक्रिया** न्यासलक्षणं कार्यम् । **आधाने** आधौ बन्धके इति यावत् । **प्रेषितः** अर्थिना प्रत्यर्थिसमीपं प्रत्यर्थिना चार्थिसमीपं चेति शेषः[1] । **कर्तव्ये** ऋणदानादि-रूपे कार्ये । **दिशं** देशान्तरम् । **उभाभ्यां यस्ये**त्यस्यायमर्थः । **उभाभ्या**मर्थिप्रत्यर्थिभ्यां **यस्य विश्वस्तं** यस्य वै तत्कार्यं प्रकाशनी-यमित्येवंरूपो विश्वासः कृतः **कार्यं** वाभिहितं स तथा तेन रूपेणाप्रका-शकत्वेन स्थितो गूढचारी कार्यमध्यगतो विज्ञेय इति । प्राड्विवाकसभ्य-ग्रहणं गणकलेखकयोरुपलक्षणम् । **सभ्यसहित** इति सभ्यादीनामपि पुनर्न्याये साक्षित्वमित्यभिधानार्थं न तु सभ्यादिविशिष्टस्यैव प्राड्विवा-कस्य साक्षित्वबोधनार्थं

1 समीपं चेत्सन्निवेशः-इति क.

लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः ।

इति प्रागुदाहृत**कात्यायन**वचनविरोधप्रसङ्गात् ॥

एते च साक्षिणः कियन्तो ग्राह्या इत्यपेक्षायामाह **बृहस्पतिः**

नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा ।
उभौ वा श्रोत्रियौ ख्यातौ नैकं पृच्छेत्कदाचन ॥

**श्रोत्रियो**ऽत्र साङ्गवेदाध्यायित्वे सति श्रौतस्मार्तकर्मानुष्ठायी । लिखितादिषु कश्चिदेकोऽपि ग्राह्य इत्याह **स** एव

लिखितौ द्वौ तथा गूढौ त्रिचतुःपञ्च लेखिताः ।
यादृच्छाः स्मारिताः कुल्यास्तथा चोत्तरसाक्षिणः ॥
दूतकः खटिकाग्राही कार्यमध्यगतस्तथा ।
एक एव प्रमाणं स्यान्नृपोऽध्यक्षस्तथैव च ॥

**खटिकाग्राही** गणकः । **एक एवे**त्येवकारो न द्व्याद्यपेक्षा कर्तव्येत्येवमर्थः ।

यत्तु—त्र्यवराः साक्षिणो ज्ञेयाः—(या.२.६९) इति नियमः स लिखितादिव्यतिरिक्तलेखितयादृच्छिकादिविषयः । यादृच्छिकादीनां श्रोत्रियत्वे तेषु द्वावपि ग्राह्यौ उभौ वा श्रोत्रियौ ख्यातावित्युदाहृतवचनात् । लिखितादीनामुभयानुमतत्वे एकस्यापि ग्रहणमाह **याज्ञवल्क्यः** (२. ७२)

उभयानुमतः साक्षी भवेदेकोऽपि धर्मवित् ।

**नारदो**ऽपि (ऋणादान १९२)

उभयानुमतो यः स्याद् द्वयोर्विवदमानयोः ।
स साक्ष्येकोऽपि साक्षित्वे प्रष्टव्यः स्यात्तु संसदि ॥

आप्तत्वेन राजादिभिरवधारित एकोऽपि साक्षीत्याह **व्यासः**

शुचिक्रियश्च धर्मज्ञः साक्षी यस्त्वनुभूतवाक् ।
प्रमाणमेकोऽपि भवेत्साहसेषु विशेषतः ॥ इति ।

निक्षेपादिष्वनाप्तत्वेन प्रागज्ञात एकोऽपि साक्षीत्याह **कात्यायनः** (श्लो. ३५३)

अभ्यन्तरस्थनिक्षेपे साक्ष्यमेकोऽपि वाच्यते ।
अर्थिना प्रहितः साक्षी भवेदेकोऽपि याचिते ॥

**याचितं** विवाहाद्यर्थं याच्ञया गृहीतमाभरणादिकम् । कुण्डलादि-पण्यविवादे एकोऽपि तन्निर्माता साक्षीत्याह **स** एव (कात्या.श्लो. ३५४)

संस्कृतं येन यत्पण्यं तत्तेनैव विभावयेत् ।
एक एव प्रमाणं स विवादे तत्र कीर्तितः ॥

**पण्यं** कुण्डलादिकम् । यादृशाः साक्षिणः कार्यास्तानाह **व्यासः**

धर्मज्ञाः पुत्रिणो मौलाः कुलीनाः सत्यवादिनः ।
श्रौतस्मार्तक्रियायुक्ता विगतद्वेषमत्सराः ॥
श्रोत्रिया न पराधीनाः सूरयश्चाप्रवासिनः ।
युवानः साक्षिणः कार्या ऋणादिषु विजानता ॥

मूलं पूर्ववृत्तान्तस्तद्विदन्तीति **मौलाः** । तदधीते तद्वेद (पा. ४. २. ५९) इत्यण् । **कात्यायनः** ( श्लो. ३४७—८)

प्रख्यातकुलशीलाश्च लोभमोहविवर्जिताः ।
आप्ताः शिष्टा विबुद्धा ये तेषां वाक्यमसंशयम् ॥
विभाव्यो वादिना यादृक् सदृशैरेव भावयेत् ।
नोत्कृष्टं चावकृष्टैस्तु[1] साक्षिभिर्भावयेत्सदा ॥

**आप्ताः** यथाप्रमितार्थवादिनः । **शिष्टाः** निषिद्धकर्माचरणरहिताः । **विबुद्धाः** शास्त्रार्थज्ञानवन्तः । आदिकर्मविवक्षया कर्तरि क्तः (पा.३. ४. ७१) । **विभाव्य** इति । **यादृक्** यज्जातीयः प्रतिवादी **वादिना विभाव्यः** स्वीकारयितव्यः **तत्सदृशैरेव** प्रतिवादिजातीयैरेव **विभावयेत्** अङ्गीकारयेत्सभ्य इति शेषः । **वादिनेत्युपलक्षणं** प्रतिवादिनेत्युपलक्षणम्[2] । प्रतिवादिनापि वादिजातीयैरेवाङ्गीकारयितव्यः । **नारदः** (ऋणादान, १५५)

---

१ 'वावकृष्टैस्तु' इति अ; 'वापकृष्टैस्तत्' इति क. २ 'प्रतिवादि···लक्षणम्' इत्येतन्नास्ति ब–आदर्शे.

श्रेणिषु श्रेणिपुरुषाः स्वेषु वर्गेषु वर्गिणः ।
बहिर्वासिषु बाह्याः स्युः स्त्रियः स्त्रीषु च साक्षिणः ॥

इति । **अवकृष्टैः** हीनजातीयैः । **मनुः** (८. ६८)

स्त्रीणां साक्ष्यं स्त्रियः कुर्युर्द्विजानां सदृशद्विजाः ।
शूद्राश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनयः ॥

श्रेणिपुरुषाणां सत्यपि वर्गित्वे पृथङ्निर्देशो गोबलीवर्दन्यायेन । वर्गिणस्तु दर्शिताः **कात्यायनेन** (श्लो. ३४९-३५०)

लिङ्गिनः श्रेणिपूगाश्च वणिग्व्रातास्तथापरे ।
समूहस्थाश्च ये चान्ये वर्गास्तानब्रवीद् भृगुः ॥
दासचारणमल्लानां हस्त्यश्वायुधजीविनाम् ।
प्रत्येकैकसमूहानां नायका वर्गिणः स्मृताः ॥
तेषां वादः स्ववर्गेषु वर्गिणस्तेषु साक्षिणः । इति ।

जात्यादिसदृशानामेव साक्षित्वाभिधानं सदृशासदृशसम्भवे द्रष्टव्यम् । सदृशानामसम्भवे तु विसदृशा अपि साक्षिणो ग्राह्याः । इदमेवाभिप्रेत्याह **याज्ञवल्क्यः** (२.६८-६९)

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥
त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः ।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ॥ इति ।

जातिमनतिक्रम्य **यथाजाति** । जातयो मूर्धावसिक्ताद्या अनुलोमजाः सूताद्याः प्रतिलोमजाश्च । **यथावर्णं** वर्णमनतिक्रम्य । वर्णा ब्राह्मणादयः । **सर्वे** सजातीया असजातीयाः सवर्णा असवर्णाश्च । साक्षित्वे वर्ज्यानाह **याज्ञवल्क्यः** (२.७०-७१)

स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः ।
रङ्गावतारिपाषण्डिकूटकृद्विकलेन्द्रियाः ॥

पतिताप्तार्थसम्बन्धिसहायरिपु[1]तस्कराः ।
साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः ॥

**बालो** व्यवहारोपयोगिविवेकरहितः । **वृद्धो** व्यवहारोपयोगिकरणपाटवरहितः । **कितवो** द्यूतकारः । **मत्तः** पानादिकृतचित्तवैकल्ययुक्तः । **उन्मत्तो** भूताद्याविष्टः । **अभिशस्तो** ब्रह्महत्याद्यभियोगवान् । **रङ्गावतारी** नर्तकः । **पाषण्डिनः** श्रुतिस्मृतिविरुद्धमार्गानुयायिनः । **कूटकृत्** कपटलेख्यादिकारी । **आप्तः** अर्थिनो मित्रम् । **अर्थसम्बन्धी** विवादविषयीभूतार्थसम्बन्धी । **सहायः** सदा तत्कार्यकरणासक्तः । **रिपुः** प्रत्यर्थिनः शत्रुः । **साहसी** प्राणिव्यापादनादिकारी । **दृष्टदोषः** दृष्टासत्यवचनः । **निर्धूतः** स्वजनैस्त्यक्तः । **आदिशब्देन** दासादीनां ग्रहणम् । **मनुः** ( ८.६५-६६ )

न साक्षी नृपतिः कार्यो न च कारुकुशीलवौ ।
न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः ॥
नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत् । इति ।

**कारुः** शिल्पी । **कुशीलवो** नटः । **लिङ्गस्थो** यत्यादिः । **सङ्गेभ्यो विनिर्गतः** परित्यक्तपित्रादिगुरुजनसंसर्गः । **अध्यधीनो** बन्धकीकृतः । **वक्तव्यो** निन्द्यः । अयं नृपतेः साक्षित्वनिषेध ऋणादानादिकाले साक्षित्वकरणे न तु वस्तुतत्त्वाभिज्ञस्य तस्य विवादकालीने साक्षित्वे पूर्वोदाहृत**बृहस्पति**वचनविरोधापत्तेः । श्रोत्रियस्य साक्षित्वनिषेध एकश्रोत्रियविषयः वक्ष्यमाण**नारद**वचनानुरोधात् । श्रोत्रियमात्रविषयत्वे पूर्वोदाहृत**बृहस्पति**वचनविरोधप्रसङ्गाच्च । **नारदः** (ऋणादान, १७८-१८७, १५६)

दासनैकृतिकाश्रद्धवृद्धस्त्रीबालचाक्रिकाः ।
मत्तोन्मत्तप्रमत्तार्तकितवग्रामयाजकाः ॥

---

१ सहायस्तेयतस्कराः-इति क.

महापथिकसामुद्रवणिक्प्रव्रजितातुराः ।
व्यङ्गैकश्रोत्रियाचारहीनक्लीबकुशीलवाः ॥
नास्तिकव्रात्यदाराग्नित्यागिनोऽयाज्ययाजकाः[1] ।
एकस्थाली सहायारिचरज्ञातिसनाभयः ॥
प्राग्दृष्टदोषशैलूषविषजीव्याहितुण्डिकाः ।
गरदाग्निदकीनाशशूद्रापत्युपपातकाः ॥
क्लान्तसाहसिकश्रान्तनिर्धूतान्तावसायिनः ।
भिन्नवृत्तोऽसमावृत्तजडतैलिकमूलिकाः ॥
भूताविष्टनृपद्विष्टवर्षनक्षत्रसूचकाः ।
अघशंस्यात्मविक्रेतृहीनाङ्गभगवृत्तयः ॥
कुनखी श्यावदन् श्वित्रिमित्रध्रुक्शठशौण्डिकाः ।
ऐन्द्रजालिकलुब्धोग्रश्रेणीगणविरोधिनः ॥
वधकश्चित्रकः शङ्खः पतितः कूटकारकः ।
कुहकः प्रत्यवसितस्तस्करो राजपूरुषः ॥
मनुष्यपशुमांसास्थिमधुक्षीराम्बुसर्पिषाम् ।
विक्रेता ब्राह्मणश्चैव द्विजो वार्धुषिकश्च यः ॥
च्युतः स्वधर्मात्कुलिकः सूचको हीनसेवकः ।
पित्रा विवदमानश्च भेदकृच्चेत्यसाक्षिणः ॥
श्रेण्यादिषु तु वर्गेषु कश्चिच्चेद् द्वेष्यतामियात् ।
तस्य तेभ्यो न साक्ष्यं स्याद् द्रष्टारः सर्व एव ते ॥

**नैकृतिकः** परच्छिद्रान्वेषणशीलः । **अश्रद्धः** श्रद्धारहितः । **चाक्रिको** वैतालिकः । **प्रमत्तः** सदानवहितचित्तः । **आर्तो** दुःखितः । **महापथिको** महापथगामी । **सामुद्रवणिक्** वहित्रयायी । **आतुरो** रोगी । **व्यङ्गः** विगताङ्गः । **आचारहीनः** आचाररहितः । **एकस्थाली** स्थालीशब्देनात्र स्थाल्यां कृतभोजनार्थान्नपाको गृह्यते । एका स्थाली यस्य

1 नास्तिकब्राह्मदाराग्नि० इति अ.

स एकस्थाली । समासान्तविधेरनित्यत्वान्नात्र कप् । अर्धपिप्पलीत्यादिवन्न ह्रस्वः । **अरिचरः** पूर्वं शत्रुः । भूतपूर्वे चरट् (पा.५. ३. ५३)। **कृत्यकल्पतरौ** तु अरिधर इति पठित्वा अरिधरः शस्त्रधारीति व्याख्यातम्। **ज्ञातयः** सगोत्राः **सनाभयो** मातुलतत्सुतमातृष्वस्रीयादयः । **शैलूषः** स्त्रीणां नर्तयिता । **विषजीवी** विषविक्रयजीवी । **आहितुण्डिकः** सर्पग्राही । **गरदः**-विषदः।**अग्निदो** गृहादिदाहकर्ता । **कीनाशः** कृपणः । **उपपातकः** पातकयुक्तः । उप समीपे पातकं यस्य स तथेति विग्रहः । **क्लान्तो** अतिखिन्नः । **अश्रान्तो**ऽनवरतकर्मकारी । **निर्धूतो** बान्धवैर्बहिष्कृतः । लोकभयशून्य इति प्राच्याः । **अन्तावसायी** नापितः । **भिन्नवृत्तः** कुत्सिताचारः । **असमावृत्तः** अकृतसमावर्तनः । **जडो** मूर्खः । **तैलिकः** तिलविक्रयाजीवी । **मूलिको** मूलमन्त्र विप्रलम्भस्तत्कारीत्युक्तं **कृत्यकल्पतरौ** । **वर्षसूचको** वृष्टिसूचकः । **नक्षत्रसूचकः** ज्योतिषिकः । **अघशंसी** परकीयपापप्रकाशनकर्ता । **हीनाङ्गो** न्यूनाङ्गः । **भगवृत्ति**र्भार्यादास्यादिसम्भोगशुल्कोपजीवी । **शठो**ऽत्र खलः । **शौण्डिकः** सुराविक्रयी । **शाङ्गो** वृषभनर्तनजीवी । **कुहको** दाम्भिकः । **प्रत्यवसितः** प्रव्रज्यातश्च्युतः । **कुलिकः** कुलं ब्राह्मणादिसङ्घस्तत्र नियुक्तः ब्राह्मणादिगणाधिकारीति यावत् । **सूचको** राज्ञा परदोषनिवेदने नियुक्तः । **भेदकृत्** मित्रादिप्रीतिभङ्गकर्ता । **श्रेण्यादि**ष्वित्यस्यायमर्थः । यस्य येषु श्रेण्यादिष्वेकः शत्रुस्तस्य विवादे तेषु श्रेण्यादिषु निविष्टा अन्येपि न साक्षिणो भवन्तीति । **कात्यायनः** (श्लो. ३६१–३६४)

तद्वृत्तिजीविनो ये च तत्सेवाहितकारिणः ।
तद्बन्धुसुहृदो भृत्या आप्तास्ते तु न साक्षिणः ॥
मातृष्वसृसुताश्चैव सोदर्यासुतमातुलाः ।
एते सनाभयस्तूक्ताः साक्ष्यं तेषु न योजयेत् ॥
कुल्याः सम्बन्धिनश्चैव विवाह्यो भगिनीपतिः ।
पिता बन्धुः पितृव्यश्च श्वशुरो गुरवस्तथा ॥

नगरग्रामदेशेषु नियुक्ता ये पदेषु च ।
वल्लभांश्च न पृच्छेयुरुक्तास्ते राजपूरुषाः ॥

**बृहस्पतिः**

मातुः पिता पितृव्यश्च भार्याया भ्रातृमातुलौ ।
भ्राता सखा च जामाता सर्ववादेष्वसाक्षिणः ॥
परस्त्रीपानसक्ताश्च कितवाः सर्वदूषकाः ।
उन्मत्तार्ताः साहसिका नास्तिकाश्च न साक्षिणः ॥

**शङ्खलिखितौ** । शुल्कगुल्माधिकृतौ दूतो वेष्टितशिराः स्त्रियश्च सर्वा गुरुकुलवासिनः परिव्राजकवानप्रस्थनिर्ग्रन्थाः शङ्खव्यालग्राहिण इति । अत्रासाक्षिण इत्यनुषङ्गः । शुल्काधिकृतः शुल्कग्रहणस्थलाधिकारी । **गुल्माधिकृतो** गुल्मः पदातिसमूहस्तदधिकारी । **दूतो** दासः । **गुरुकुलवासिनः** ब्रह्मचारिणः । **निर्ग्रन्थः** क्षपणकः ॥ **नारदः** ( ऋणादान, १५७ )

असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः ।
वचनाद् दोषतो भेदात्स्वयमुक्तिर्मृतान्तरः ॥

एतांश्च विविच्य दर्शयति स एव (नारद, ऋणादान,१५८–१६२)

श्रोत्रियाद्या वचनतः स्तेनाद्या दोषदर्शनात् ।
भेदाद्विप्रतिपत्तिः स्याद्विवादे यत्र साक्षिणाम् ॥
स्वयमुक्तिरनिर्दिष्टः स्वयमेवैत्य यो वदेत् ।
मृतान्तरोऽर्थिनि प्रेते मुमूर्षुश्राविताहृते ॥
श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः ।
असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः ॥
स्तेनाः साहसिकाश्चण्डाः कितवा वधकास्तथा ।
असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते ॥
राज्ञा परिगृहीतेषु साक्षिष्वेकार्थनिश्चये ।
वचनं यत्र भिद्येत ते स्युर्भेदादसाक्षिणः ॥

स्मृतिमत्साक्षिसाम्यं तु विवादे यत्र दृश्यते ।
सूक्ष्मत्वात्साक्षिधर्मस्य साक्ष्यं व्यावर्तते ततः ॥
अनिर्दिष्टस्तु साक्षित्वे स्वयमेवैत्य यो वदेत् ।
स्वयमुक्तिः स शास्त्रेषु न स साक्षित्वमर्हति ॥
योर्थः श्रावयितव्यः स्यात्तस्मिन्नसति साक्षिणि ।
क तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः ॥

**श्रोत्रियाद्या वचनतः** असाक्षिण इति सम्बन्धः । यत्र विवादे साक्षित्वेनोक्तानां विप्रतिपत्तिर्विरुद्धार्थाभिधायिता तत्र ते भेदादसाक्षिणो भवन्तीति **भेदाद्विप्रतिपत्ति**रित्यस्यार्थः । **अनिर्दिष्टः** साक्षित्वेनानुक्तः । **एत्य** आगत्य । अयमत्र साक्षीत्येवंविधज्ञानवान् यः स आन्तरः । आन्तरो मृतो यस्य स **मृतान्तरः** । योऽर्थी यं साक्षित्वेन जानाति तस्मिन्नर्थिनि मृते स मृतान्तरो भवन्न साक्षी भवति । **मुमूर्षुणा** प्रत्यासन्नमरणेन । मुमूर्षुग्रहणस्योपलक्षणत्वात् स्वस्थेन वा पित्रादिनायमस्मिन्नर्थे साक्षीति यं साक्षित्वेन पुत्रादयो ज्ञापिताः स मृतान्तरोऽपि सन्साक्षी भवतीति **मृतान्तरोऽर्थिनी**त्यस्यार्थः । मुमूर्षुग्रहणस्योपलक्षणत्वमभिप्रेत्योक्तं **ते**नैव

श्रावितो नातुरेणापि यस्त्वर्थो धर्मसंहितः ।
मृतेऽपि तत्र साक्षी स्यात् स्वद्युचा (? निक्षेपा) न्वाहितादिषु ।

**आदि**शब्देन याचितकादीनां ग्रहणम् । **मुमूर्षुश्रावित** इत्यत्र प्रयोज्यव्यापारव्याप्ये कर्मणि क्तप्रत्ययः । 'कथितेऽभिहिते त्वविधिस्त्वमतिर्गुणकर्मणि लादिविधिः सपरे ध्रुवचेष्टितयुक्तिषु चाप्यगुणे तदनल्पमतेर्वचनं स्मरत' इति **महाभाष्यो**पनिबद्धे **वार्तिके** गत्यर्थाकर्मकेतरधातुप्रकृतिकणिजन्तेभ्यः कथिते प्रधानकर्मणि गुणकर्मण्यप्रधानकर्मणि च पर्यायेण लकारादयो भवन्तीत्यभिधानात् ॥ पूर्वोक्तानां वाचनिकाद्यसाक्षिणां स्पष्टीकरणार्थं **श्रोत्रियास्तापसा** इत्यादि वाक्यकदम्बकम् । अत्र श्रोत्रियास्तापसाश्च ये परब्रह्मैकतानमानसा बाह्यपदार्थानासक्तचि-

त्वास्ते विवक्षिताः। तेषां विप्रतिपन्नार्थस्मरणासम्भवात् सकलश्रोत्रियतापसग्रहणे पूर्वोदाहृतबृहस्पतियाज्ञवल्क्यवचनविरोधाच्च । **वचनात्** न तु दोषतः। **नात्र हेतुः** दोषरूप इत्यर्थः। **चण्डाः** अत्यन्तकोपनाः। **वधकाः** प्राणिहिंसाकारिणः। **एकार्थनिश्चये** कर्तव्ये इति शेषः। वचनभेदमात्रेण नासाक्षित्वं किंतु चिरानुभूतार्थस्मरणादिगुणैः संख्यया च समानां वचनभेदे के सत्यवादिनः के मृषावादिन इति विवेचनासम्भवेन साक्षित्वस्य दुर्ज्ञानत्वात्तेषामसाक्षित्वमित्येतदर्थप्रतिपादकं **स्मृतिमत्साक्षिसाम्यं** त्विति वाक्यम्। तेनास्य न पूर्ववाक्यापेक्षया पौनरुक्त्यम्। यत्तु बहुष्वेकस्यान्यथावादे सर्वेषामप्यसाक्षित्वमित्येतदर्थप्रतिपादकं

साक्षिणां लिखितानां च निर्दिष्टानां च वादिना ।
तेषामेकोन्यथावादी भेदात्सर्वे न साक्षिणः ॥ इति

**कात्यायन**वाक्यं (श्लो. ३५९) तत्पक्षेषु साक्षिष्वेकस्याधिकगुणस्यान्यथावादित्वे बहूनामल्पगुणानामधिकगुणविरुद्धार्थाभिधायित्वादसाक्षित्वमधिकगुणस्यैकस्य बहुवाक्यविरुद्धार्थाभिधायित्वादसाक्षित्वमित्येवं ते सर्वेऽसाक्षिण इत्येतद्विषयम्। अन्यथोदाहरिष्यमाण—द्वैधे बहूनामित्येवमादि**याज्ञवल्क्य**वचनविरोधप्रसङ्गात् ( या. २. ७८ )। **स्वयमेवैत्येत्या**ह्वानाभाव उक्तः। अत एव **कात्यायनः** (श्लो. ४०४)

यः साक्षी नैव निर्दिष्टो नाहूतो नैव चोदितः ।
ब्रूयान्मिथ्येति तथ्यं वा दण्ड्यः सोपि नराधमः ॥ इति ।

**योऽर्थः श्रावयितव्य** इत्यस्यायमर्थः। योऽर्थस्त्वयात्र साक्षिवादो वक्तव्य इत्येवंरूपो येनार्थिना साक्षिणि श्रावयितव्यस्तस्मिन्नर्थिनि मृते श्रावयितुरभावेन क्व कस्मिन्ननिर्दिष्टेऽर्थे साक्षित्वं वदत्वित्यतो हेतोर्मृतान्तरो न साक्षीति। असाक्षित्वेनोक्तानामेतेषां क्वचित्साक्षित्वमाह **नारदः** ( ऋणादान, १८८ )

---

१ क–आदर्शे 'वदत्विति' इत्यस्मादनन्तरं कानिचिद्वाक्यानि विसंष्ठुलानि पौर्वापर्यरहितानि 'अपक्षपातिन इति यावत्' इत्यन्तम् ।

असाक्षिणो ये निर्दिष्टा दासनैकृतिकादयः ।
कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः ॥
स्त्रियाप्यसम्भवे कार्यं बालेन स्थविरेण वा ।
शिष्येण बन्धुना वापि दासेन भृतकेन वा ॥
तेषामपि न बालः स्यान्नैको न स्त्री न कूटकृत् ।
न बान्धवो न चारातिर्ब्रूयुस्ते साक्ष्यमन्यथा ॥
बालोऽज्ञानादसत्यात्स्त्री पापाभ्यासाच्च कूटकृत् ।
विब्रूयाद्बान्धवः स्नेहाद् वैरनिर्यातनादरिः ॥

यत्तु

स्त्रियाप्यसम्भवे कार्यं बालेन स्थविरेण वा ।
शिष्येण बन्धुना वापि दासेन भृतकेन वा ॥ इति

**मनुना** ( ८.७० ) स्त्र्यादीनां साक्ष्यभ्यनुज्ञानं कृतं तन्नारदोक्तासत्यवादित्वाद्यसाक्ष्यहेत्वभावनिश्चये साक्ष्यान्तरासम्भवे वेदितव्यम् । स्त्रीसंग्रहणादिष्वपि सर्वेषां साक्षित्वमाह **याज्ञवल्क्यः** ( २.७२ )

सर्वः साक्षी संग्रहणे चौर्यपारुष्यसाहसे ।

अत्र

मनुष्यमारणं चौर्यं परदाराभिमर्शनम् ।
पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम् ॥ इति

वचनात्सत्यपि स्त्रीसंग्रहादीनां साहसत्वे पुनरुपादानं गुप्ततया क्रियमाणानां स्त्रीसंग्रहणादीनां साहसत्वाभावात् तेषां संग्रहार्थम् । **उशना**

दासोऽन्धो बधिरः कुष्ठी स्त्रीबालस्थविरादयः ।
एतेप्यनभिसंबद्धाः साहसे साक्षिणो मताः ॥

**अनभिसम्बद्धाः** अर्थिसम्बन्धरहिताः अपक्षपातिन इति यावत् ।
**मनुनारदौ** ( मनु ८-७२, नारद, ऋणादान, १८९ )

साहसेषु च सर्वेषु स्तेयसंग्रहणेषु च ।
वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ॥

यत्तु

ऋणादिषु परीक्षेत साक्षिणः स्थिरकर्मसु ।
साहसात्ययिके चैव परीक्षा कुत्रचित्स्मृता ॥ इति (कात्या. श्लो. ३६५)

परीक्षाभिधानं तत्सम्भावितासत्यवादित्वदोषविषयम् । यतः परीक्षाभाव उक्तस्तेनैव ( कात्या. श्लो. ३६६ )

व्याघाते च नृपाज्ञायाः संग्रहे साहसेषु च ।
स्तेयपारुष्ययोश्चैव न परीक्षेत साक्षिणः ॥ इति ॥

साक्षिणां सभायामागतानां प्रत्यर्थी यदि दोषवत्त्वं जानाति तदा दोषोद्भावनं कुर्यात् । अथाविद्यमानान्दोषानारोपयति तदा राज्ञा प्रत्यर्थी दण्डनीयः । तथा च **बृहस्पतिः**

साक्षिणोऽर्थिसमुद्दिष्टान् सत्सु दोषेषु दूषयेत् ।
अदुष्टान्दूषयन्वादी तत्समं दण्डमर्हति ॥

**वाद्यत्र** प्रत्यर्थी । **तत्समं** विवादविषयीभूतद्रव्यसमम् । **व्यासः**

साक्षिदोषाः प्रयोक्तव्याः संसदि प्रतिवादिना ।
पत्रेऽभिलिखितान् सर्वान् वाच्याः प्रत्युत्तरं तु ते ॥

पत्रे लिखितान् सर्वान् दोषान् प्रतिलक्ष्यीकृत्य तद्विषयमुत्तरं परिहारं ते साक्षिणः सभ्यैर्वाचनीया इत्यर्थः । साक्षिणां संप्रतिपत्त्युत्तराभिधाने न साक्षित्वं मिथ्योत्तराभिधाने प्रत्यर्थी स्वाभिहितान्दोषान् प्रमाणेन साधयेत् । यदि न साधयेत्तदा दण्डनीयः । साधने तु दुष्टत्वात्साक्षिणस्त्याज्याः । अर्थिनः प्रमाणान्तरानुपन्यासे पराजयश्चेत्याह **स** एव

प्रतिपत्तौ न साक्षित्वमर्हन्ति तु कथंचन ।
अतोऽन्यथा भावनीयाः क्रियया प्रतिवादिना ॥
अभावयन्दमं दाप्यः प्रत्यर्थी साक्षिणः स्फुटम् ।
भाविताः साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः ॥
जितः सविनयं दाप्यः शास्त्रदृष्टेन कर्मणा ।

यदि वादी निराकाङ्क्षः साक्षिष्वेव व्यवस्थितः[1] ॥ इति ।

**प्रतिपत्तौ** संप्रतिपत्तौ । **अतोऽन्यथा** असंप्रतिपत्तौ । भावनीयाः अङ्गीकारयितव्याः । **क्रियया** प्रमाणोपन्यासेन । **स्फुटं** यथा तथा **साक्षिणोऽभावय**न्नित्यन्वयः । साक्षिणामिति **मिताक्षरायां** पाठस्तत्र पाठे कर्मणि षष्ठी । **सविनयं** विनयः शिक्षा तत्सहितं तथा **दाप्यो** विवादविषयं धनमिति शेषः । **निराकाङ्क्षः** प्रमाणान्तरोपन्यासेच्छारहितः । यत्तु **व्यासस्यैव** साक्षिणां दूषणं साक्ष्यादिप्रमाणैर्न साधनीयमित्येतदर्थप्रतिपादकं

सभासदां प्रसिद्धं यल्लोकसिद्धमथापि वा ।
साक्षिणां दूषणं ग्राह्यमसाध्यं दोषवर्जनात् ॥
अन्यैस्तु साक्षिभिः साध्ये दूषणे पूर्वसाक्षिणाम् ।
अनवस्था भवेद् दोषस्तेषामप्यन्यसम्भवात् ॥ इति

वचनं तदसम्भावितदोषा आप्तत्वेन लोकेष्ववधारिता ये साक्षिणस्तेषां दूषणं न साधयेदित्येवंपरम् । **असाध्यं** प्रसिद्धत्वात् साधयितुमनर्हम् । **दोषवर्जनात्** अनवस्थाख्यदोषाभावात् । न च प्रतिवादिना साक्षिदूषणभावनं व्यवहारान्तरापत्तिरिति वाच्यम् । तस्य प्रकृतव्यवहारोपयोगित्वेनार्थान्तरत्वाभावात् । तथा च **कात्यायनः** (श्लो. ३८१)

प्रत्यर्थिनार्थिना वापि साक्षिदूषणसाधने ।
प्रस्तुतार्थोपयोगित्वाद् व्यवहारान्तरं न च ॥

प्रतिवादिनोऽविद्यमानदोषोद्भावने वैकल्पिकौ हानिदण्डौ । प्रतिवादिना साक्षिदोषाणामज्ञाने सभ्यैस्ते प्रकाशनीया इत्यप्याह **स एव** (कात्या. श्लो. ३८०,२७५)

नातथ्येन प्रमाणं तु दोषेणैव तु दूषयेत् ।
मिथ्याभियोगी दण्ड्यः स्यात्साध्यार्थाद्वापि हीयते ॥

प्रमाणस्य हि ये दोषा वक्तव्यास्ते विवादिना ।
गूढास्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनात् ॥

---

१ 'साक्ष्यं सभ्येष्ववस्थितः' इति च.

**गूढाः** शास्त्रप्रदर्शनेन **सभ्यैः** स्फुटीकृत्य **काले** साक्षिवादात्पूर्वकाले **वक्तव्या** इत्यर्थः । साक्षिवादानन्तरं दोषोद्भावनं न कार्यमित्याह **बृहस्पतिः**

लेख्यदोषास्तु ये केचित्साक्षिणां चैव ये स्मृताः ।
वादकाले तु वक्तव्याः पश्चादुक्तान्न दूषयेत् ॥

**वादकाले** साक्षिवादात्पूर्वकाले । **उक्तान्** वक्तुमारब्धवतः । आदिकर्मणि क्तः कर्तरि च (पा.३.४.७१) इति कर्तरि क्तः । साक्षिवादानन्तरदोषोद्भावने दण्डमाह **कात्यायनः** ( श्लो. ३७९ )

उक्तेऽर्थे साक्षिणो यस्तु दूषयेत्प्रागदूषितान् ।
न च तत्कारणं ब्रूयात्प्राप्नुयात्पूर्वसाहसम् ॥

**पूर्वसाहस**मुत्तमसाहसम् । सभाक्षोभादिना साक्षिणां स्वदूषणपरिहाराशक्तौ अर्थी तत्परिहारं कुर्यात् । अत एव **बृहस्पतिः**

लेख्यं वा साक्षिणो वापि विवादे यस्य दूषिताः ।
तस्य कार्यं न सिध्येत्तु यावत्तन्न विशोधयेत् ॥

**तत्** लेख्यादिकम् । विप्रतिपन्नार्थानभिज्ञान् विपरीताभिज्ञान् वा द्रव्यदानादिना स्वाधीनीकृत्य साक्षित्वेनाभिधातुरर्थिनो दण्डमाह **कात्यायनः** ( श्लो.४०७ )

येन कार्यस्य लोभेन निर्दिष्टाः कूटसाक्षिणः ।
गृहीत्वा तस्य सर्वस्वं कुर्यान्निर्विषयं ततः ॥ इति ।

**कार्यस्य[1] लोभेन** स्वाभिहितार्थसिद्धिवाञ्छया । **कूटसाक्षिणः** दुष्टसाक्षिणः । **सर्वस्व**ग्रहणमुपलक्षणम् । तेन विवादगुरुलघुभावमालोच्य दण्डो ग्राह्यः । **निर्विषयं** विवादविषयीभूतार्थरहितम् । **ततः** तस्मात्कूटसाक्ष्युपादानलक्षणात्कारणात् ॥ सभायामागतानां साक्षिणां केनचित्तद्दूषणानुद्भावनेऽपि राज्ञा ते परीक्षणीयाः । तथा च **कात्यायनः** (श्लो.३४०)

उपस्थितान् परीक्षेत साक्षिणो नृपतिः स्वयम् । इति ।

**बृहस्पतिरपि**

1 कार्यस्य ··· दुष्टसाक्षिणः–इत्येते शब्दाः न सन्ति अ–क–आदर्शयोः.

उपस्थिताः परीक्ष्याः स्युः स्वरवर्णेङ्गितादिभिः ।

दुष्टसाक्षिनिश्चयोपायमाह **नारदः** (ऋणादान १९३–१९६)

यस्त्वात्मदोषदुष्टत्वादस्वस्थ इव लक्ष्यते ।
स्थानात्स्थानान्तरं गच्छेदेकैकं चानुधावति ॥
कासत्यकस्माच्च भृशमभीक्ष्णं निश्वसित्यपि ।
विलिखत्यवनीं पद्भ्यां बाहू वासश्च धूनयेत् ॥
भिद्यते मुखवर्णोऽस्य ललाटं स्विद्यते तथा ।
शोषमागच्छतश्चोष्ठौ ऊर्ध्वं तिर्यक् च वीक्षते ॥
त्वरमाण इवाविद्धमपृष्टो बहु भाषते ।
कूटसाक्षी स विज्ञेयस्तं पापं विनयेद् भृशम् ॥

**आविद्धं** व्याकुलम् । **शङ्खलिखिता**वपि—मन्त्रिभिः शास्त्रसामर्थ्याद् दुष्टलक्षणं ग्राह्यम् । तिर्यक् प्रेक्षते समन्तादेवावलोकयत्यकस्मान्मूत्रपुरीषं विसृजति देशादेशं गच्छति पाणिना पाणिं पीडयति नखान्निकृन्तति मुखमस्य विवर्णतामेति प्रस्विद्यति चास्य ललाटं न चक्षुर्न च वाचं प्रतिपूजयत्यकस्माद् ददाति प्रशंसति पुनः पुनरन्यमपनुदति बहिर्निरीक्षते शस्त्रं परामृशति भूमिं विलिखति शिरः प्रकम्पयन्नोष्ठौ निर्भुजति सृक्किणी परिलेढि अतिविस्मितः कर्मस्वमहत्स्वपि भ्रुवौ संहरति हसति तूष्णीं ध्यायति पूर्वोत्तरविरुद्धं व्याहरत्येवमादि दुष्टलक्षणम् । क्रुद्धस्य च स्वामिनोऽन्यत्र प्रकृतिशीलात् । इति । **क्रुद्धस्य च स्वामिन** एवमादि दुष्टलक्षणमित्यनुषङ्गः । **अन्यत्र प्रकृतिशीलात्** । प्रकृत्या स्वभावेन शीलं पूर्वोक्तप्रेक्षणादिधर्मो यस्य स प्रकृतिशीलः ततोऽन्यत्रैतानि दुष्टक्रुद्धस्वामिलक्षणानि । स्वाभाविकतिर्यक्प्रेक्षणादिधर्मयोगी न दुष्टो नापि तादृशः स्वामी क्रुद्ध इत्यर्थः ॥

एवं परीक्षितानां साक्षिणां दुष्टत्वस्याप्रतिपत्तौ विप्रतिपन्नमर्थं ते प्रष्टव्याः । तत्र प्रकारमाह **कात्यायनः** (मनु. ८. ८७, ७९-८०)

देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् ।
उदङ्मुखान् प्राङ्मुखान्वा पूर्वाह्णे वा शुचिः शुचीन् ॥
सभान्तः साक्षिणः सर्वानर्थिप्रत्यर्थिसन्निधौ ।
प्राड्विवाकोऽनुयुञ्जीत विधिनानेन सान्त्वयन् ॥
यद् द्वयोरनयोर्वेत्थ कार्येऽस्मिंश्चेष्टितं मिथः ।
तद्ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता ॥

गवाश्वादिविवादेषु साक्षिप्रश्नकाले विप्रतिपन्नार्थसंनिधानमपेक्षितमित्य-त्याह स एव (कात्या. श्लो. ३८८–३९० )

अर्थिप्रत्यर्थिसान्निध्ये साध्यार्थस्य च सन्निधौ ।
प्रत्यक्षं चोदयेत्साक्ष्यं न परोक्षं कथंचन ॥
अर्थस्योपरि कर्तव्यं तयोरपि विना क्वचित् ।
चतुष्पादेषु धर्मोऽयं द्विपदस्थावरेषु च ॥
तौल्यगणिममेयानामभावेऽपि हि वादयेत् ।
क्रियाकारेषु सर्वेषु साक्षित्वं न ततोऽन्यथा ॥

**तयोरपि विना** तयोर्वादिनोः संनिधिं विनापि । अपिशब्दः कैमुतिकन्यायसूचनेन साध्यार्थसंनिधानस्यावश्यकतां बोधयति । तेनोभयासंनिधानेऽपि साक्ष्यं भाषणीयमित्यत्र न तात्पर्यम् । यद्वा एकस्य प्रत्यर्थिनः संनिधानाभावेनोभयसंनिधानाभावो ग्राह्यः । न त्वेकैकस्य वादिनः प्रतिवादिनश्चासंनिधानेन । तेन प्रत्यर्थिनः पलायनादिनासंनिधानेपि साक्ष्यं भाषणीयम् । **क्वचि**च्छब्दार्थो दर्शितश्च**तुष्पादे**ष्वित्यनेन । **तौल्यं** तोलनयोग्यं सुवर्णादि । **गणिमं** गणनीयं नाणकादि । **मेयं** मानयोग्यं व्रीहिगोधूमादि । **अभावेऽपि** साध्यार्थसंनिधानाभावेऽपि । **क्रियाकारेषु** व्यवहारेषु । वधरूपे विवादपदे साक्षिभाषणं शिवसंनिधौ[1] कर्तव्यमित्याह स एव ( कात्या. श्लो. ३९१)

वधे चेत्प्राणिनां[2] साक्ष्यं वादयेच्छिवसंनिधौ ।
तदभावे तु चिह्नस्य नान्यथैव प्रवादयेत् ॥

१ 'शिवसंनिधौ···तत् साक्षिभाषणं' इति भागो गलितः ब–आदर्शे. २ 'वादिनां' इति क.

**तत्** साक्षिभाषणं **चिह्नस्य** वधचिह्नस्याभावे कर्तव्यमिति शेषः। **अन्यथा** वधचिह्नसद्भावे ॥ साक्षिप्रश्ने विलम्बो न कार्य इत्युक्तं **तेनैव** ( कात्या. श्लो. ३३९)

न कालहरणं कार्यं राज्ञा साक्षिप्रभाषणे ।
महादोषो भवेत्कालाद्धर्मव्यावृत्तिलक्षणः ॥

साक्षिणः शपथैरसत्यभाषणान्निरुध्य प्रत्येकं प्रष्टव्या इत्याह **नारदः** (ऋणादान १९८)

आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम् ।
समस्तान्विदिताचारान् विज्ञातार्थान् पृथक् पृथक् ॥

क्वचित्साक्ष्यं समुदितैर्वक्तव्यं क्वचित्प्रत्येकमित्याह **वसिष्ठः**

समवेतैस्तु यद्दृष्टं वक्तव्यं तु तथैव तत् ।
विभिन्नेनैव यत्कार्यं वक्तव्यं तत् पृथक् पृथक् ॥
भिन्नकाले तु यत्कार्यं विज्ञातं यत्र साक्षिभिः ।
एकैकं वादयेत्तत्र विधिरेष प्रकीर्तितः ॥

**यत्कार्यं** दृष्टमित्यनुषङ्गः । साक्षिणां धर्मोपबृंहितैर्वचनैरनृतभाषणाद्भयमुत्पादनीयमित्याह **नारदः** ( ऋणादान २०० )

पौराणैर्धर्मवचनैः सत्यमाहात्म्यदर्शनैः ।
अनृतस्यापवादैश्च भृशमुत्रासयेदिमान् ॥ इति ।

यानि वाक्यानि ते श्रावयितव्यास्तान्याह **मनुः** (८.७९-८६)

प्राड्विवाकोऽनुयुञ्जीत विधिनानेन सान्त्वयन् ॥
यद् द्वयोरनयोर्वेत्थ कार्येऽस्मिंश्चेष्टितं मिथः ।
तद् ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिणः (साक्षिता?) ।
सत्यं साक्ष्ये ब्रुवन् साक्षी लोकानाप्नोति पुष्कलान् ।
इह चानुत्तमां कीर्तिं वागेषा ब्रह्मपूजिता ॥
साक्ष्येऽनृतं वदन् साक्षी पाशैर्बध्येत वारुणैः ।
विवशः शतमाजातीस्तस्मात्साक्ष्ये वदेदृतम् ॥
सत्येन पूयते साक्षी धर्मः सत्येन वर्धते ।

तस्मात्सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ॥
आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथात्मनः ।
मावमंस्थाः स्वमात्मानं नृणां साक्षिणमुत्तमम् ॥
मन्यन्ते वै पापकृतो न कश्चित्पश्यतीति नः ।
तांश्च देवाः प्रपश्यन्ति स्वश्चैवान्तरपूरुषः ॥
द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमानिलाः ।
रात्रिसन्ध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम् ॥

**आजातीः** जन्मानि । **बृहस्पतिः**

सत्यप्रशंसावचनैरनृतस्यापवर्जनैः ।
सभ्यैः स बोधनीयस्तु धर्मशास्त्रप्रवेदिभिः ॥
आ जन्मनश्चा मरणात् सुकृतं यदुपार्जितम् ।
तत्सर्वं नाशमायाति अनृतस्याभिशंसनात् ॥

**वसिष्ठः**

अथ चेदनृतं ब्रूयात्सर्वतो मिथ्यलक्षणम् ।
मृतो नरकमायाति तिर्यग्गच्छत्यनन्तरम् ॥
सूकरो दश वर्षाणि दश वर्षाणि गर्दभः ।
श्वा चैव दश वर्षाणि भासो वर्षाणि विंशतिम् ॥
कृमिकीटपतङ्गेषु चत्वारिंशत्तथैव च ।
मृगस्तु दश वर्षाणि जायते मानवस्ततः ॥
मानुष्यं तु यदाप्नोति मूकोऽन्धस्तु भवेत्तु सः ।
पामरो जायते पश्चात्संपरित्यक्तबान्धवः ॥
पङ्ग्वन्धबधिरो मूकः कुष्ठी नग्नः पिपासितः ।
बुभुक्षितः शत्रुगृहे भिक्षते भार्यया सह ॥
ज्ञात्वा त्वनृततो दोषान् ज्ञात्वा सत्ये च सद्गुणान् ।
श्रेयस्करमिहामुत्र सत्यं साक्ष्ये वदेत्ततः ॥

**बोधायनः**

त्रीनेव च पितॄन्हन्ति त्रीनेव प्रपितामहान् ।
सप्त जातानजातांश्च साक्ष्यं साक्षी मृषा ब्रुवन् ॥

**मनुनारदौ** (मनु ८.९७–१०१, नारद, ऋणादान २०७–२०९)

यावतो बान्धवान् यस्मिन् हन्ति साक्ष्येऽनृतं वदन् ।
तावतः संख्यया तस्मिञ् शृणु सौम्यानुपूर्वशः ॥
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मास्म भूम्यनृतं वदीः ॥
अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने ।
अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च ॥
पशुवत् क्षौद्रघृतयोर्यानेषु च तथाश्ववत् ।
गोवद्रजतवस्त्रेषु धान्ये ब्रह्मणि चैव हि ॥
एतान्दोषानवेक्षस्व सर्वाननृतभाषणे ।
यथाश्रुतं यथादृष्टं सत्यमेवाञ्जसा वद[1] ॥ इति ।

**अब्जेषु** रत्नेषु मुक्ताफलादिषु । **ब्रह्मणि** वेदे । **याज्ञवल्क्यः** (२. ७५)

सुकृतं यत्त्वया किञ्चिज्जन्मान्तरशतैः कृतम् ।
तत्सर्वं तस्य जानीहि यं पराजयसे मृषा ॥ इति ।

साक्षिणः शपथैर्नियम्य प्रष्टव्या इत्युक्तं **नारदेन** (ऋणादान १९८)

आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम् । इति ।

तत्र वर्णभेदेन विशेष उक्तस्तेन **मनुना** च (मनु ८.११३, नारद, ऋणादान १९९)

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥

---

१ 'वद'–इति ब.

अस्यार्थः। ब्राह्मणमन्यथा ब्रुवतः सत्यं ते नश्यतीति शापयेत्। क्षत्रियं वाहनायुधानि तव विफलानीति। गोबीजकाञ्चनानि तव विफलानि भविष्यन्तीति वैश्यम्। शूद्रमन्यथा ब्रुवतस्तव सर्वाणि पातकानि भविष्यन्तीति शापयेदिति। यस्तु—शपथेनैके सत्यकर्म तद्देवराजब्राह्मणसंसदि स्यादब्राह्मणानाम्—इति **गौतमेन** (१३.१२—१३) ब्राह्मणस्य शपथाभाव उक्तः स सर्वैराप्तत्वेनावधारितो यस्तद्विषयः। '**सत्यकर्म** यथाभूतार्थव्यवस्थापनम्। गोरक्षणादिभिरपकृष्टा ब्राह्मणास्तु शूद्रवच्छपथं कारयितव्या[1] इत्याह **मनुः**[2]

ये व्यपेताः स्वकर्मभ्यः परपिण्डोपजीविनः।
द्विजत्वमभिकाङ्क्षन्ति तांश्च शूद्रवदाचरेत्॥

**विप्र**ग्रहणं क्षत्रियवैश्ययोरुपलक्षणम्॥ पृष्टाः साक्षिणो येन प्रकारेण ब्रूयुस्तमाह **बृहस्पतिः**

विहायोपानदुष्णीषं दक्षिणं पाणिमुद्धरेत्।
हिरण्यगोशकृद्दर्भान्समादाय ऋतं वदेत्॥

साक्ष्यभिहितवचनस्य परीक्षाप्रकारमाह **बृहस्पतिः**

देशकालवयोद्रव्यसंज्ञाजातिप्रमाणतः।
अन्यूनं चेन्निगदितं सिद्धं साध्यं विनिर्दिशेत्॥
निर्दिष्टेष्वर्थजातेषु साक्षी चेत्साक्ष्यमागतः।
न ब्रूयादक्षरसमं न तन्निगदितं भवेत्॥
देशकालवयोद्रव्यप्रमाणाकृतिजातिषु।
यत्र विप्रतिपत्तिः स्यात् साक्ष्यं तदपि कुत्सितम्॥
ऊनमभ्यधिकं वापि प्रब्रूयुर्यस्य साक्षिणः।
तदप्यनुक्तं विज्ञेयमेष साक्ष्यविधिः स्मृतः॥ इति।

साक्षिणां विप्रतिपत्तौ कथं निर्णय इत्यपेक्षायामाह **याज्ञवल्क्यः** (२.७८)

---

१ 'शपथं कारयिरेत्' इति अ—क. २ 'इत्याह मनुः'—एतन्नास्ति अ—क—आदर्शयोः.

द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः ॥

**ये गुणवत्तमा**स्तेषामिति शेषः । **नारदः** (ऋणादान २२९)

साक्षिविप्रतिपत्तौ च प्रमाणं बहवो मताः ।
तत्साम्ये शुचयो ग्राह्यास्तत्साम्ये स्मृतिमत्तराः ॥ इति ।

साक्ष्यमङ्गीकृत्यानभिधाने दण्डमाह **याज्ञवल्क्यः** (२.७६)

अब्रुवन्हि नरः साक्ष्यमृणं सदशबन्धकम् ।
राज्ञा सर्वं प्रदाप्यः स्यात्षट्चत्वारिंशकेहनि ॥

**सर्वं** वृद्धिसहितम् । **सदशबन्धकं** दशमांशरहितम् । दशमांशो राज्ञा ग्राह्यः सवृद्धिकमृणमुत्तमर्णेन ग्राह्यमिति **विज्ञानेश्वराचार्याः।** ऋणग्रहणं विवादमात्रोपलक्षणम् । अत एव **मनुः** (८.१०८)

त्रिपक्षादब्रुवन्साक्ष्यमृणादिषु नरोऽगदः ।
तद्दणं प्राप्नुयात्सर्वं दशबन्धं च सर्वशः ॥

**गद**ग्रहणमपरिहार्यप्रतिबन्धकस्याप्युपलक्षणम् । यः साक्ष्यं जानन्नपि द्वेषवशान्नाङ्गीकरोति तस्य दण्डमाह **याज्ञवल्क्यः** (२.८२)

यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः ।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥

यः साक्ष्यमङ्गीकृत्यान्यैः साक्षिभिः सह **साक्ष्यं श्रावितः** सन् निगदकाले **तमोवृतो** रागद्वेषादियुक्तस्तत्साक्ष्य**मन्येभ्यः** साक्षिभ्यः **निह्नुते** नाहमत्र साक्षी भवामीति स विवादपराजये यो दण्डस्तं **दण्डमष्टगुणं** दाप्यः । **ब्राह्मणं** तावद्दण्डदानसमर्थमपि **विवासयेत्** न तु दण्डयेत् । विवासनं च नग्नीकरणं गृहभङ्गो देशनिर्वासनं वा । तेषां विषयविशेषानुसारेण व्यवस्था । क्षत्रियादीनां तावद्दण्डदानासामर्थ्ये स्वस्वजात्युचितकर्मकरणनिगडबन्धनकारागृहप्रवेशादि कारयितव्यमिति **विज्ञानेश्वराचार्याः** । **नारदः**

श्रावयित्वा तथान्येभ्यः साक्षित्वं यो विनिह्नुते ।
स विनेयो भृशतरं कूटसाक्षिपरो हि यः ॥

**अन्येभ्यः** साक्ष्यं **श्रावयित्वा** अहमत्र साक्षी भवामीत्यन्यान् ज्ञापयित्वा साक्षिणा निगदे दत्ते यदि तत्र प्रत्यर्थिलोभादिकारणप्रतिकल्पनं कुर्यात्तदा यदि सप्ताहमध्ये साक्षिणोत्युपद्रवकारिरोगादिकं स्यात्तदा कूटसाक्षित्वात्स दण्ड्यः। इतरथा तु प्रत्यर्थ्येवेत्याह **मनुः** (८.१०८)

यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः।
रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः॥

**ऋणग्रहणं** विवादविषयमात्रोपलक्षणम्। साक्षिभिर्यथाभूतमर्थमभिधाय पश्चाल्लोभादिनान्यथाभिधाने ते दण्ड्या इत्याह **कात्यायनः** (श्लो. ४०६)

उक्त्वान्यथा ब्रुवाणाश्च दण्ड्याः स्युर्वाक्छलान्विताः। इति।

साक्षिभिः साक्ष्येऽभिहिते प्रतिवादिना गुणवत्तरैर्द्विगुणैर्वा विपरीतसाक्षिभिस्तद्विपरीतार्थसाधने पूर्वेषां कूटसाक्षितामाह **कात्यायनः** (श्लो. ४०८)

यत्र वै भावितं कार्यं साक्षिभिर्वादिना भवेत्।
प्रतिवादी यदा तत्र भावयेत्कार्यमन्यथा॥
बहुभिस्तत्कुलीनैर्वा कूटाः स्युः पूर्वसाक्षिणः।

**तत्कार्य**मित्यन्वयः। **कुलीनै**रित्यन्येषामपि गुणानामुपलक्षणम्। **याज्ञवल्क्यः** (२.८०)

उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तराः।
द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः॥

अयं च विपरीतसाक्ष्युपन्यासो व्यवहारसमाप्तेः प्राग्द्रष्टव्यः।

निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्।
लिखितं साक्षिणो वापि पूर्वमावेदितं न चेत्॥
यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः।
निर्णिक्तव्यवहाराणां प्रमाणमफलं तथा॥ इति

**नारदे**नाभिधानात् (व्य.मा.अ.१श्लो. ६२-६३)। कूटसाक्षिणां लोभादिकारणविशेषपरिज्ञाने दण्डविशेषमाह **मनुः** (८.११९–१२४)

लोभान्मोहाद्भयान्मैत्र्यात्कामात् क्रोधात्तथैव च ।
अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते ॥
एषामन्यतमस्थाने यः साक्ष्यमनृतं वदेत् ।
तस्य दण्डविशेषांश्च प्रवक्ष्याम्यनुपूर्वशः ॥
लोभात्सहस्रं दण्ड्यस्तु मोहात्पूर्वं तु साहसम् ।
भयाद् द्वौ मध्यमौ दण्डौ मैत्रात्पूर्वं चतुर्गुणम् ॥
कामाद्दशगुणं प्रोक्तं क्रोधात्तु त्रिगुणं परम् ।
अज्ञानाद् द्वे शते पूर्णे बालिश्याच्छतमेव तु ॥
एतानाहुः कूटसाक्ष्ये प्रोक्तान् दण्डान् मनीषिभिः ।
धर्मस्याव्यभिचारार्थमधर्मनियमाय च ॥
कूटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान् धार्मिको नृपः ।
प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ॥

**लोभः** अर्थलिप्सा **मोहो** मिथ्याज्ञानं **मैत्र्यं** स्नेहातिशयः **कामः** स्त्रीव्यतिकराभिलाष इति **विज्ञानेश्वराचार्याः**। **अज्ञान**मस्फुटज्ञानम्। अज्ञानं तात्कालिको भ्रम इति **कृत्यकल्पतरौ । बालभावो** विशेषज्ञानोत्पत्तिराहित्यमिति **विज्ञानेश्वर**प्रभृतयो दाक्षिणात्याः । यत्तु **बालभावो** यौवनोन्मेषप्राप्तो मद इति **रत्नाकरादिषु** पौरस्त्यनिबन्धेषूक्तं तदसुन्दरं **बालिश्याच्छतमेव तु** इति निमित्तान्तरापेक्षयाल्पदण्डाभिधानस्य निरुपपत्तिकतापत्तेः । अत्र ताम्रिकाः पणाः सहस्रादिसंख्यासंख्येयतया ग्राह्याः । पूर्वः साहसः सार्धपणशतद्वयं मध्यमः साहसः शतपञ्चकं

पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्रं त्वादथोत्तमः ॥ इति

**मनु**नाभिधानात् ( ८. १३९ ) । **पञ्च** शतानीति वचनविपरिणामेन शतशब्दस्यानुषङ्गः । **याज्ञवल्क्येन** ( १. ३६६ ) तु किञ्चिदधिकमेषां परिमाणमुक्तं

साशीतिपणसाहस्रो दण्ड उत्तमसाहसः ।
तदर्धं मध्यमः प्रोक्तः तदर्धमधमः स्मृतः ॥ इति ।

अनयोरपराधतारतम्यानुसारेण व्यवस्था । **भयाद् द्वौ मध्यमा**विति भयनिमित्तके कूटसाक्ष्ये द्विगुणं मध्यमसाहसमित्यर्थः । पूर्वं **चतुर्गुण**मिति मनूक्तं प्रथमं साहसं चतुर्गुणं पणसहस्रमित्यर्थः । **त्रिगुणं पर**मिति परं मध्यमसाहसं त्रिगुणं पञ्चदशशतानीति यावत् । **ब्राह्मणं तु विवासयेन्न** तु दण्डयेदिति **तु**शब्दार्थः । यस्तु

पृथक् पृथग्दण्डनीयाः कूटकृत्साक्षिणस्तथा ।
विवादाद् द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ॥ इति

**याज्ञवल्क्येन** (२.८१) द्विगुणो दण्डोऽभिहितः स लोभादिकारणविशेषापरिज्ञाने वेदितव्यः । यो धनदानादिना साक्षिणः कूटान्करोति स **कूटकृत्** । एतच्च ब्राह्मणविवासनं महाविषये कौटसाक्ष्ये द्रष्टव्यम् । अल्पविषये तु विषयानुरूपोऽर्थदण्ड एव ग्राह्यः । न च—त्रयाणां वर्णानां धनापहारवधबन्धनक्रिया विवासनाङ्ककरणे ब्राह्मणस्येति **शङ्ख**वचने धनापहारस्य ब्राह्मणव्यतिरिक्तविषयत्वाभिधानं विरुध्यत इति वाच्यं धनशब्देन तत्र सर्वस्वस्य विवक्षितत्वात् । इतरथा

सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद् व्रजन् ।

इत्यादिवाक्यविरोधः (मनु ८.३७९) ॥

क्वचित्साक्षिणामसत्यभाषणमभ्यनुजानाति **मनुः** (८.१०४,१०३)

शूद्रविट्क्षत्रविप्राणां यत्रर्तोक्तौ भवेद्वधः ।
तत्र वक्तव्यमनृतं तद्धि सत्याद् विशिष्यते ॥
तद्वदन्धर्मतोऽर्थेषु जानन्नप्यन्यथा नरः ।
न स्वर्गाच्च्यवते लोकाद् दैवीं वाचं वदन्ति ताम् ॥

**ऋतोक्तौ** सत्योक्तौ । **यत्र** शङ्काभियोगादौ सत्यभाषणे शूद्रादिवधस्तत्रासत्यं भाषणीयमित्यर्थः । यत्र तु सत्यभाषणे चौरादेरतिनिन्दितस्य वधस्तत्रासत्यं न भाषणीयमित्याह **गौतमः**—नानृतवचने दोषोस्ति जीवनं

चेत्तदधीनं न तु पापीयसो जीवनम्—इति (१३.२४–२५)। यत्र तु सत्योक्तौ वादिप्रतिवादिनोरन्यतरस्य वधः सत्योक्तावपि तत्र न किमपि वक्तव्यम्। यदि राजाभिधानमन्तरेण न परित्यजति तदा साक्षिभिर्मिथो विरुद्धभाषणादसाक्षित्वं कर्तव्यं तस्याप्यसम्भवे सत्यमेव वक्तव्यम्। असत्यभाषणे शूद्रादिवधदोषोऽसत्यभाषणदोषश्चेति दोषद्वयापत्तेः। सत्यभाषणे यो वधदोषस्तस्य तु यथोक्तप्रायश्चित्तं कर्तव्यमित्युक्तं **विज्ञानेश्वराचार्यैः**। द्विजातीनामेतदसत्यभाषणस्य प्रायश्चित्तमाह **याज्ञवल्क्यः** (२.८३)

वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः॥

**वर्णिन**श्चत्वारो वर्णाः। अनवस्रावितान्तरूष्मपक ओदन**श्चरुः**। **सारस्वतः** सरस्वतीदैवत्यः। **द्विजै**र्ब्राह्मणादिभिस्त्रिभिर्वर्णैः। **मनुः** (८.१०५-१०६)

वाग्दैवत्यैस्तु चरुभिर्यजेरंस्तु सरस्वतीम्।
अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं पराम्॥
कूष्माण्डैर्वापि जुहुयाद् घृतमग्नौ यथाविधि।
तदित्यृचा वा वारुण्या तृचेनाब्दैवतेन वा॥

**जुहुया**दिति वचनव्यत्ययश्छान्दसः। **वारुण्या त**दित्यृचा तत्त्वा यामि ब्रह्मणेत्यृचा (ऋ. १.२४.११)। **अब्दैवतेन तृचेन** आपो हि ष्ठेत्यृक्त्रयेण (ऋ. १०.९.१-३)। शूद्रस्य प्रायश्चित्तमाह **विष्णुः** (८.१६-१७)—तत्पावनाय कूष्माण्डीभिर्जुहुयाच्छूद्रश्चैकाह्निकं गोदशकस्य ग्रासं दद्यात्—इति। **एकाह्निकं** एकस्मिन्नहनि भक्षयितुं पर्याप्तम्। इति श्रीकोदण्डपरशुरामेत्यादि····व्यवहारविवेकोद्द्योते साक्षिनिरूपणम्॥४॥

**अथ लेख्यनिरूपणम्**। तत्र **बृहस्पतिः**

साक्षिणामेष निर्दिष्टः संख्यालक्षणनिश्चयः।
लिखितस्याधुना वच्मि विधानमनुपूर्वशः॥

षाण्मासिकेऽपि समये भ्रान्तिः सञ्जायते ततः ।
धात्राक्षराणि शिष्टानि पत्रारूढान्यतः पुरा ॥
राजलेख्यं स्थानकृतं स्वहस्तलिखितं तथा ।
लेख्यं तु त्रिविधं प्रोक्तं भिन्नं तद्बहुधा पुनः ॥ इति ।

**स्थानकृतं** स्थाने ग्रामादौ परहस्तेन लेखितम् । स्थानकृतस्वहस्तलिखितयोर्लौकिकावान्तरभेदत्वमाश्रित्य द्वैविध्यमाह **वसिष्ठः**

लौकिकं राजकीयं च लेख्यं विद्याद् द्विलक्षणम् । इति ।

लौकिकं जानपदमित्युच्यते । अत एव **संग्रहकारः ।**

राजकीयं जानपदं लिखितं द्विविधं स्मृतम् । इति ।

लौकिकस्य सप्तविधत्वमाह **बृहस्पतिः**

भागदानक्रयाधानसंविद्दासऋणादिभिः ।
सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम् ॥ इति ।

**भागो** विभागः । **आधानं** बन्धकम् । **संवित्** समयः । **ऋणा**दिपत्रं सप्तमम् । तत्रादिशब्देन वक्ष्यमाणविशुद्ध्यादिग्रहणम् । भागपत्रादीनां लक्षणमाह **स** एव

भ्रातरः संविभक्ता ये स्वरुच्या तु परस्परम् ।
विभागं यत्र कुर्वन्ति भागलेख्यं तदुच्यते ॥
भूमिं दत्त्वा तु यत्पत्रं कुर्याच्चन्द्रार्ककालिकम् ।
अनाच्छेद्यमनाहार्यं दानलेख्यं तु तद्विदुः ॥
गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् ।
पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते ॥
जङ्गमं स्थावरं बन्धं दत्त्वा लेख्यं करोति यत्
गोप्यभोग्यक्रियायुक्तमाधिलेख्यं तदुच्यते ॥
ग्रामो देशश्च यत्कुर्यान्मतं लेख्यं परस्परम् ।
राजाविरोधि धर्मार्थं संवित्पत्रं वदन्ति तत् ॥
वस्त्रान्नहीनः कान्तारे लिखितं कुरुते तु यत्

कर्माणि ते करिष्यामि दासपत्रं तदुच्यते ॥
धनं वृद्ध्या गृहीत्वा तु स्वयं कुर्याच्च कारयेत् ।
उद्धारपत्रं तत्प्रोक्तमृणलेख्यं मनीषिभिः ॥

विशुद्धिपत्रमाह **कात्यायनः** (श्लो. २५५)

अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते जनैः ।
विशुद्धिपत्रकं ज्ञेयं तेभ्यः साक्षिसमन्वितम् ॥ इति ।

सन्धिपत्रमप्याह **स** एव (काला. श्लो. २५६)

उत्तमेषु समस्तेषु अभिशापे समागते ।
वृत्तानुवादलेख्यं यत्तज्ज्ञेयं सन्धिपत्रकम् ॥

अन्वाधिपत्रमाह **प्रजापतिः**

धनी धनेन तेनैव परमाधिं नयेद्यदि ।
कृत्वा तदाधिलिखितं पूर्वं चास्य समर्पयेत् ॥

**पूर्वं** आधिपत्रम् । सीमापत्रमाह **कात्यायनः** ( श्लो. २५७ )

सीमाविवादे निर्णीते सीमापत्रं विधीयते ।

ऋणनिवर्तने कृते तत्सूचकं पत्रं कार्यमित्याह **याज्ञवल्क्यः** ( २.९४ )

दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेत् ।

**वाशब्दो**ऽस्य पाक्षिकत्वबोधनार्थः । तेन यदा ऋणपत्रस्य नाशादिकं भवति तदैतल्लेखनीयमित्यर्थो लभ्यते । एतच्च लौकिकं स्वकृतमन्यकृतं वेति द्विविधम् । स्वकृतं साक्षिलेखकरहितम् । अन्यकृतं सलेखकसाक्षिकम् । ते च देशव्यवहारानुसारेण ग्राह्ये । तथा च **नारदः** ( ऋणादान १३५ )

लेख्यं तु द्विविधं प्रोक्तं स्वहस्तान्यकृतं तथा ।
असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः ॥ इति ।

स्वहस्तलिखितं यदि बलात्कारादिहेतुकं तदा न प्रमाणमित्याह **याज्ञवल्क्यः** ( २.८९ )

विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ।
तत्प्रमाणं स्मृतं लेख्यं बलोपधिकृतादृते ॥

**बलं** बलात्कारः । **उपधि**र्लोभक्रोधभयमदादिः । **नारदो**ऽपि (ऋणादान १३७)

मत्ताभियुक्तस्त्रीबालबलात्कारकृतं च यत् ।
तदप्रमाणं लिखितं भयोपधिकृतं तथा ॥

अन्यकृते विशेषमाह **याज्ञवल्क्यः** (२.८४-८५)

यः कश्चिदर्थो निष्णातः स्वरुच्याथ परस्परम् ।
लेख्यं तु साक्षिमत्कार्यं तस्मिन्धनिकपूर्वकम् ॥
समामासतदर्धाहर्नामजातिस्वगोत्रकैः ।
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥

**धनिकपूर्वकं** धनिकनाम लिखित्वा धारणिकनाम लेख्यमित्यर्थः । सब्रह्मचारिकं बह्वृचादिशाखाप्रयुक्तं गुणनाम बह्वृचः कठ इत्यादि । **वसिष्ठः**

कालं निवेश्य राजानं स्थानं निवसनं तथा ।
दायकं ग्राहकं चैव पितृनाम्ना च संयुतम् ॥
जातिं गोत्रं च शाखां च द्रव्यमाधिं ससंख्यकम् ।
वृद्धिं ग्राहकहस्तं च विदितार्थौ च साक्षिणौ ॥

**स्थानं** जनपदः । **निवसनं** पुरग्रामादिकम् । ग्राहकोऽधमर्णः । ग्राहकहस्तनिवेशनप्रकारमाह **याज्ञवल्क्यः** (२.८६)

समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् ।
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ॥ इति ।

साक्षिभिर्लेखकेन च स्वहस्तेन स्वनाम लेख्यमित्याह **स** एव (या. २. ८७-८८)

साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् ।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः ॥
उभयाभ्यर्थितेनैतन्मयाप्यमुकसूनुना ।
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत् ॥

**ते समाः** संख्यातो गुणतश्च समाः साक्षिणः कर्तव्या इत्यर्थः ।

केचित्त्वकारप्रश्लेषेण असमाः विषमसंख्याकाः साक्षिणः कर्तव्या इत्याहुः। तत्र यस्मिन्देशे यथाचारस्तथा तत्र पक्षो ग्राह्यः। ऋणिनः साक्षिणश्च लिपिज्ञानाभावे विशेषमाह **नारदः**

अलिपिज्ञ ऋणी यः स्यात्स्वमतं तु स लेखयेत्।
साक्षी वा साक्षिणान्येन सर्वसाक्षिसमीपतः॥ इति।

अत्र देशकालादिनिवेशनं स्वकृतेऽपि पत्रे कर्तव्यं तदुपकारस्योभयत्रापि समानत्वात्। स्वसंमतिलिखनं तु न कर्तव्यं प्रयोजनाभावात्। **बृहस्पति**स्त्रिविधं राजशासनमित्युक्त्वा राजकीयपत्रस्य त्रीन्भेदान् दर्शयति

दत्त्वा भूम्यादिकं राजा ताम्रपट्टे पटेऽथवा।
शासनं कारयेद्धर्म्यं स्थानवंश्यादिसंयुतम्॥
मातापित्रोरात्मनश्च पुण्यायामुकसूनवे।
दत्तं मयामुकायाद्य दानं सब्रह्मचारिणे॥
चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयानुगम्।
अनाच्छेद्यमनाहार्यं सर्वभागविवर्जितम्॥
दातुः पालयितुः स्वर्गो हर्तुर्नरकमेव च।
षष्टिर्वर्ष (षष्टिवर्ष ?) सहस्राणि दानोच्छेदफलं लिखेत्॥
ज्ञातं मयेति लिखितं सन्धिविग्रहलेखकैः।
समुद्रं वर्षमासादिधनाध्यक्षाक्षरान्वितम्॥
एवंविधं राजकृतं शासनं समुदाहृतम्।
देशादिकं यस्य राजा लिखितेन प्रयच्छति॥
सेवाशौर्यादिना तुष्टः प्रसादलिखितं तु तत्।
पूर्वोत्तरक्रियावादनिर्णयान्ते यदा नृपः॥
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते॥

**सब्रह्मचारिणे** अमुकशाखाध्यायिने। **सर्वभागविवर्जितं** सकलराजपुरुषांशरहितम्। शासनविषये **याज्ञवल्क्यो**ऽपि (१. ३१८-३२०)

दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ।
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥
पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ।
अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ॥
प्रतिग्रहपरीमाणं दानाच्छेदोपवर्णनम्[1] ।
स्वहस्तकालसम्पन्नं शासनं कारयेत्स्थिरम् ॥

**निबन्धः** शुल्कस्थानादौ प्रतिपर्णभारादिप्रतिकल्पितमेतावदस्मै दातव्यमिति शतादिसंख्याप्रतिनियतं पर्णादि । **कारयेत्** सन्धिविग्रहाधिकारिणेति शेषः । **प्रतिग्रहपरीमाणं** प्रतिगृह्यते इति प्रतिग्रहो भूम्यादिर्निबन्धश्च तस्य परीमाणमियत्ता । **दानाच्छेदोपवर्णनं** दानस्य दीयमानस्य भूम्यादेराच्छेदस्य मर्यादाया उपवर्णनं कथनम् । दानाच्छेदयोर्दानतदपहारयोर्यथाक्रमं स्तुतिनिन्दालिखनमिति केचित् । सन्धिविग्रहाधिकारिणो लेखकत्वमाह **व्यासः**

राज्ञा तु स्वयमादिष्टः सन्धिविग्रहलेखकः ।
ताम्रपट्टे पटे वापि प्रलिखेद्राजशासनम् ॥
क्रियाकारकसम्बन्धं समासार्थक्रियान्वितम् ।
समामासतदर्धाहर्नृपनामोपलक्षितम् ॥
प्रतिग्रहीतृजात्यादिसगोत्रब्रह्मचारिकम् । इति ।

**क्रियाकारकसम्बन्धं** क्रियाकारकयोः सम्बन्धो यस्मिंस्तत्तथोक्तम् । एतेन दुरन्वयत्वनिरासः । **समासार्थक्रियान्वितं** संक्षिप्तार्थोपन्यासरूपया क्रियया समन्वितम् । राज्ञा शासने स्वसंमतं स्वयमेव लेख्यमित्यप्याह **स** एव

संनिवेशं प्रमाणं च स्वहस्तेन लिखेत्स्वयम् ।
मतं मेऽमुकपुत्रस्य अमुकस्य महीपतेः ॥

---

१ 'दानच्छेदोपवर्णनम्' इति क.

**संनिवेशं प्रमाणं** चेति पूर्ववाक्येनान्वयः। एतच्च शासनं साधुशब्दान्वितमेव कर्तव्यं न त्वपशब्दान्वितम्। तथा च **संग्रहकारः**

राजस्वहस्तचिह्नेन राजादेशेन संयुतम्।
युक्तं राजाभिधानेन मुद्रितं राजमुद्रया॥
सुलिप्यनपशब्दोक्तिसंपूर्णावयवाक्षरम्।
शासनं राजदत्तं स्यात्सन्धिविग्रहलेखकैः॥

लिखितमिति शेषः। अत्र शासने दत्तापहारदोषवर्णनं भाविनृपबोधनार्थमित्युक्तं **व्यासेन**

षष्टिवर्षसहस्राणि दानाच्छेदफलं तथा।
आगामिनृपसामन्तबोधनार्थं नृपो लिखेत्॥

एतच्च शासनं राज्ञा प्रतिग्रहीत्रे समर्पणीयम्। तथा च **विष्णुः** (३. ८२)—पटे वा ताम्रपट्टे वा लिखितं समुद्राङ्कमागामिनृपतिपरिज्ञानार्थे दद्यात्—इति। जयपत्रे विशेषमाह **व्यासः**

व्यवहारान् स्वयं दृष्ट्वा श्रुत्वा वा प्राड्विवाकतः।
जयपत्रं ततो दद्यात्परिज्ञानाय पार्थिवः॥
जङ्गमं स्थावरं येन प्रमाणेनात्मसात्कृतम्।
भागाभिशापसन्दिग्धे यः सम्यग्विजयी भवेत्॥
तस्य राज्ञा प्रदातव्यं जयपत्रं सुनिश्चितम्।
पूर्वोत्तरक्रियापादं प्रमाणं तत्परीक्षणम्।
निगदं स्मृतिवाक्यं च यथासभ्यं विनिश्चितम्॥

**क्रिया**शब्देनात्र प्रत्याकलितस्य ग्रहणम्। **निगदः** साक्षिवचनम्। एतच्च राजमुद्राङ्कितं कार्यम्। तथा च **वृद्धवसिष्ठः**

यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियम्।
सावधारणकं चैव जयपत्रकमुच्यते॥
प्राड्विवाकादिमुद्राङ्कं मुद्रितं राजमुद्रया। इति।

अस्मिन् पत्रे राज्ञा सभ्यैश्च स्वहस्तेन स्वमतं लेख्यमित्याह **कात्यायनः** (२६२–६३)

सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम् ।
लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु पार्थिवः ॥
सभासदश्च ये तत्र स्मृतिशास्त्रविदः स्थिताः ।
यथा लेख्यविधौ तद्वत् स्वहस्तं तत्र दापयेत् ॥

पश्चात्काराख्यो जयपत्रभेद उक्तः **कात्यायनेनैव** (२६४–६५)

अनेन विधिना लेख्यं पश्चात्कारं विदुर्बुधाः ।
निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना ॥
पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते ।
अन्यवाद्यादिहीनेभ्य इतरेषां प्रदीयते ॥
वृत्तानुवादसंसिद्धं तच्च स्याज्जयपत्रकम् । इति ।

यत्र हीनवादी तत्र हीनपत्रं दातव्यं न जयपत्रमिति **विज्ञानेश्वराचार्याः** । **वसिष्ठस्तु** राजकीयपत्रस्य लक्षणं दर्शयंस्तस्य चातुर्विध्यमाह

राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा ।
राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत् ॥
शासनं प्रथमं ज्ञेयं जयपत्रं तथापरम् ।
आज्ञाप्रज्ञापनापत्रं राजकीयं चतुर्विधम् ॥ इति ।

आज्ञाप्रज्ञापनापत्रयोः स्वरूपं प्रदर्शितं **तेनैव**

सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु च ।
कार्यमादिश्यते येन तदाज्ञापत्रमुच्यते ॥
ऋत्विक्पुरोहिताचार्यमान्येष्वभ्यर्हितेषु तु ।
कार्यं निवेद्यते येन पत्रं प्रज्ञापनाय तत् ॥

लेख्यस्य प्रयोजनमाह **मरीचिः**

स्थावरे विक्रयाधाने विभागे दान एव च ।
लिखितेनाप्नुयात्सिद्धिमविसंवादमेव च ॥
सिध्यते वाचिकोप्याधिः स्थावरेषु दशाब्दिकः ।
प्रतिग्रहे च क्रीते च नालेख्या सिध्यति क्रिया ॥

पूर्वलेख्यस्य कथंचिदुपहतौ तत्समानार्थं लेख्यान्तरं कर्तव्यमित्याह **याज्ञवल्क्यः** ( २.९१ )

देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा ।
भिन्ने दग्धे तथाच्छिन्ने लेख्यमन्यत्तु कारयेत् ॥

**दुर्लेख्यं** सन्दिह्यमानलिप्यक्षरमवाचकपदयुक्तं वा । **कात्यायनः** ( ३१२ )

मलैर्यद्भेदितं दग्धं छिद्रितं वीतमेव च ।
तदन्यत्कारयेल्लेख्यं स्वेदेनोल्लिखितं तथा ॥ इति ।

स्वात्मना लिखितं तथेति **कृत्यकल्पतरौ** । एतच्च लेख्यान्तरकरणं वादिप्रतिवादिनोः संप्रतिपत्तौ वेदितव्यम् । विप्रतिपत्तौ तु निर्णयप्रकारमाह **नारदः** ( ऋणादान १४२ )

लेख्ये देशान्तरे न्यस्ते शीर्णे दुर्लिखिते हृते ।
सतस्तत्कालकरणमसतो द्रष्टृदर्शनम् ॥

विद्यमानस्य देशान्तरस्थस्यानयने कालो दातव्यः । असत्त्वे तु ये **द्रष्टारः** साक्षिणस्तैर्निर्णयः कर्तव्य इत्यर्थः । यदा तु साक्षिणो न सन्ति तदा दिव्येन निर्णयः ।

अलेख्यसाक्षिके दैवीं व्यवहारे विनिर्दिशेत् । इति

**कात्यायने**नाभिधानात् ( २२४ ) । लेख्यस्यावश्यपरीक्ष्यतामाह **कात्यायनः** ( २६६, ३०८ )

राजा क्रियां समाहूय यथान्यायं विचारयेत् ।
लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः ॥
दर्पणस्थं यथा बिम्बमसत्सदिव दृश्यते ।
तथा लेख्यस्य बिम्बानि कुर्वन्ति कुटिला नराः ॥

**बृहस्पतिः**

ज्ञात्वा कालं च देशं च कुशलाः कूटकारकाः ।
कुर्वन्ति सदृशं लेख्यं तद्यत्नेन विचारयेत् ॥
स्त्रीबालार्तालिपिज्ञांश्च वञ्चयन्ति स्वबान्धवाः ।
लेख्यं कृत्वा स्वनामाङ्कं ज्ञेयं युक्त्यागमैस्ततः ॥ इति ।

तत्परीक्षाप्रकारमाह **स** एव (कात्या. २८४)

त्रिविधस्यापि लेख्यस्य भ्रान्तिः सञ्जायते यदा ।
ऋणिसाक्षिलेखकानां हस्तोक्त्या साधयेत्ततः ॥

**कात्यायनः** ( २८५–८६ )

अथ पञ्चत्वमापन्नो लेखकः सह साक्षिभिः ।
तत्स्वहस्तादिभिस्तेषां विशुद्धिस्तु न संशयः ॥
ऋणिस्वहस्तसन्देहे जीवतो वा मृतस्य वा ।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ॥

**याज्ञवल्क्यः** ( २.९२ )

सन्दिग्धलेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः ।
युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभिः ॥

एतद्देशकालयोरस्येदं द्रव्यं घटत इति युक्त्या प्राप्तिर्**युक्तिप्राप्तिः** । **क्रिया** तत्साक्ष्युपन्यासः । **सम्बन्धः** पूर्वमपि परस्परविश्वासेन तयोर्दानग्रहणादिसम्बन्धः । **आगमः** सम्भावितः प्राप्त्युपायः । एत एव **हेतवस्तैः** । राजशासने निर्णयप्रकारमाह **प्रजापतिः**

कार्यो यत्नेन महता निर्णयो राजशासने ।
राज्ञां स्वहस्ततो मुद्रालेखकाक्षरदर्शनात् ॥

मुद्रालेखकाक्षरयोर्दर्शनात् स्वहस्ततश्च निर्णय इत्यर्थः । दुष्टलेख्यानि दर्शयति **कात्यायनः** ( २७३–७४ )

साक्षिदोषाद्भवेद्दुष्टं पत्रं वै लेखकस्य च ।
धनिकस्योपधादोषात्तथा धारणिकस्य च ॥
दुष्टैर्दुष्टं भवेल्लेख्यं शुद्धैः शुद्धं विनिर्दिशेत् ।
तत्पत्रमुपधादुष्टैः साक्षिणोऽप्यपकारकैः(साक्षिलेखककारकैः?)॥

**उपधा** दुष्टान्तःकरणता । **स** एव (कात्या. २८१, २७०)

---

१ ब-आदर्शे अस्मादनन्तरं 'युद्धप्राप्तं' इत्यन्तं (७३तमे पृष्ठे)पत्राणि गलितानि इति भाति ।

धनिकेन स्वहस्तेन लिखितं साक्षिवर्जितम् ।
भवेत्कूटं न चेत्कर्ता कृतं हीति विभावयेत् ॥
देशाचारविरुद्धं तु सन्दिग्धं क्रमवर्जितम् ।
कृतमस्वामिना यच्च साध्यहीनं च दुष्यति ॥

**न चेदि**त्यादेरयमर्थः । कर्ता लिखनकर्ता धनिको धारणिकसंप्रतिपत्त्या मयैतल्लिखितमिति यदि न विभावयेत्तदा तत्पत्रं कूटं भवेन्न प्रमाणत्वेन निश्चेतव्यमित्यर्थः । **बृहस्पतिः**

मुमूर्षुशत्रुभीतार्तस्त्रीमत्तव्यसनातुरैः ।
निशोपधिबलात्कारकृते लेख्यं न सिध्यति ॥

**स** एव

दूषितो गर्हितः साक्षी यत्रैको विनिवेशितः ।
कूटलेख्यं तु तत्प्रोक्तं लेखको वापि तद्विधः ॥

**कात्यायनः** (२७७)

न लेखकेन लिखितं न दृष्टं साक्षिभिस्तथा ।
एवं प्रत्यर्थिनोक्ते तु कूटलेख्यं प्रकीर्तितम् ॥

प्रतिवादिना लेख्यदोषोद्भावने वादिना तत्पुत्रेण वा दोषोद्धारः कर्तव्यः । तथा च **बृहस्पतिः**

उद्धरेल्लेख्यमाहर्ता तत्पुत्रो भुक्तिमेव तु ।
अभियुक्तः प्रमीतस्तु तत्पुत्रोपि तदुद्धरेत् ॥

यत्तु

आहर्ता भुक्तियुक्तोपि लेख्यदोषान् विशोधयेत् ।
तत्सुतो भुक्तिदोषांस्तु लेख्यदोषांस्तु नाप्नुयात् ॥

इति **कात्यायनवचनं** (३२३) तदनभियुक्तस्य पितुर्मरणे वेदितव्यम् । दोषानुद्धारे दण्डमाह **कात्यायनः** ( २९० )

कूटोक्तौ साक्षिणां वाक्याल्लेखकस्य च पत्रकम् ।
नयेच्छुद्धिं न यः कूटं स दाप्यो दममुत्तमम् ॥ इति ।

**उत्तमं** साहसमिति शेषः। स्थावरविक्रयादौ वृथा लेख्यं दूषयतः शारीरं दण्डमाह **व्यासः**।

स्थावरे विक्रयाधाने लेख्यं कूटं करोति यः।
स सम्यग्भावितः कार्यो जिह्वापाण्यङ्घ्रिवर्जितः ॥

**सम्यग्भावितः** प्रमाणेन सलेख्यत्वमङ्गीकारितः। एवमृणादानादावपि वृथा लेख्यदूषणे तत्तद्विषयानुरूपो दण्डो द्रष्टव्यः॥ इति श्रीकोदण्डपरशुरामेति……व्यवहारविवेकोद्द्योते लेख्यनिरूपणम् ॥ ५ ॥

अथानुमाननिरूपणम्। तस्य त्रैविध्यमाह **बृहस्पतिः**

साक्षी द्वादशभेदस्तु लिखितं दशधा स्मृतम्।
अनुमानं त्रिधा भिन्नं नवधा दैविकी क्रिया ॥

**त्रिधा** त्रिप्रकारं भुक्तिर्युक्तिश्चोदनाप्रतिकाल इति। त्रयाणामपि साध्यार्थानुमापकत्वात्। यद्यपि—लिङ्गोद्देशस्तु युक्तिः स्यात्—इति वक्ष्यमाणयुक्तिस्वरूपं भुक्तिचोदनाप्रतिकालयोरप्यस्ति साध्यार्थाव्यभिचारित्वेन लिङ्गत्वस्य तयोरपि समानत्वात् तथापि स्मर्तृप्रसिद्धे[1]स्तयोः पृथग्ग्रहणम्। तत्र सप्त स्थावरागमोपायान्दर्शयन् सागमाया एव भुक्तेः प्रामाण्यमित्याह **बृहस्पतिः**

एतद्विधानमाख्यातं साक्षिणां लिखितस्य च।
सांप्रतं स्थावरप्राप्तेः भुक्तेश्च विधिरुच्यते ॥
विद्यया क्रयबन्धेन शौर्यभार्यान्वयागतम्।
सपिण्डस्याप्रजस्यांशं स्थावरं सप्तधा स्मृतम् ॥
यिज्ये (पित्र्य ?) लब्धक्रयाधाने रिक्थशौर्यप्रवेदनात्।
प्राप्ते सप्तविधे भोगः सागमः सिद्धिमाप्नुयात् ॥ इति।

भुक्तेः स्थावरे आवश्यकत्वसूचनार्थं **स्थावर**ग्रहणम्। तच्च जङ्गमस्याप्युपलक्षणम्। तेन प्रतिग्रहादय उभयत्र स्वत्वहेतवः। **विद्या** प्रतिग्रहप्रकारः। **बन्धः** आधिः। **शौर्यागतं** युद्धप्राप्तम्। **अन्वया-**

---

१ 'स्मृतिप्रसिद्धेः' इति क.

**गतम्** वंशप्राप्तम् । **सपिण्डस्याप्रजस्यांशः** असन्ततिकभ्रात्राद्यंशः। **पित्र्यादिना** पूर्वोक्तस्य सप्तविधस्यानुवादः । **लब्धं** प्रतिग्रहादिप्राप्तम् । **रिक्थम**सन्ततिकभ्रात्राद्यंशः । **प्रवेदनं** विवाहः । **नारदः** ( ऋणादान ८५ )

आगमेन विशुद्धेन भोगो याति प्रमाणताम् ।
अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति ॥

सागमत्ववद्विशेषणान्तरवैशिष्ट्यमप्यादरणीयमित्याह **व्यासः**

सागमो दीर्घकालश्चाविच्छेदोऽपरवोज्झितः ।
प्रत्यर्थिसंनिधानश्च पञ्चाङ्गो भोग इष्यते ॥

**अविच्छेदः** निरन्तरः **अपरवः** प्रतिकूलशब्दः । आगमानुपन्यासे भुक्तिमात्रेण न साध्यसिद्धिरित्याह **नारदः** ( ऋणादान ८६ )

सम्भोगं केवलं यस्तु कीर्तयेन्नागमं क्वचित् ।
भोगच्छलापदेशेन विज्ञेयः स तु तस्करः ॥

एतच्चागमस्मरणयोग्ये काले वेदितव्यम् । तदयोग्ये काले तु पुत्रादीनां भुक्तिमात्रेणापि साध्यसिद्धिरित्याह **स** एव ( नारद, ऋणादान ८९ )

स्मार्ते काले क्रिया भूमेः सागमा भुक्तिरिष्यते ।
अस्मार्तेनुगमाभावात् क्रमात्रिपुरुषागता ॥

**सागमा भुक्तिः क्रियेष्यते** इत्यन्वयः । स्मार्तः कालः वर्षशतपर्यन्त इत्युक्तं **विज्ञानेश्वराचार्यैः । अनुगमाभावात्** योग्यानुपलब्ध्या आगमाभावनिश्चयस्यासम्भवात् । स्मरणायोग्येपि काले आगमाभावस्मरणपरम्परायां सत्यां न भुक्त्या साध्यसिद्धिः । अत एवोक्तं **तेनैव** ( नारद, ऋणादान ८७ )

अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चोरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ॥

यत्तु

अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः ।

न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम् (नारद, ऋणादान ९१)

इति तस्यैव वचनं तदन्यायेनाप्यागममन्तरेणापि यत् **पित्रा** सह **पूर्वतरैस्त्रिभि**र्भुक्तं तन्नापाकर्तुं शक्यं किं पुनरागमाभावनिश्चयस्यासम्भवे इति कैमुतिकन्यायपरतया व्याख्येयं न त्वागमाभावेऽपि भुक्तिः प्रमाणमिति । यच्च

यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् ।

न तच्छक्यमपाकर्तुं क्रमात्त्रिपुरुषागतम् ॥ इति

**हारीत**वचनं तदप्यत्यन्तमुपलभ्यमानमागमं विनेति व्याख्यातव्यं न त्वागमस्वरूपं विनेति । स्मरणयोग्ये कालेऽभियुक्तैः पुत्रादिभिरप्यागमोद्धारः कर्तव्यः । अत एव **कात्यायनः** (३२३)

आहर्ता भुक्तियुक्तस्तु लेख्यदोषान् विशोधयेत् ।

तत्सुतो भुक्तिदोषांस्तु लेख्यदोषांस्तु नाप्नुयात् ॥

यत्तु

आगमस्तु कृतो येन सोऽभियुक्तः समुद्धरेत् ।

न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥ इति

पुत्रादीनामागमानुद्धारबोधकं **याज्ञवल्क्य**वचनं (या.२.२८) तदागमानुद्धारेऽपि न तेषां दण्ड इत्येवंपरं न त्वर्थसिद्धिरिति । तथा च **हारीतः**

आगमस्तु कृतो येन स दण्ड्यस्तमनुद्धरन् ।

न तत्सुतस्तत्सुतो वा भोग्यहानिस्तयोरपि ॥ इति ।

अभियुक्तस्य पित्रादेर्मरणे पुत्रादीनामस्मार्तेऽपि काले आगमानुद्धारे न साध्यसिद्धिरित्याह **याज्ञवल्क्यः** (२.२९)

योभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत् ।

न तत्र कारणं भुक्तिरागमेन विना कृता ॥

**रिक्थी** अंशभागी । ननु

पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी[1] ।
परेण भुज्यमानाया धनस्य दशवार्षिकी ।। इति (या.२.२४)

स्वल्पकालोपभोगेनाप्यभियोक्तुर्हानिः प्रतीयते भोक्तुश्च साध्यसिद्धिस्तत्कथं दीर्घकालो भोगः (न ?) प्रमाणमित्युक्तम् । उच्यते । एतद्वचनं पश्यतोऽप्रतिषेधतस्तावत्कालीनतद्भूम्यादिजन्यफलहानिर्भवतीत्येवंपरं न तु तद्भूम्यादिवस्तुहानिरपीति पूर्वोदाहृतानागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपीतिवचनविरोधात् । क्वचिदेकदेशोपभोगेन समग्रसिद्धिमाह **बृहस्पतिः**

यद्येकशासने ग्रामक्षेत्रारामाश्च लेखिताः ।
एकदेशोपभोगेऽपि सर्वे भुक्ता भवन्ति ते ।।

क्वचिदुपभोगेपि न भोक्तुरर्थसिद्धिरित्याह **बृहस्पतिः**

भुक्तिस्त्रिपुरुषी सिध्येदपरेषां न संशयः ।
अतिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति ।।
अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम् ।
सुहृद्बन्धुसकुल्यस्य न तद्भोगेन हीयते ।।
विवाह्यश्रोत्रियैर्भुक्तं राजामात्यैस्तथैव च ।
सुदीर्घेणापि कालेन तेषां सिध्येन्न तद्धनम् ।।

**विवाह्यो** जामाता । **स** एव

अशक्तालसरोगार्तबालभीतप्रवासिनाम् ।
शासनानूढमन्येन भुक्तं भुक्त्या न हीयते ।।

**कात्यायनः** (३३०)

न भोगं कल्पयेत्स्त्रीषु देवतायतनेषु च ।
बालश्रोत्रियवित्ते च प्राप्ते च पितृतः क्रमात् ।।

**स** एव (कात्या. ३१६)

---

१ अस्मात्परं 'निश्चयो न तु राजनि' इत्यन्तं कानिचित्पत्राणि गलितानि ब-आदर्शे.

नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा ।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः ॥

**आदि**शब्देन जङ्गमान्तस्य ग्रहणम् । **मनुः** (८.१४६)

संप्रीत्या भुज्यमानानि न नश्यन्ति कदाचन ।
धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते ॥

**दम्यः प्रयुज्यते** दमनार्थं यः समर्प्यते । **नारदः** ( ऋणादान ९२ )

अन्वाहितं हृतं न्यस्तं बलावष्टब्धयाचिते ।
अप्रत्यक्षं च यद्भुक्तं षडेते नागमं विना ॥

**अन्वाहितं** अन्यस्मै दातुं समर्पितम् । **हृत**मपहृतम् । **न्यस्तं** निक्षिप्तम् । **बलावष्टब्धं** राजप्रसादादिबलेन स्थापितम् । **याचितं** विवाहादावलङ्कारार्थमानीतम् । **स** एव ( नारद, ऋणादान ८१ )

आधिः सीमा बालधनं निक्षेपोपनिधिस्त्रियः ।
राजस्वं श्रोत्रियस्वं च नोपभोगेन नश्यति ॥ इति ।

युक्तिस्वरूपमाह **कात्यायनः**

लिङ्गोद्देशस्तु युक्तिः स्याद् दिव्यानीह विषादयः । इति ।

**लिङ्गोद्देशो** लिङ्गस्याग्निदादित्वाव्यभिचारिण उल्काहस्तत्वादिधर्मस्योद्देशो ज्ञानम् । युक्तिप्रवृत्तेः स्थलं दर्शयति **नारदः** ( ऋणादान १७२-१७५ )

असाक्षिप्रत्ययास्त्वन्ये बुद्धिवादाः प्रकीर्तिताः ।
लक्षणान्येव साक्षित्वे तेषामाहुर्मनीषिणः ॥
उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः ।
केशाकेशिगृहीतश्च युगपत्पारदारिकः ॥
कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः ।
तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्तितः ॥

प्रत्यक्षचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः ।
असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम् ॥

**शङ्खलिखितौ** । केशाकेशिग्रहणात्पारदारिकः उल्काहस्तोऽग्निदः शस्त्रपाणिर्घातको लोप्त्रहस्तश्चौर इति । **लोप्त्रं** चौर्येण प्राप्तं धनम् ।

**बृहस्पतिः**

असाक्षिके चिरकृते पृच्छेदुत्तरसाक्षिणः ।
शपथान्वानुयुञ्जीत उपधां वा प्रयोजयेत् ॥

**उपधा** युक्तिरिति **कृत्यकल्पतरौ** । अत्र पक्षे शपथाभ्यनुज्ञानमनन्यथासिद्ध[1]युक्त्यभावे ज्ञातव्यम् । अत एवाह **नारदः** ( ऋणादान, २३९ )

युक्तिष्वप्यसमर्थासु शपथैनैनमर्दयेत् ।

**अर्दयेत्** पीडयेत् ॥ चोदनाप्रतिकालस्य विषयं दर्शयति **नारदः** ( ऋणादान २३५-२३६ )

प्रमादाद्धनिनो यत्र न स्याल्लेख्यं न साक्षिणः ।
अथवापह्नुते वादी तत्रोक्तस्त्रिविधो विधिः ॥
चोदनाप्रतिकालश्च युक्तिलेशस्तथैव च ।
तृतीयः शपथः प्रोक्तस्तैरेनं साधयेत् क्रमात् ॥

**चोदनाप्रतिकालः** बहुकृत्वो धनं मे देहीति प्रेरणाया अप्रतिकालः अनिराकरणम् । एतमेवार्थमभिप्रेत्याह **कात्यायनः** ( ३३६ )

अर्थिनैवार्थितो यस्तु विघातं न प्रयोजयेत् ।
त्रिश्चतुःपञ्चकृत्वो वा परतस्तदृणी भवेत् ॥

**नारदोऽपि** ( ऋणादान २३७ )

अभीक्ष्णं चोद्यमानो यः प्रतिहन्यान्न तद्वचः ।
त्रिश्चतुःपञ्चकृत्वो वा परतोऽर्थं स दाप्यते ॥

---

१ '०नन्यथायुक्त्यभावे' इति अ.

**परतः** तत ऊर्ध्वम् । चोदनाप्रतिकालमात्रेण न साध्यसिद्धिः किं तर्हि युक्त्यन्तरसहकृतेन तेनेत्याह **नारदः** ( ऋणादान २३८ )

चोदनाप्रतिकालं च युक्तिलेशैस्तमन्वियात् ।
देशकालार्थसम्बन्धपरिमाणक्रियादिभिः ॥

**क्रिया** उपन्यासः । इति श्रीकोदण्डपरशुरामे.....व्यवहारोद्द्योते अनुमाननिरूपणम् ॥ ६ ॥

अथ दिव्यनिरूपणम् । तत्र सकलदिव्यसाधारणी दिव्यमातृका निरूप्यते । तत्र दिव्यभेदानाह **बृहस्पतिः**

धटोऽग्निरुदकं चैव विषं कोशस्तु पञ्चमः ।
षष्ठं च तण्डुलाः प्रोक्तं सप्तमस्तप्तमाषकः ॥
अष्टमं फालमित्युक्तं नवमं धर्मजं तथा ।
दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयम्भुवा ॥

ननु सभ्यशरीरस्पर्शादीनां शपथानामपि मानुषप्रमाणापरिच्छेद्यार्थपरिच्छेदकत्वेन दिव्यत्वात्कथं दिव्यानि नवेत्यभिधानम् । ते च शपथा दर्शिता **नारदेन** ( ऋणादान २४८ )

सभ्यवाहनशस्त्राणि गोवीजकनकानि च ।
देवतापितृपादांश्च दत्तानि सुकृतानि च ॥
स्पृशेच्छिरांसि पुत्राणां दाराणां सुहृदां तथा ।
अभियोगेषु शक्येषु (सर्वेषु?) कोशपानमथापि वा ॥
इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणे । इति ( २५० ) ।

सत्यं तेषां सभ्यस्पर्शादीनां शपथानां कालान्तरभाविनिर्णयनिमित्तत्वादत्र च समनन्तरनिर्णयनिमित्तानां दिव्यत्वेन विवक्षितत्वात्तादृक्त्वं च धटादीनामेवेति नानुपपन्नं दिव्यानि नवेत्यभिधानम् । कोशस्य शपथत्वेपि धटादिषु पाठो महाभियोगविषयत्वसाम्यात्सावष्टम्भाभियोगविषयत्वसाम्याच्च । धटादीनि महाभियोगे सावष्टम्भाभियोगे च प्रयोज्यानि न शङ्काभियोगे इति नियमार्थमाह **याज्ञवल्क्यः** ( २.९५-९६ )

तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥
रुच्या वान्यतरः कुर्यादितरो वर्तयेच्छिरः ।

शीर्षकं पराजयनिमित्तको दण्डः तत्र तिष्ठतीति **शीर्षकस्थः** उक्तरूपदण्डभागित्यर्थः । **रुच्या** इच्छया **अन्यतरः** अभियुक्ताभियोक्त्रोरन्यतरः । **इतरः शिरो वर्तयेत्** दण्डं स्वीकुर्यादित्यर्थः । अत्र वाक्ये कोशग्रहणं तस्य सावष्टम्भाभियोगविषयत्वप्राप्त्यर्थं न तु शङ्काभियोगविषयत्वनिवृत्त्यर्थम् ।

अवष्टम्भाभियुक्तानां धटादीनि विनिर्दिशेत् ।
तण्डुलाश्चैव कोशश्च शङ्कास्वेतानि योजयेत् ॥ इति

**पितामहेन** शङ्काभियोगविषयत्वेन विनियोगविधानात् । **अवष्टम्भः** शीर्षस्थः । क्वचिद्धटादीनां शङ्काभियोगविषयत्वमप्याह **स** एव ( या.२.९६ )

विनापि शीर्षकात् कुर्यान्नृपद्रोहेऽथ पातके ।

**शीर्षकाद्विनापि** पराजयप्रयुक्तदण्डभागिनोऽभियोक्तुरभावेऽपि । **पातके** ब्रह्महत्यादौ । **कात्यायनो**ऽपि (४१२)

पार्थिवैः शङ्कितानां च निर्दिष्टानां च दस्युभिः ।
आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना ॥

**कालिकापुराणे**

परदाराभिशापे च चौर्यागम्यागमेषु च ।
महापातकशस्ते च स्याद्दिव्यं नृप साहसे ॥
विप्रतिपत्तौ विवादेऽवर्णस्य स्थापने कृते ।
तत्रैव स्थापयेद्दिव्यं शिरःपूर्वं महीपतिः ॥
परदाराभिमर्षे च बहवो यत्र वादिनः ।
शिरोहीनं भवेद् दिव्यमात्मसंशुद्धिकारणात् ॥

**विप्रतिपत्तौ** परदारगमनाद्यभियोगरूपायाम् । **विवादे** ऋणदाना-

दिविषये । **अवर्णो**ऽपवादः । परदाराभिमर्शे चेति चौर्यादीनामप्युपलक्षणम् । **विष्णुः** ( ९.२२ )

राजद्रोहे साहसे च विना शीर्षप्रवर्तनात् ।

तण्डुलानां विषयमाह **पितामहः**

चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः ।

**अन्यत्र** स्त्रीसंग्रहादौ । न तु दत्तापह्नवे । तत्र तदर्धार्धस्य तण्डुला इति वक्ष्यमाण**कात्यायन**वचनेन (४२०) तण्डुलदिव्यविधानात् । एतत्स्वल्पचौर्यशङ्कायां वेदितव्यम् । महाचौर्यशङ्कायां तु

चौर्यशङ्काभियुक्तानां तप्तमाषो विधीयते । इति

**तेनैव** तप्तमाषस्य विधानात् । कोशस्य विषयमाह **कात्यायनः (४१५)**

शङ्काविश्वाससन्धाने विभागे रिक्थिनां सदा ।
क्रियासमूहकर्तृत्वे कोशमेव प्रदापयेत् ॥

**क्रियासमूहकर्तृत्वे** सम्भूयैकक्रियाकारित्वे । **पितामहः**

विस्रम्भे सर्वशङ्कासु सन्धिकार्ये तथैव च ।
एषु कोशः प्रदातव्यो नित्यं चित्तविशुद्धये ॥ इति ।

द्रव्यादितारतम्यं पर्यालोच्य तदनुरूपं दिव्यं दातव्यमित्याह **बृहस्पतिः**

ऋणादिषु तु कार्येषु विसंवादे परस्परम् ।
द्रव्यसंख्यान्विता देया पुरुषापेक्षया तथा ॥

दैविकी क्रियेत्यनुषङ्गः । **आदि**शब्देनात्र स्थावरविषयो विवादोऽपि गृह्यते । यत्तु–स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत्–इति वचनं ( कात्या. २४० ) तल्लिखितादिसद्भावे दिव्यं न कारणीयमित्येवंपरम् । ननु ऋणादिविवादेष्वपि मानुषप्रमाणसद्भावे दिव्यं नाश्रीयत एवेतीदं विशेषवचनं व्यर्थं स्यादिति चेत्, उच्यते । ऋणादिविवादेष्वर्थिना साक्ष्युपन्यासे कृते प्रतिवादी पराजये दण्डमङ्गीकृत्य दिव्यं करिष्यामीति वदेत्तदा सत्स्वपि साक्षिषु तेषु दोषशङ्कासम्भवाद् दिव्ये तु दोषशङ्काभावात्

तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु ।
दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेत् ॥ इति

**नारद**वचनाच्च दिव्यं ग्राह्यं भवति । तद्वत् स्थावरविवादे मानुषप्रमाणसद्भावे प्रतिवादिना दण्डाङ्गीकारपुरःसरं दिव्ये समाश्रितेपि दिव्यं मा ग्राहीत्येवमर्थमिदं वचनं न पुनः कदाचिदपि स्थावरविवादे दिव्यं मा ग्राहीत्येतदर्थम् । लिखितसामन्ताद्यभावे तद्विवादनिर्णयाभावप्रसङ्गात् । एतदस्माभिः प्रागुक्तमपि **विज्ञानेश्वराचार्यादिभिः** स्थापितस्यार्थस्य दार्ढ्यार्थं पुनरुपन्यस्तम् । दिव्यदाने द्रव्यादितारतम्यपर्यालोचनं कार्यमित्याह **विष्णुरपि** ( ९.१-३ )–अथ समयक्रिया राजद्रोहसाहसेषु यथाकामं निक्षेपस्तेयेष्वर्थं प्रमाणात् ( ष्वर्थप्रमाणात् ? )-इति । वस्त्रादिविषयविवादे तन्मूलद्रव्यपरिमाणं ग्राह्यम् । द्रव्यप्रमाणतारतम्येन दिव्यविशेषानाह **बृहस्पतिः**

विषं सहस्रेऽपहृते पादोने च हुताशनः ।
त्रिभागोने च सलिलमर्धे देयो घटः सदा ॥
चतुःशताभियोगे तु दातव्यस्तप्तमाषकः ।
त्रिशते तण्डुला देयाः कोशश्चैव तदर्धके ॥
शते हृतेऽपह्नुते च दातव्यं धर्मशोधनम् ।
गोचौरस्य प्रदातव्यं सद्यः फालावलेहनम् ॥
एषा संख्या निकृष्टानां मध्यानां द्विगुणा स्मृता ।
चतुर्गुणोत्तमानां च कल्पनीया परीक्षकैः ॥

**धर्मशोधनं** धर्मजदिव्येन शोधनम् । **निकृष्टानां** जातिगुणाचारैः । मध्यमत्वमुत्तमत्वं च तैरेव । यत्तु

नासहस्राद्धरेत्फालं न तुलां न विषं तथा ।

इति **याज्ञवल्क्य**वचनं ( या.२.९९ ) तन्मध्यमपुरुषविषयम् । **सहस्रं** पणसहस्रमिति **विज्ञानेश्वराचार्याः** । यत्तु

सहस्रे तु धटं दद्यात्सहस्रार्धे तथायसम् ।
अर्धस्यार्धे तु सलिलं तस्यार्धे तु विषं स्मृतम् ॥

इत्यल्पाभियोगेऽपि विषदिव्यविधायकं **पितामह**वचनं तद्यस्य द्रव्यस्यापहारे पातित्यं भवति तद्विषयमिति **विज्ञानेश्वराचार्याः** । दत्तापह्नवे विशेषमाह **कात्यायनः** ( ४१६-४२० ),

दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्पयेत् ।
स्तेयसाहसयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत् ॥
सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत् ।
हेमप्रमाणयुक्तं तु तदा दिव्यं प्रयोजयेत् ॥
ज्ञात्वा संख्यां सुवर्णानां शतनाशे विषं स्मृतम् ।
अशीतेस्तु विनाशे वै दद्यान्नैव हुताशनम् ॥
षष्ट्या नाशे जलं ज्ञेयं चत्वारिंशति वै धटम् ।
विंशद्दशविनाशे तु कोशपानं विधीयते ॥
पञ्चाधिकस्य वा नाशे तदर्धार्धस्य तण्डुलाः ।
ततोर्धार्धविनाशे तु लौकिक्यश्च क्रियाः स्मृताः ॥

**सुवर्ण**शब्दश्चात्र षोडशमाषाः सुवर्ण इत्युक्तपरिमाणवचनः । **विंशद्दशविनाशे** विंशतेर्विनाशे दशानां विनाशे वा । विंशद्दशविनाशे त्रिंशद्विनाशे इति **स्मृतिचन्द्रिकाकारः** । **लौकिक्यः क्रियाः** अपह्नवे तवाष्टगुणद्रव्यनाशो भविष्यतीत्येवमादिकाः । यत्तु-शते हृतेऽपह्नुते च दातव्यं धर्मशासनमिति कार्षापणशतापह्नवे धर्मजदिव्यविधानं तद्[1] निकृष्टपुरुषविषयम् । यस्य द्रव्यस्यापह्नवे महत्पापं तद्विषयं वा द्रष्टव्यमिति न तेन विरोधः । दिव्ये दण्डे च मनूक्तं परिमाणं ग्राह्यमित्याह **बृहस्पतिः**

संख्या रश्मिरजोमूला मनुना समुदाहृता ।
कार्षापणान्ता सा दिव्ये नियोज्या विनये तथा ॥

---

१ तदनिकृष्टपुरुष० इति अ.

**संख्या** परिमाणं **रश्मिरजोमूला** त्रसरेण्वादिका **विनये** दण्डे। तत्र त्रसरेण्वादिकं परिमाणं प्रतिज्ञापूर्वकं दर्शयति **मनुः** (८.१३१-१३७)

लोके संव्यवहारार्थं याः संज्ञाः प्रथिता भुवि।
ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः॥
जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः।
प्रथमं तत्प्रमाणं तु त्रसरेणुं प्रचक्षते॥
त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः।
ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः॥
सर्षपाः षड् यवो मध्यस्त्रियवेन तु कृष्णलम्।
पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश॥
पलं सुवर्णाश्चत्वारः पलानि धरणं दश।
द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः॥
ते षोडश स्याद्धरणं पुराणश्चैव राजतः।
धरणानि दश ज्ञेयः शतमानस्तु राजतः॥
चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः।
कार्षापणस्तु विज्ञेयः कार्षिकस्ताम्रिकः पणः॥ इति।

अत्र **ताम्ररूप्यसुवर्णाना**मिति ताम्ररूप्यशब्दयोरल्पात् (अल्पाच्त्वात्?) प्राक्प्रयोगो न तु क्रमप्रदर्शनार्थः। **पलानि धरणं दशे**त्यन्तं सुवर्णपरिमाणाभिधानम्। **चतुःसौवर्णिको निष्क** इत्यन्तं रूप्यपरिमाणाभिधानम्। अवशिष्टेन ताम्रपरिमाणाभिधानम्। जालान्तरप्रविष्टे सूर्यरश्मौ यत् सूक्ष्मं रजो दृश्यते तत् त्रसरेणुसंज्ञकम्। अष्टौ त्रसरेणवो लिक्षा तिस्रो लिक्षा राजसर्षपः त्रयो राजसर्षपा गौरसर्षपः षड् गौरसर्षपा मध्यमो यवो न स्थूलो न सूक्ष्म इति मध्यमयवस्य परिमाणत्वमुक्तं **विज्ञानेश्वराचार्यैः**। **मनुस्मृतिभाष्ये** तु मध्यशब्दः श्लोकपूरणार्थ इत्युक्तम्। त्रयो यवाः कृष्णलं पञ्च कृष्णलानि माषः षोडश

माषाः सुवर्णः चत्वारः सुवर्णाः पलं दशपलानि धरणं द्वे कृष्णले रूप्यस्य माषः षोडशरूप्यमाषा रजतस्य धरणम्। पुराण इति चास्य संज्ञान्तरम्। दश राजतानि धरणानि राजतः शतमानः। अस्य राजतपलसंज्ञापि भवति।

शतमानं तु दशभिर्धरणैः पलमेव तु। इति

**याज्ञवल्क्य**स्मरणात् (१.३६५)। पूर्वोक्तसुवर्णचतुष्टयपरिमित एको राजनिष्कः। **कार्षिकः** कर्षसंमितः **ताम्रिकः** ताम्रविकारः **कार्षापणो** विज्ञेयः पण इति च विज्ञेय इत्यर्थः। चशब्दोऽध्याहार्यः। अत एव **याज्ञवल्क्येन** पण इति संज्ञान्तरं दर्शितम्। **बृहस्पति**नापि

निष्कं सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः।
ताम्रकर्षकृता मुद्रा विज्ञेयः कार्षिकः पणः॥ इति।

**कर्षः** पलचतुर्थांशः। ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम्—इत्य**मरसिंहेना**भिधानात्। ते माषाः षोडशाक्षः कर्ष इति वोच्यन्त इत्यर्थः। एतेनाक्षकर्षशब्दयोः सुवर्णपरिमाणवचनत्वमित्यवगम्यते। अथवा पञ्चसुवर्णपरिमितं पलं

पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम्।

इति **याज्ञवल्क्य**वचनात् (या. १.३६४)। तस्य चतुर्थांशो विंशतिमाषाः तत्परिमितः कार्षापणः। अत एव **कात्यायनः**

माषो विंशतिमो भागो ज्ञेयो कार्षापणस्य तु।
काकिणी तु चतुर्भागा माषकस्य पणस्य च॥ इति।

ब्राह्मणाद्यधिकारिलेह(भेद?) व्यवस्थया दिव्यव्यवस्थामाह **नारदः** (ऋणादान ३३४)

ब्राह्मणस्य धटो देयः क्षत्रियस्य हुताशनः।
वैश्यस्य सलिलं देयं शूद्रस्य विषमेव तु॥

साधारणः समस्तानां कोशः प्रोक्तो मनीषिभिः ।
विषं विना ब्राह्मणस्य सर्वेषां वा तुला स्मृता ॥

**याज्ञवल्क्यः** (२.९८)

तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम् ।

यत्तु

सव्रतानां भृशार्तानां व्याधितानां तपस्विनाम् ।
स्त्रीणां वा न भवेद्दिव्यं यदि धर्मस्त्ववेक्ष्यते ॥ इति

**नारद**वचनं ( ऋणादान २५६ ) तदग्न्यम्बुविषयमित्युक्तं[1] **माधवीये विद्यारण्यश्रीचरणैः । पितामहः**

सर्वेषामेव वर्णानां कोशशुद्धिर्विधीयते ।
सर्वाण्येतानि सर्वेषां ब्राह्मणस्य विषं विना ॥

**कात्यायनः** (४२३)

गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान्वार्धुषिकांश्चैव ग्राहयेच्छूद्रवद् द्विजान् ॥

**कालिकापुराणे**

वर्णान्त्यस्य सदा देयं माषकं तप्तहेमजम् ।

वर्णानामन्त्यः प्रत्यन्तस्येति **कृत्यकल्पतरुकारः । नारदः**

क्लीबान्नरान्सत्त्वहीनान्परितश्चार्दितान्नरान् ।
बालवृद्धातुरान् स्त्रीश्च परीक्षेत धटे सदा ॥
स्त्रीणां तु न विषं प्रोक्तं न चापि सलिलं स्मृतम् ।
धटकोशादिभिस्तासामन्तस्तत्त्वं विचारयेत् ॥
नार्तानां तोयशुद्धिः स्यान्न विषं पित्तरोगिणाम् ।
( ऋणादान २५५,३१३-३१५ )
श्वित्र्यन्धकुनखादीनां नाग्निकर्म विधीयते ॥
न मज्जनीयाः स्त्रीबाला धर्मशास्त्रविचक्षणैः ।
रोगिणो ये च वृद्धाः स्युः पुमांसो ये च दुर्बलाः ॥

---

1 'तदम्बुविषय०' इति क—आदर्शे.

निरुत्साहान् व्याधिक्लिष्टानार्तांस्तोये निमज्जयेत् ।
सद्यो म्रियन्ते मज्जन्तः स्वल्पप्राणा हि ते स्मृताः ॥
साहसेष्यागतानेतान् नैव तोये निमज्जयेत् ।
न चापि हारयेदग्निं न विषेण विशोधयेत् ॥

**हारीतः**

कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम् ।
पित्तश्लेष्मवतां नित्यं विषं च परिवर्जयेत् ॥

**विष्णुः**( ९.२९-३० )—न श्लेष्मिकाणां व्याधितानां भीरूणां श्वास-
कासिनामम्बुसेविनामुदकं हेमन्तशिशिरयोश्चेति । **कात्यायनः** (४२४)

न लोहशिल्पिनामग्निः सलिलं नाम्बुसेविनाम् ।
मन्त्रयोगविदां चैव विषं दद्यात्तु न कचित् ॥
दिव्यं तु वर्जयेन्नित्यमात्रानां दैर्वृणम् ( ? ) ।
तण्डुलैर्न नियुञ्जीत व्रतिनं मुखरोगिणम् ।

**व्रतिनं** पयोव्रतादिनियमस्थम् । **पितामहः**

मद्यपस्त्रीव्यसनिनां कितवानां तथैव च ।
कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः ॥

**नारदः**( ऋणादान ३३२ )

महापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते ।
नास्तिके दृष्टदोषे च कोशदानं विवर्जयेत् ॥

**कात्यायनः** ( ४२७–४३० )

मातापितृद्विजगुरुवृद्धस्त्रीबालघातिनाम् ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥
लिङ्गिनां प्रमदानां च मन्त्रयोगक्रियाविदाम् ।
वर्णसङ्करजातानां पापाभ्यासप्रवर्तिनाम् ॥
एतेष्वेवाभियोगेषु निन्द्येष्वेव प्रयत्नतः ।
दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥

एतैरेव नियुक्तानां साधूनां दिव्यमर्हति ।
न सन्ति साधवो यत्र तत्र शोध्यः स्वकैर्नरैः ॥

**साधूनां दिव्यमर्हति** राजा प्रकल्पयितुमिति शेषः। **एतैः** प्रतिनिधिद्वारा दिव्यं कारणीयमित्यमुमर्थं द्रढयितुं पुनराह **स** एव ( कात्या. ४३१-३२ )

महापातकयुक्तेषु नास्तिकेषु विशेषतः ।
न देयं तस्य दिव्यं तु पापाभ्यासरतेर्भृगुः ॥
येषु पापेषु दिव्यानि प्रतिषिद्धानि यत्नतः ।
तारयेत्सज्जनैस्तानि नाभिशस्तं त्यजेन्नरः ॥

**तारयेत्** शोधयेत्। **अभिशस्तं** प्रतिनिधिद्वारा शोधनमकारयित्वा **न त्यजे**दित्यर्थः। प्रकारान्तरमाह **स** एव ( कात्या. ४३३ )

अस्पृश्याधमदासानां म्लेच्छानां पापकारिणाम् ।
प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि ॥
तत्प्रसिद्धानि दिव्यानि संशये तेषु निर्दिशेत् ।

एतदेतैर्नियुक्तानां साधूनामलाभे वेदितव्यमित्युक्तं **स्मृतिचन्द्रिकायाम्**। साधूनामप्यसामर्थ्ये प्रतिनिधिमभ्यनुजानाति स एव

कालदेशविरोधे तु यथायुक्तं प्रकल्पयेत् ।
अन्येन हारयेद्दिव्यं विधिरेष विपर्यये ॥

**हारयेत्** कारयेत्। **विपर्यये** सामर्थ्याभावे। कालविशेषे दिव्ये विशेषमाह **पितामहः**

चैत्रो मार्गशिरश्चैव वैशाखश्च तथैव च ।
एते साधारणा मासा दिव्यानामविरोधिनः ॥
धटः सर्वर्तुकः प्रोक्तो वाति वाते विवर्जयेत् ।
अग्निः शिशिरहेमन्तवर्षासु परिकीर्तितः ॥
शरद्ग्रीष्मे तु सलिलं हेमन्तशिशिरे विषम् ।

**नारदः**

कोशं तु सर्वदा देयं तुला स्यात्सार्वकालिकी ।

**विष्णुः** ( ९.२५–३० )–न कुष्ठ्यसमर्थलोहकाराणामग्निर्देयः शरद्ग्रीष्मयोश्च । न कुष्ठिपैत्तिकब्राह्मणानां विषं देयं प्रावृषि च । न श्लैष्मिकाणां व्याध्यर्दितानां भीरूणां श्वासकासिनामम्बुजीविनामुदकं हेमन्तशिशिरयोश्च–इति । **हेमन्त**निषेधोऽत्र पौषमासविषय एव न तु मार्गशीर्षविषयोऽपि । चैत्रो मार्गशिर इति पूर्वोदाहृतपितामहवचने मार्गशीर्षस्य सकलदिव्यसाधारणत्वाभिधानात् । **नारदः**[1] ( ऋणादान २५९ )

न शीते तोयशुद्धिः स्यान्नोष्णकालेऽग्निशोधनम् ।
न प्रावृषि विषं दद्यात् प्रवाते न तुलां तथा ॥
नापराह्णे न सन्ध्यायां न मध्याह्ने कदाचन ।

मध्याह्ने दिव्यनिषेधो जलव्यतिरिक्तविषयः । अत एव **पितामहः**

पूर्वाह्णेऽग्निपरीक्षा स्यात् पूर्वाह्णे च धटो भवेत् ।
मध्याह्ने तु जलं देयं धर्मतत्त्वमभीप्सता ॥
दिवसस्य तु पूर्वाह्णे कोशशुद्धिर्विधीयते ।
रात्रौ तु पश्चिमे यामे विषं देयं सुशीतलम् ॥ इति ।

यद्यपि दिव्ये वारविशेषविधायकं वाक्यं न श्रूयते तथापि शिष्टाचारादादित्यवारे दिव्यानि दातव्यानीत्युक्तं **विज्ञानेश्वराचार्यैः** । दिव्ये देशविशेषमाह **पितामहः**

प्राङ्मुखो निश्चलः कार्यः शुचौ देशे धटः सदा ।
इन्द्रस्थाने सभायां वा राजद्वारे चतुष्पथे ॥

**धट**ग्रहणं दिव्यान्तरस्याप्युलक्षणम् । **इन्द्रस्थान**ग्रहणं च प्रसिद्धदेवतायतनान्तरस्याप्युपलक्षणम् । अत एव दिव्यमात्रमुपक्रम्याह **नारदः**[1] ( ऋणादान २६५ )

सभाराजकुलद्वारदेवतायतनचत्वरे । इति ।

इन्द्रस्थानादीनां विषयविशेषे व्यवस्थामाह **कात्यायनः**

---

१ नारदः सभा···चत्वरे इति–एतन्नास्ति क–आदर्शे.

इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम् ।
नृपद्रोहप्रवृत्तानां राजद्वारे प्रयोजयेत् ॥
प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे ।
अतोऽन्येषु तु कार्येषु सभामध्ये विदुर्बुधाः ॥ इति ।

विहितदेशकालाद्यनादरेण दिव्यदाने तथा कृतस्यार्थव्यभिचारितामाह **नारदः**

अदेशकालदत्तानि बहिर्वासकृतानि च ।
व्यभिचारं सदार्थेषु कुर्वन्तीह न संशयः ॥

**वासो** जननिवासः तस्माद् **बहिःकृतानि** निर्जनप्रदेशकृतानीत्यर्थः । एतेन जनसमक्षमेव दिव्यं कर्तव्यमित्युक्तम् । अयमर्थो दर्शितः **पितामहे**नापि

प्रत्यक्षं दापयेद्दिव्यं राजा वाधिकृतोऽपि वा ।
ब्राह्मणानां श्रुतवतां प्रकृतीनां तथैव च ॥ इति ।

सकलदिव्यसाधारणं विधिमाह **पितामहः**

तत आवाहयेद्देवान् विधिनानेन धर्मवित् ।
प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् ॥
एह्येहि भगवन्धर्म अस्मिन् दिव्ये समाविश ।
सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः ॥
आवाह्य तु घटे धर्मं पश्चादङ्गानि विन्यसेत् ।

**ततो** दिव्योपयोगिसामग्रीसम्पादनानन्तरम् । **घट**ग्रहणमत्र सर्वेषां दिव्यानामुपलक्षणम् । एतेषां देवतावाहनादिधर्माणां सकलदिव्यसाधारणत्वस्य

इमं मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत् ।
आवाहनं च देवानां तथैव परिकल्पयेत् ॥ इति

**तेनै**वोक्तत्वात् । मन्त्रस्त्वादित्यचन्द्रावित्यादिरग्रे दर्शयिष्यते । अङ्गदेवताविन्यासप्रकारमाह **स** एव

इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा ।
वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा ॥
अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ।
इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः ।
कुबेरस्तु सुवर्णाभः अग्निश्चापि सुवर्णभः ॥
तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ।
ईशानस्तु भवेद्रक्त एवं ध्यायेत् क्रमादिमान् ॥
इन्द्रस्य दक्षिणे पार्श्वे वसूनावाहयेद्बुधः ।
धरो ध्रुवस्तथा सोम आपश्चैवानिलोऽनलः ॥
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥
देवेशेशानयोर्मध्य आदित्यानां तथायनम् ।
धाताऽर्यमा च मित्रश्च वरुणोंशो भगस्तथा ॥
इन्द्रो विवस्वान्पूषा च पर्जन्यो दशमः स्मृतः ।
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ॥
इत्येते द्वादशादित्या नामभिः परिकीर्तिताः ।
अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः ॥
वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ॥
भुवनाधीश्वरश्चैव कपाली च विशांपतिः ।
स्थाणुर्भवश्च भगवान् रुद्रास्त्वेकादश स्मृताः ॥
प्रेतेशरक्षोमध्ये च मातृस्थानं प्रकल्पयेत् ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥
वाराही चैव माहेन्द्री चामुण्डा गणसंयुता
निर्ऋतेरुत्तरे भागे गणेशायतनं विदुः ॥
वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते ।
गगनः स्पर्शनो वायुरनिलो मारुतस्तथा ॥

प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः ।
घटस्योत्तरभागे तु दुर्गामावाहयेद् बुधः ॥
एतासां देवतानां तु स्वनाम्ना पूजनं विदुः ।
भूषार्वसानं धर्माय दत्त्वा चार्घ्यादिकं क्रमात् ॥
अर्घ्यादि पश्चादङ्गानां भूषान्तमुपकल्पयेत् ।
गन्धादिकां निवेद्यान्तां परिचर्यां प्रकल्पयेत् ॥
चतुर्दिक्षु तथा होमः कर्तव्यो वेदपारगैः ।
आज्येन हविषा चैव समिद्भिर्होमसाधनैः ॥
सावित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत् ।

प्रणवादिकां गायत्रीमुच्चार्य पुनः स्वाहाकारान्तं प्रणवमुच्चार्य जुहुयादित्यर्थः । समिदाज्यचरवः प्रत्येकमष्टोत्तरशतवारं होतव्याः ।

अनुक्तसंख्या यत्र स्याच्छतमष्टोत्तरं स्मृतम् ।

इति स्मरणात् । होमानन्तरकर्तव्यमाह स एव

यमर्थमभियुक्तः स्याल्लिखित्वा तं तु पत्रके ।
मन्त्रेणानेन सहितं तत्कार्यं च शिरोगतम् ॥

मन्त्रश्च

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥ इति
( महाभारते आदिपर्वणि ७४.३० ) ।

एतत्सर्वं प्राड्विवाकेनोपवासादिनियमपूर्वकं कर्तव्यम् । तथा च **नारदः**

प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः ।
श्रुतवृत्तोपसंपन्नः शान्तचित्तो विमत्सरः ॥
सत्यसन्धः शुचिर्दक्षः सर्वप्राणिहिते रतः ।
उपोषितश्चार्द्रवासाः कृतदन्तानुधावनः ॥
सर्वासां देवतानां च पूजां कृत्वा यथाविधि । इति ।

दिव्यकर्तुरुपवासादिकमाह **याज्ञवल्क्यः** ( २.९७ )

सचैलं स्नातमाहूय सूर्योदय उपोषितम् ।
कारयेत्सर्वदिव्यानि नृपब्राह्मणसंनिधौ ॥

**पितामहो**ऽपि

एकरात्रोपोषिताय त्रिरात्रोपोषिताय वा ।
नित्यं देयानि दिव्यानि शुचये सार्द्रवाससे ॥ इति ।

तौ त्रिरात्रैकरात्रपक्षौ शक्ताशक्तविषयत्वेन व्यवस्थितौ द्रष्टव्यौ । दिव्यप्रयोगानन्तरं दक्षिणादानमुक्तेन विधिना दिव्यप्रयोगं कारयितू राज्ञः फलं चाह **पितामहः**

सद्भिः परिवृतो राजा शुद्धिमेतां प्रपूजयेत् ।
ऋत्विक्पुरोहिताचार्यान्दक्षिणाभिस्तु तोषयेत् ॥
एवं कारयिता राजा भुक्त्वा भोगान्मनोरमान् ।
महतीं कीर्तिमाप्नोति ब्रह्मभूयाय कल्पते ॥

इति श्रीकोदण्डपरशुरामेति······व्यवहारविवेकोद्द्योते दिव्यमातृकानिरूपणम् ॥ ७

अथ धटविधिः । तत्र **पितामहः**

विशालामुच्छ्रितां शुभ्रां धटशालां तु कारयेत् ।
यत्रस्थो नोपहन्येत श्वभिश्चाण्डालवायसैः ॥
कवाटबीजसंयुक्तां परिचारकरक्षिताम् ।
पानीयादिसमायुक्तामशून्यां कारयेन्नृपः ॥

बीजानि पञ्च व्रीह्यादीनि । धटार्थानि काष्ठान्याह **नारदः** (ऋणादान २६४-२६५ )

खादिरं कारयेत्तत्र निर्व्रणं शुक्लवर्जितम् ।
शांशपं तदभावे वा शालं वा कोटरैर्विना ॥
अञ्जनं तिन्दुकीसारं तिनिशो रक्तचन्दनः ।

अर्जुनस्तिलकोशोकतिनिशौ रक्तचन्दन इति **माधवीये** पाठः ।

एवंविधानि काष्ठानि धटार्थं परिकल्पयेत् ॥

**शांशपं** शिंशपावृक्षसम्बन्धि । देविकाशिंशपेति **पाणिनिस्मरणात्** ( पा.७.३.१ ) इकारस्याकारः । **एवंविधानि** इत्यन्यस्याप्यौदुम्बरादेर्यज्ञियस्य काष्ठस्य ससारस्य ग्रहणम् । अत एव **पितामहः**

छित्त्वा तु यज्ञियं वृक्षं यूपवन्मन्त्रपूर्वकम् ।
प्रणम्य लोकपालेभ्यस्तुला कार्या मनीषिभिः ॥
मन्त्रः सौम्यो वानस्पत्यश्छेदने जप्य एव च ।

**यूपवन्मन्त्रपूर्वक**मित्यनेन—ओषधे त्रायस्वैनम् ( वाज. सं ४.१ ) इत्यादिछेदनमन्त्रप्रयोगादिकमुक्तम् । **वानस्पत्यः** वनस्पते शतवल्शो विरोह-इति मन्त्रः( ऋ. ३.८.११ ) । सौम्यवानस्पत्ययोः-तुल्यार्थास्तु विकल्पेरन् (जै.१२.३.१०)-इति न्यायाद्विकल्प इति केचित् । समुच्चयद्योतकस्य चशब्दस्य व्यस्तस्यापि वानस्पत्य इत्यनेनान्वयात्समुच्चय इत्यपरे। छेदने कृते इति शेषः । वानस्पत्यस्य छेदनानन्तरं प्रयोगे **यूपवदि**त्यतिदेशात्सिद्धेऽपि पुनर्विधानमौपदेशिकेन सोमदैवत्येनातिदेशिकस्य तस्य बाधशङ्का मा भूदित्येतदर्थम् । धटनिर्माणप्रकारं तत्प्रमाणं चाह **पितामहः**

चतुर्हस्ता तुला कार्या पादौ कार्यौ तथाविधौ ।
अन्तरं तु तयोर्हस्तौ भवेदध्यर्धमेव वा ॥

**पादौ** तुलाधारकाक्षनामककाष्ठधारणार्थौ स्तम्भौ । तथाविधौ चतुर्हस्तौ । **अन्तरं** मध्यं **हस्तौ** हस्तद्वयं **अध्यर्धं** सार्धहस्तद्वयम् । अक्षकाष्ठस्य प्रमाणं पादस्तम्भमध्यप्रमाणाभिधानेनैव सूचितमिति न पृथगुपन्यस्तम् । तेनान्तरालप्रमाणपर्यालोचनया ततः किंचिदधिकमक्षकाष्ठं कर्तव्यम् । **अक्ष**काष्ठं पादस्तम्भयोर्मस्तकप्रदेशाद्यथा बहिर्न निःसरति तादृक् कार्यमिति **स्मृतिचन्द्रिकाकारः** । अत्र पादस्तम्भयोश्चतुर्हस्तत्वाभिधानं निखाततद्भागपरित्यागेन ज्ञातव्यम् । अत एवोक्तं **व्यासेन**

हस्तद्वयं निखेयं तु प्रोक्तं मुण्डकयोर्द्वयोः ।
षड्धस्तं तु तयोः प्रोक्तं प्रमाणं परिमाणतः ॥ इति ।

---

१ अस्मात्परं 'त्रिषु स्थानेषु यत्नतः' ( ९५ तमे पृष्ठे ) इत्यन्तो भागः क-आदर्शे गलित इव भाति.

**मुण्डकौ** पादस्तम्भौ । **पितामहे**नाप्युक्तं

हस्तद्वयं निखेयं तु पादयोरुभयोरपि । इति ।

हस्तप्रमाणं च दर्शितं स्मृत्यन्तरे ।

तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः ॥
हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् ।
तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् ॥ इति ।

**हस्तो वितस्तिद्वितयं** चतुर्विंशत्यङ्गुलो हस्त इत्यर्थः । तुलायां विशेषान्तरमाह **पितामहः**

चतुरस्रा तुला कार्या दृढा ऋज्वी तथैव च ।
कटकानि च देयानि त्रिषु स्थानेषु यत्नतः ॥

**कटकान्य**योमयानि । **त्रिषु स्थानेषु** उपान्तयोर्मध्ये च । कटकग्रहणमन्येषामप्युपयुक्तानामयोमयानां कीलकादीनामुपलक्षणार्थम् । तेनाक्षकाष्ठस्य मध्ये तुलायोजनार्थं आयसः पाशो देयः । एवमन्यान्यप्यपेक्षिताण्ययोमयानि तत्र तत्र दातव्यानि । पादस्तम्भादीनां स्थौल्यं तु विशेषास्मरणाद्यावती स्थौल्ये कृते दृढता भवति तावत्कार्यं शिष्टाचाराद्वा विशेषोऽवगन्तव्यः । पादस्तम्भौ पूर्वपश्चिमसंस्थानौ कृत्वोदगायामा तुला कार्या

धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलाम् । इति

वक्ष्यमाण**नारद**वचनात् ( ऋणादान २७२ ) । उदग्दक्षिणसंस्थानौ पादस्तम्भौ कृत्वा प्रागग्रा वा तुला कार्या

पश्चिमे तोलयेत्कर्तॄनन्यस्मिन् मृत्तिकां शुभाम् । इति

वक्ष्यमाण**पितामह**वचनात् । घटाङ्गतया तोरणादिकं विधत्ते **पितामहः**

तोरणे तु तथा कार्ये पार्श्वयोरुभयोरपि ।
घटादुच्चतरे स्यातां नित्यं दशभिरङ्गुलैः ॥

---

१ अस्मादनन्तरं 'वादित्रतूर्यनिर्घोषैः' (९७ तमे पृष्ठे) इत्यन्तो भागः नास्ति क—आदर्शे.

अवलम्बौ तु कर्तव्यौ तोरणाभ्यामधोमुखौ ।
मृन्मयौ सूत्रसम्बद्धौ धटमस्तकचुम्बिनौ ॥ इति ।

निर्णयौपयिकं प्रथमं धटारोहणमाह **पितामहः**

शिक्यद्वयं समासज्य पार्श्वयोरुभयोरपि ।
प्रागग्रान्कल्पयेद्दर्भाञ् शिक्ययोरुभयोरपि ॥
पश्चिमे तोलयेत्कर्तृनन्यस्मिन्मृत्तिकां शुभाम् ।
इष्टकाभस्मपाषाणकपालास्थिविवर्जिताम् ॥

अत्रेष्टकापाषाणयोर्वर्ज्यत्वाभिधानं मृत्तिकया सह समुच्चयो मा भूदित्येवमर्थं न तु विकल्पनिवृत्त्यर्थं नारदेन तयोरपि विधानात् । **नारदः** ( ऋणादान २७१-७२ )

शिक्यद्वयं समासज्य धटकर्कटयोर्दृढम् ।
एकत्र शिक्ये पुरुषमन्यत्र तुलयेच्छिलाम् ॥
धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलाम् ।
पिटकं पूरयेत्तस्मिन्निष्टकापांशुलोष्टकैः ॥

मृत्तिकाशिलेष्टकादीनां विकल्प इति **विज्ञानेश्वरादयः** । साम्यपर्यालोचनार्थं राज्ञा परीक्षकास्तत्र नियोक्तव्या इत्याह **पितामहः**

परीक्षका नियोक्तव्यास्तुलामानविशारदाः ।
वणिजो हेमकाराश्च कांस्यकारास्तथैव च ॥

परीक्षाप्रकारमाह स एव

कार्यः परीक्षकैर्नित्यमवलम्बसमो धटः ।
उदकं च प्रदातव्यं धटस्योपरि पण्डितैः ॥
यस्मिन्न प्लवते तोयं स विज्ञेयः समो धटः ।

**अवलम्बसमः** तोरणयोर्लम्बमानौ यौ मृन्मयाववलम्बौ तयोः समः । **नारदो**ऽपि ( ऋणादान २७३ )

प्रथमारोहणे ग्राह्यं प्रमाणं निपुणैः सह ।
तुलाशिरोभ्यां तुल्यं तु तोरणन्यस्तलक्षणम् ॥

तोलनानन्तरकर्तव्यमाह **पितामहः**

तोलयित्वा नरं पूर्वं पश्चात्तमवतार्य तु ।
धटं तु कारयेन्नित्यं पताकाध्वजशोभितम् ॥
तत आवाहयेद्देवान्विधिनानेन मन्त्रवित् ।
वादित्र[1]तूर्यनिर्घोषैर्गन्धमाल्यानुलेपनैः ॥

धर्मावाहनप्रभृत्यभियुक्तशिरसि पत्रबन्धनान्तं सर्वदिव्यसाधारणं कर्मजातं प्रागेव प्रपञ्चितम् । धटपूजायां गन्धादिविशेषमाह **नारदः**

रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः ।
अर्चयेत्तु धटं पूर्वं ततः शिष्टांस्तु पूजयेत् ॥

**शिष्टान्** अवशिष्टानिन्द्रादीन् । पत्रबन्धनानन्तरं प्राड्विवाको धटमामन्त्रयेतेत्याह **पितामहः**

धटमामन्त्रयेच्चैव विधिनानेन शास्त्रवित् ।

**विधिना** मन्त्रेण **शास्त्रवित्** प्राड्विवाकः । मन्त्रश्च दर्शितस्तेनैव

त्वं धट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् ।
धकाराद्धर्ममूर्तिस्त्वं टकारात्कुटिलो नृणाम् ॥
धृतो भावयसे यस्माद्धटस्तेनाभिधीयसे ।
त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च ॥
त्वमेव देव जानीषे न विदुर्यानि मानवाः ।
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ॥

शोध्यस्यापि धटामन्त्रणं तन्मन्त्रं चाह **याज्ञवल्क्यः** (२.१००-१०२)

तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः ।
प्रतिमानसमीभूतो रेखां कृत्वावतारितः ॥
त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता ।
तत्सत्यं वद कल्याणि संशयान्मां विमोचय ॥

---

१ 'वादित्रतूर्य'इत्यनन्तरं...'साक्षिणो ब्राह्मणश्रेष्ठा यथा'इत्यन्तो भागः (९९ तमे पृष्ठे) नास्ति क-आदर्शे.

यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय ।
शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥

**तुलाश्रितः** तुलामारूढः । **प्रतिमानसमीभूतः** प्रतिमानेन मृदादिना समीकृतः । भवतिरत्र प्रयोजकव्यापारपरः । **रेखां कृत्वा** तोरणे साम्यचिह्नं कृत्वा । **अवतारित** इति क्तप्रत्ययदर्शनादवतारणानन्तरमभिमन्त्रणम् । ततः प्राड्विवाकः शिरोगतपत्रकं शोध्यं पुनर्धटमारोपयेत् । तथा च **नारदः** (ऋणादान २७६)

समयैः परिगृह्याथ पुनरारोप्य तं घटे ।
निवाते वृष्टिरहिते शिरस्यारोप्य पत्रकम् ॥

**समयैः परिगृह्य** तुलाधारकं शपथैर्नियम्य । शपथाश्च **विष्णुना** दर्शिताः (१०.९)

ब्रह्मघ्नो ये स्मृता लोका ये लोकाः कूटसाक्षिणः ।
तुलाधारस्य ते लोकास्तुलां धारयतो मृषा ॥ इति

पुनरारोपणसमयेऽभिमन्त्रणमाह **नारदः** (ऋणादान २७८-२७९)

त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च ।
त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोऽयं मानवस्तोल्यते त्वया ।
तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि ॥
देवासुरमनुष्याणां सत्यैस्त्वमतिरिच्यसे ।
सत्यसन्धोऽसि भगवञ् शुभाशुभविभावने ॥
आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥

इति ।

पुनरारोपणानन्तरकर्तव्यमाह **पितामहः**

ज्योतिर्विद् ब्राह्मणः श्रेष्ठः कुर्यात्कालपरीक्षणम् ।
विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैः ॥

साक्षिणो ब्राह्मणश्रेष्ठा यथादृष्टार्थवादिनः ।
ज्ञानिनः शुचयोऽलुब्धा नियोक्तव्या नृपेण तु ॥
शंसन्ति साक्षिणः सर्वे शुद्ध्यशुद्धी नृपे तदा ।

दशगुर्वक्षरोच्चारणपरिमितः कालः प्राणः । षट् प्राणाः **विनाडिका** । तथा च स्मृत्यन्तरं

दशगुर्वक्षरः प्राणः षट् प्राणाः स्याद्विनाडिका । इति ।

**विष्णुधर्मोत्तरेऽपि**

लघ्वक्षरसमा मात्रा निमेषः परिकीर्तितः ।
अतः सूक्ष्मतरः कालो नोपलभ्यो भृगूत्तम ॥
द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणो दश त्रुटिः स्मृतः ॥
विनाडिका तु षट् प्राणास्तत्षष्ट्या नाडिका स्मृता ।
अहोरात्रं तु तत्षष्ट्या नित्यमेव प्रकीर्तितम् ॥ इति ।

शुद्ध्यशुद्धिविनिश्चयोपायमाह **नारदः** (ऋणादान २८३)

तुलितो यदि वर्धेत विशुद्धः स्यान्न संशयः ।
समो वा हीयमानो वा न विशुद्धो भवेन्नरः ॥

**वर्धेत** ऊर्ध्वं गच्छेत् **हीयमानः** अधो गच्छेत् । **व्यासः**

अधोगतिर्न शुध्येत शुध्यत्यूर्ध्वगतिस्तथा ।
समो नहि विशुद्धः स्यादेषा शुद्धिरुदाहृता ॥

**बृहस्पतिः**

घटेऽभियुक्तस्तुलितो हीनश्चेद्धानिमाप्नुयात् ।
तत्समस्तु पुनस्तोल्यो वर्धितो विजयी भवेत् ॥

**पुनस्तोल्यः** पुनर्देवतावाहनाद्यङ्गसहितं सर्वं कर्म विधाय तोलनीय इत्यर्थः । यत्तु कैश्चित्पौरस्त्यैस्तस्मिन्नेव प्रयोगे पुनस्तोलनमुक्तं तदसुन्दरं, साम्यहेतोः कर्मवैगुण्यस्य तादवस्थ्यात् । द्वित्रेष्वपि प्रयोगेषु साम्ये कर्म-

१ अस्मादनन्तरं 'द्वित्रेष्वपि प्रयोगेषु साम्ये' इत्यन्तो भागो नास्ति (९९ तमे पृष्ठे) क-आदर्शे.

वैगुण्यशङ्कायां अनवस्थापत्तिपराहततत्वात्समस्यापि पराजयः । दण्डप्रायश्चित्तयोस्तु हीयमानापेक्षया तस्य स्वल्पत्वमभिप्रेत्याह **पितामहः**

तुलितो यदि वर्धेत शुद्धो भवति धर्मतः ।
हीयमानो न शुद्धः स्यादेकेषां तु समः शुचिः ॥
अल्पपापः समो ज्ञेयो बहुपापस्तु हीयते ।

**एकेषा**मिति ग्रहणं पूजनार्थं न तु स्वमते समस्य शुचित्वद्योतनार्थमल्पपापस्याप्यशुचित्वादिति **स्मृतिचन्द्रिकाकारः** । यत्तु **रत्नाकर**निबन्धे एकेषां तु समो शुचिरिति वचनं अल्पपापः समो ज्ञेय इति वचनात् साम्ये संशयपरमेवेत्युक्तं तदयुक्तं, वाक्यानार्जवापत्तेः । शिक्यादिच्छेदे पुनस्तत्सज्जीकृत्य तोलनीय इत्याह **कात्यायनः** (४४०)

शिक्यच्छेदे तुलाभङ्गे तथा चापि गुणस्य वा ।
शुद्धेस्तु संशये चैनं परीक्षेत पुनर्नरम् ॥

शुद्धिसंशयहेतवो **नारदेन** प्रपञ्चिताः

तुलाशिरोभ्यामुद्भ्रान्तं विचलं न्यस्तलक्षणम् ।
यदा वायुप्रणुन्नं वा तदा नैकतरं वदेत् ॥

अस्यार्थः । यदा तुलान्तौ तिर्यक् चलितौ यदा च समताज्ञानार्थं न्यस्तं चिह्नमपैति यदा च वायुना प्रेरिता तुला ऊर्ध्वमधश्च कम्पते तदा जयं पराजयं वा न वदेदित्यर्थः । **व्यासः**

कक्षच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा ।
रज्जुच्छेदेऽक्षभङ्गे वा दद्याच्छुद्धिं पुनर्नृपः ॥

**कक्ष्यं** (क्षं?) शिक्यतलम् । **कर्कटौ** तुलोपान्तस्थौ शिक्याधारावीषद्वक्रौ कर्कटकशृङ्गसन्निभावायसकीलकौ । **अक्षः** पादस्तम्भयोरुपरिनिविष्टस्तुलाधारपट्टः । यत्तु

कक्षच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा ।
रज्जुच्छेदेऽक्षभङ्गे वा तथैवाशुद्धिमादिशेत् ॥ इति ।

स्मृत्यन्तरवचनं तदाकस्मिककक्ष्यच्छेदादिविषयं कात्यायनवचनं तु दृश्यमानकारणकशिक्यच्छेदादिविषयमिति **विज्ञानेश्वराचार्याः** । इति श्रीकोदण्डपरशुरामेति···· व्यवहारविवेकोद्द्योते घटविधिः ॥ ८ ॥

अथाग्निविधिः । तत्र **पितामहः**

अग्नेर्विधिं प्रवक्ष्यामि यथावच्छास्त्रचोदितम् ।
कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमं तथा ॥
आग्नेयं मण्डलं चाद्यं द्वितीयं वारुणं तथा ।
तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम् ॥
पञ्चमं त्विन्द्रदैवत्यं षष्ठं कौबेरमुच्यते ।
सप्तमं सोमदैवत्यमष्टमं सर्वदैवतम् ॥
पुरस्तान्नवमं यत्तु तन्महत्पार्थिवं विदुः ।
गोमयेन कृतानि स्युरद्भिः पर्युक्षितानि च ॥

सावित्रं त्वष्टमं तथा नवमं सर्वदैवत्यमिति दिव्यविदो विदुरिति **विज्ञानेश्वराचार्यैः** पठितम् । पूर्वोक्ते दिव्यप्रदेशे भूशुद्धिं संपाद्य तत्र प्राड्विवाकः पूर्वोक्तनियमयुक्तो नवमण्डलानि कुर्यात् । तानि च पुरस्तान्नवममित्यष्टानां मण्डलानां पूर्वभागे नवममण्डलस्य कर्तव्यताभिधानात् पश्चिमे मण्डले स्थित्वेति वक्ष्यमाणवचनलिङ्गाच्च प्राक्संस्थानि कर्तव्यानि । तानि चाष्टौ क्रमेणाग्न्यादिदैवत्यानि नवमं महत् मण्डलान्तरापेक्षयाधिकपरिमाणमपरिमिताङ्गुलं पार्थिवं पृथिवीदैवत्यम् । यद्यपि मण्डलानां हविर्वत्तदुद्देशेन त्यज्यमानतया मन्त्रवत्तत्प्रकाशकतया वा नाग्न्यादिदैवत्यत्वं तथाप्याग्नेयेत्यादिदेवतातद्धितान्तशब्दप्रयोगलक्षणसमाख्याबलादग्न्यादिपूजा[1]स्थानत्वेनाग्न्यादिदैवत्यत्वं द्रष्टव्यम् । यथा पूर्वमीमांसायां प्रैतु होतुश्चमसः प्र ब्रह्मण इत्यादि प्रैषमन्त्रस्थाया होतुश्चमसो ब्रह्मणश्चमस इत्यादिसमाख्याया बलाद्धोतृब्रह्मादीनां चमसभक्षणं सिद्धान्तितम् । अतस्तेषु मण्डलेष्वग्न्यादिदेवतापूजनं कार्यम् । मण्डलपरिमाणमाह स एव

---

१ 'अग्न्यादिपूजास्थानत्वेन' इति एतन्नास्ति अ–आदर्शे.

द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम् ।
अष्टभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ॥
षट्पञ्चाशत्समधिकं भूमेस्तु परिकल्पना ।

**मण्डलान्तरं** अन्यन्मण्डलम् । एकैकं सान्तरालं मण्डलं द्वात्रिंशदङ्गुलम् । एवं चाष्टभिर्मण्डलैरन्तरालाष्टकसहितैरङ्गुलानां षट्पञ्चाशदधिकं शतद्वयं भवति । नवमं तु मण्डलमपरिमिताङ्गुलकमिति न तदस्यां गणनायां निविशते । सान्तरालं मण्डलं द्वात्रिंशदङ्गुलं तत्र षोडशाङ्गुलं मण्डलं[1] षोडशाङ्गुलं तदन्तरालमित्याह **याज्ञवल्क्यः** ( २. १०६ )

षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम् ।

**तावत्** षोडशाङ्गुलम् । **अन्तरं** मध्यम् । यदि दिव्यकर्तुः पदं षोडशाङ्गुलादधिकं तदा तत्पदसंमितं मण्डलमवशिष्टाङ्गुलमन्तरालमिति द्वात्रिंशदङ्गुलता सान्तरालस्य मण्डलस्य सम्पादनीया । अत एव **नारदः** । ( ऋणादान २९९ )

मण्डलस्य प्रमाणं तु कुर्यात्तत्पदसंमितम् ।

**पितामहोऽपि**

द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम् ।
कर्तुः पदसमं कार्यं मण्डलं तु प्रमाणतः ॥

यत्तु **नारद**वाक्यं ( ऋणादान २८५-२८६ )

द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम् ।
अष्टाभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ॥
चत्वारिंशत्समधिकं भूमेरङ्गुलमानतः । इति

तत्र नवमाष्टमयोर्मण्डलयोर्यदन्तरालं षोडशाङ्गुलं तस्य गन्तव्यत्वादनन्तर्भावेनाङ्गुलपरिगणनमिति न विरोधः । यत्तु एतदेव वाक्यं **कल्पतरौ** चतुर्विंशतिराख्याता भूमेस्तु परिकल्पना इत्येवं पठितं तत्र षोडशा-

---

१ 'मण्डलं षोडशाङ्गुलम्' इत्यत आरभ्य 'रत्नाकरे तु एतच्च' (१०३ तमे पृष्ठे) इत्यन्तो भागो गलितः क-आदर्शे.

ङ्गुलस्य प्रथमस्यावस्थानमण्डलस्यागन्तव्यत्वेन तदप्यनन्तर्भाव्य गम्यभूमेरङ्गुलानां परिगणनमिति न विरोधः। अङ्गुलप्रमाणं तु घटविधिप्रकरणे दर्शितम्। यत्तु **विष्णु**वाक्यं (११.२) षोडशाङ्गुलं तावदन्तरं मण्डलसप्तकं कुर्यादिति तद्गन्तव्यमण्डलविषयं

स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत्। इति

**याज्ञवल्क्य**वचनेन (या.२.१०६) समानार्थं द्रष्टव्यम्। **रत्नाकरे** तु एतच्च मण्डलसप्तकं मङ्गलाष्टकलङ्घनासामर्थ्ये इत्युक्तम्। प्रोक्षितेष्वेतेषु प्रागग्राः कुशाः प्रसारणीयाः

मण्डले मण्डले देयाः कुशाः शास्त्रप्रचोदिताः।
विन्यसेच्च ततः कर्ता तेषु नित्यमिति स्थितिः॥ इति

**पितामह**स्मरणात्। ततः प्राड्विवाकः प्रथममण्डलाद् दक्षिणतो लौकिकाग्निं प्रतिष्ठाप्य शान्त्यर्थमष्टोत्तरशतवारमाज्यं जुहुयात्

शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतम्। इति

वचनात्। होमश्चात्र अग्नये पावकाय स्वाहेति मन्त्रेण कार्य इत्युक्तं **विज्ञानेश्वराचार्यैः**। होमानन्तरं तस्मिन्नेवाग्नावयःपिण्डप्रतापनं लोहकारेण कार्यम्। तथा च **नारदः** (ऋणादान २८८-२८९)

जात्यैव लोहकारो यः कुशलश्चाग्निकर्मणि।
दृष्टप्रयोगश्चान्यत्र तेनायोऽग्नौ प्रतापयेत्॥
अग्निवर्णमयःपिण्डं सस्फुलिङ्गं सुरक्षितम्।

चाण्डालादिस्पर्शो यथा न भवति तथा रक्षितम्। **अयःपिण्डस्य** परिमाणादिकमाह **पितामहः**

अस्रिहीनं समं कृत्वा अष्टाङ्गुलमयोमयम्।
पिण्डं तु तापयेदग्नौ पञ्चाशत्पलिकं समम्॥

**सममस्रिहीनं** सर्वतोऽस्रिरहितं सर्वतः समवृत्तमिति यावत्। **अष्टाङ्गुलं** अष्टाङ्गुलायामम्। **पञ्चाशत्पलिकं** पञ्चाशत्पलपरिमितम्। पुनः

सप्तग्रहणं समन्तात्प्रतापयेदित्येतदर्थम् । **कालिकापुराणे** त्वयःपिण्डस्य द्वादशाङ्गुलायामत्वमुक्तं

शतार्धपलिकं वृत्तं द्वादशाङ्गुलमायतम् ।
लौहमाग्नेमयं ध्मातं देयं राज्ञाभिशापिने ॥ इति ।

अनयोः पक्षयोर्विकल्पः । **शङ्खलिखिताभ्या**मयःपिण्डस्य षोडशपलत्वमुक्तं—अथवा सप्ताश्वत्थपत्रान्तरितं षोडशपलमग्निवर्णं लोहपिण्डमञ्जलिनादाय सप्तमपदमर्यादं गच्छेत्—इति । **सप्तमपदमर्यादं** सप्तमं मण्डलं यावत् । मर्यादाशब्दोऽत्राभिविधिपरः । अत्रापि विकल्पः । पौरस्त्यनिबन्धे त्वियं षोडशपलसंख्या असामर्थ्ये इत्युक्तम् । एतच्चायःपिण्डप्रतापनं त्रिः कर्तव्यं तृतीयतापे तप्यन्तमिति वक्ष्यमाण**नारद**वचनलिङ्गात् । त्रिःप्रतापनं लोहशुद्ध्यर्थम् । सुतप्तमयःपिण्डमुदके निक्षिप्य पुनः सन्ताप्योदके निक्षिप्य पुनः प्रतापनम् । तृतीयप्रतापनकाले प्राड्विवाको धर्मावाहनाद्यभियुक्तशिरःपत्रबन्धनान्तं प्रागुक्तं सकलदिव्यसाधारणं कर्मजातं कुर्यात् । वह्निपूजायां पुष्पादिविशेषमाह **पितामहः**

तत्र पूजां हुताशस्य कारयेन्मनुजाधिपः ।
रक्तचन्दनधूपाभ्यां रक्तपुष्पैस्तथैव च ॥

**तत्र** अयःपिण्डाग्नौ **हुताशस्य** आवाहितस्य धर्मरूपस्याग्नेः । एतदनन्तरमभियुक्तकर्तव्यमाह **हारीतः**

प्राङ्मुखस्तु ततस्तिष्ठेत्प्रसारितकराङ्गुलिः ।
आर्द्रवासाः शुचिश्चैव शिरस्यारोप्य पत्रकम् ॥

अवस्थानं च प्रथमे मण्डले कर्तव्यम् । तथा च **पितामहः**

प्रथमे मण्डले तिष्ठेत्प्राङ्मुखः प्राञ्जलिः शुचिः ।

तत्र स्थितस्य शोध्यस्य करशोधनं कार्यमित्याह स एव

लक्षयेयुः क्षतादीनि हस्तयोस्तस्य कारिणः ।

**कारिणः** कार्यार्थनियुक्ताः पुरुषाः । **नारदो**ऽपि

लक्षयेत्तस्य चिह्नानि हस्तयोरुभयोरपि ।
प्राकृतानि च गूढानि सव्रणान्यव्रणानि च ॥

शोधनप्रकारमाह **विष्णुः** (११.१०)

करौ विमृदितव्रीही तस्यादावेव लक्षयेत् ।

विमृदिता व्रीहयो याभ्यां तौ तथोक्तौ । व्रीहिभिर्विमर्दनं तयोर्यथा-वस्थितरूपाकलनहेतुः । एवं शोध्यमानयोस्तयोर्व्रणादिचिह्नेषु सत्सु अग्नि-धारणात्प्राक् स्थितान्येतानीति ज्ञानार्थमलक्तकादिरसेन तान्यङ्कनीयानि । तथा च **नारदः** (ऋणादान ३०१)

हस्तक्षतेषु सर्वेषु कुर्याद्धंसपदानि तु ।
तान्येव पुनरालक्ष्येद्धस्तौ बिन्दुविचित्रितौ ॥

**तानि** पूर्वकृतानि चिह्नानि । **पुनः** अग्निधारणानन्तरम् । एतदनन्तरं प्राड्विवाककर्तव्यमाह **याज्ञवल्क्यः** (२.१०३)

करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत् ।
सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् ॥

**तावत्** तावत्कृत्वः सप्तकृत्वः । सूत्रेण वेष्टयेदिति तावदित्यस्य क्रिया-विशेषणत्वमाश्रित्यार्थ उक्तो **विज्ञानेश्वराचार्यैः** । अस्माकं तु तावतां सूत्राणां समाहारस्तावत्सूत्रं **तावत्सूत्रेण** सप्तभिः सूत्रैर्वेष्टयेदित्ययमर्थो वचनान्तरसंवादी प्रतिभाति । तावच्छब्दस्य संख्याशब्दत्वात्समाहारे द्विगुः स्त्रीलिङ्गाभावान्न ङीप् त्रिभुवनमितिवत् । सप्तकृत्वो वेष्टनं तु वाक्यानुपल-म्भेऽपि शिष्टाचारतो ग्राह्यम् । सप्तभिः शुक्लैः सूत्रैरश्वत्थपत्रादिसहितं हस्त-द्वयं वेष्टनीयं

वेष्टयीत सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिः । इति

**नारदे**नाभिधानात् । अश्वत्थपत्रैः सप्तभिरपि मिथः समैर्भाव्यं

पत्रैरञ्जलिमापूर्य आश्वत्थैः सप्तभिः समैः । इति

स्मरणात् । सप्त शमीपत्राण्यक्षतान् सप्त दूर्वापत्राणि दध्यक्ताक्षतां-श्चाश्वत्थपत्राणामुपरि स्थापयेत् ।

सप्तपिप्पलपत्राणि शमीपत्राण्यथाक्षतान् ।
दूर्वायाः सप्त पत्राणि दध्यक्तांश्चाक्षतान्न्यसेत् ॥ इति

वचनात् । पुष्पाण्यपि तत्र स्थापनीयानीत्याह **पितामहः**

सप्तपिप्पलपत्राणि अक्षतान्सुमनो दधि ।
हस्तयोर्निक्षिपेत्तत्र सूत्रेणावेष्टनं तथा ॥

**सुमनसः** पुष्पाणि । **सूत्रेणे**ति जातावेकवचनम् । यत्तु

अयस्तप्तं तु पाणिभ्यामर्कपत्रैस्तु सप्तभिः ।
अन्तर्हितं हरन् शुद्धस्त्वदग्धः सप्तमे पदे ॥

इत्यर्कपत्राणां विधानं तदश्वत्थपत्राणामलाभे वेदितव्यम् । अत एवाश्वत्थपत्राणां मुख्यतावगमनाय तानि प्रशंसति **पितामहः**

पिप्पलाज्जायते वह्निः पिप्पलो वृक्षराट् स्मृतः ।
अतस्तस्य तु पत्राणि हस्तयोर्निक्षिपेद् बुधः ॥ इति ।

ततः सम्यक् प्रतप्तेऽयःपिण्डे प्राड्विवाकस्तत्रस्थमग्निं त्वमग्ने वेदा इत्यादिमन्त्रेणाभिमन्त्रयेत् । स च मन्त्रो दर्शितः **पितामहेन**

त्वमग्ने वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे ।
त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम् ॥
जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम् ।
पापं पुनासि वै यस्मात्तस्मात्पावक उच्यते ॥
पापेषु दर्शयात्मानमर्चिष्मान्भव पावक ।
अथवा शुद्धभावेषु शीतो भव हुताशन ॥
त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥

एतदनन्तरं शोध्योऽप्यग्निं मन्त्रयते । अभिमन्त्रितवतश्च तस्य हस्तयोरयःपिण्डं स्थापयेत् । तदेतदाह **याज्ञवल्क्यः** ( २. १०४-१०५ )

त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ।
साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम ॥
तस्येत्युक्तवतो लोहं पञ्चाशत्पलिकं समम् ।
अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि ॥

**पुण्यपापेभ्य** इति ल्यब्लोपे पञ्चमी । पुण्यपापानि पर्यालोच्येत्यर्थः । **ब्रूहि** दर्शय । **हस्तयोः** अश्वत्थपत्रादिसहितयोः सूत्रैर्वेष्टितयोर्हस्तयोरित्यर्थः । अयःपिण्डस्थापनं राज्ञा प्राड्विवाकेनान्येन वा सन्दंशेन गृहीत्वा कर्तव्यम् । तथा च **पितामहः**

ततस्तं समुपादाय राजा धर्मपरायणः ।
सन्दंशेन नियुक्तो वा हस्तयोस्तस्य निक्षिपेत् ॥

सन्दंशेन तमुपादायेत्यन्वयः । गृहीतायःपिण्डस्य शोध्यस्य कर्तव्यमाह **विष्णुः** ( ध.सू.११. ५-७ )—ततस्तत्राग्निवर्णं लोहपिण्डं पञ्चाशत्पलिकं समं दद्यात्तं समादाय नातिद्रुतं न च विलम्बितं मण्डलेषु पदन्यासं कुर्वन् व्रजेत् । ततः सप्तमं मण्डलमतीत्य भूमौ लोहपिण्डं पातयेत्—इति । **मण्डलेषु** द्वितीयादिमण्डलेषु । **सप्तममण्डलमतीत्य** सप्तममण्डलमतिक्रम्याष्टमं मण्डलं गत्वेत्यर्थः । **भूमौ** शुष्काभिनवतृणपुञ्जान्वितायां नवममण्डलरूपायां भूमावित्यर्थः । वक्ष्यमाणवचनानुरोधात् । **नारदोऽपि** ( २. २९६-२९९ )

हस्ताभ्यां तं समादाय प्राड्विवाकसमीरितः ।
स्थित्वैकस्मिंस्ततोऽन्यानि व्रजेत्सप्त त्वजिह्मगः ॥
असंभ्रान्तः शनैर्गच्छेदक्रुद्धः सोऽनलं प्रति ।
न पातयेत्तामप्राप्य या भूमिः परिकल्पिता ॥
न मण्डलमतिक्रामेन्न चार्वाक् स्थापयेत्पदम् ।
मण्डलं चाष्टमं गत्वा ततोऽग्निं विसृजेन्नरः ॥

**एकस्मिन्** प्रथमे मण्डले । **अग्निं विसृजेत्** नवमे मण्डले शेषः । अत एव **पितामहः**

त्वरमाणो न गच्छेत्तु स्वस्थो गच्छेच्छनैः शनैः ।
न मण्डलमतिक्रामेन्नान्तरा स्थापयेत्पदम् ॥
अष्टमं मण्डलं गत्वा नवमे निक्षिपेद् बुधः ।

**नवमे** मण्डले नूतनतृणसमन्वितेऽग्निविसर्गः कार्यः ।

मण्डलानि तथा सप्त षोडशाङ्गुलमानतः ।
तावदन्तरतो गच्छेद्गत्वा नवतृणे क्षिपेत् ॥ इति

**कालिकापुराण**वचनात् । अयःपिण्डविसर्गानन्तरं परीक्षकैर्यत्कार्यं तदाह **नारदः**

तस्यैवं मुक्तपिण्डस्य कुर्यात्करनिरीक्षणम् ।
पूर्वदृष्टेषु चिह्नेषु ततोऽन्यत्रापि लक्षयेत् ॥
मण्डलं रक्तसंकाशं यत्रान्यद्वाग्निसम्भवम् ।
सोऽविशुद्धस्तु विज्ञेयो सत्यधर्मव्यवस्थितः ॥
यदा तु न विभाव्येते दग्धाविति करौ तदा ।
व्रीहीनतिप्रयत्नेन सप्तवारांस्तु मर्दयेत् ॥
मर्दिते यदि नो दग्धः सभ्यैरेवं विनिश्चितम् ।
शोध्यः[1] शुद्धः स संस्कृत्य[2] दग्धो दण्ड्यो यथाक्रमम् ॥

**ततोन्यत्रापि** चिह्नरहितप्रदेशेपि । **न विभाव्येते** न निश्चीयेते।

**विष्णुः** (११. ८)

यो हस्तयोः कचिद्दग्धस्तमशुद्धं विदुर्बुधाः ।
न दग्धं ( ग्धः? ) सर्वथा यस्तु स विशुद्धो भवेन्नरः ॥

यवानां वा मर्दनं कार्यमित्याह **पितामहः**

ततस्तद्धस्तयोः प्रास्येद् व्रीहीन्वा यदि वा यवान् ।
निर्विशङ्केन तेषां तु हस्ताभ्यां मर्दने कृते ॥
निर्विकारे दिनस्यान्ते शुद्धिं तस्य विनिर्दिशेत् ।

---

१ 'शोध्यः' इत्यस्य स्थाने 'प्रोच्यः' इति ब–आदर्शे. २ 'सत्कृत' इति ब.

**प्रास्येत्** प्रक्षिपेत्। क्वचिन्निर्विकारो यदा हस्त इति पाठः। तस्मिन् पाठे दिनान्तलक्षणकालबोधकाभावात्तदैव शुद्ध्यवधारणम्। न च दिनान्त इति पाठे

मुक्त्वाग्निं मृदितव्रीहिरद्ग्ध (रदग्धः?) शुद्धिमवाप्नुयात् (शुद्धिमाप्नुयात्?)।

इति **याज्ञवल्क्य**वचनविरोधः (या.२.१०७)। तत्र मुक्त्वेत्यानन्तर्यार्थस्य क्त्वाप्रत्ययस्य प्रयोगेण कृतव्रीहिमर्दनयोः करयोर्विकारस्यादर्शने तप्तायःपिण्डविमोकानन्तरमेव शुद्धिरवधारणीयेत्यभिधानादिति वाच्यं क्त्वाप्रत्ययस्य हि पूर्वकालत्वमर्थो न त्वानन्तर्यं—समानकर्तृकयोः पूर्वकाले (पा. ३. ४. २१)—इति **पाणिनि**स्मरणाद्धारियोजनयागस्य संस्रावस्रुग्विमोकाभ्यां व्यवधानेन परिधिप्रहरणानन्तर्याभावेपि वेदे प्रहृत्य परिधीञ्जुहोति—इति क्त्वाप्रयोगदर्शनाल्लोकेपि[1] गमनस्योपवेशनादिक्रियान्तरव्यवधानेन भोजन्मनेतयो भावेपि (? भोजनानन्तर्याभावेपि) भुक्त्वा गच्छतीति प्रयोगदर्शनाच्च। किं च क्त्वाप्रत्ययस्यानन्तर्यार्थत्वे पूर्वमीमांसाधिकरणविरोधः। तत्र हि वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत—इति वाक्येन विधीयमानो बृहस्पतिसवः किं शरदि वाजपेयेन इति श्रुते प्रधानकाले शरदि प्रधानेन सहैकप्रयोगनिवेशी कर्तव्य उत प्राकृतत्वादतिदेशतः प्राप्ते स्वकाले वसन्तेऽनुष्ठेय इति संशय्य शरदि वाजपेयेनेत्यनेन न करणभूतो वाजपेयः शरदि कर्तव्यतया चोद्यते किं तर्हि वाजपेयकरणक इतिकर्तव्यताविशिष्टो यः प्रयोगफलभावनादिशब्दव्यपदेश्यः पुंव्यापारः फलार्थस्तस्य कालो विधीयते। शरदि वाजपेयेनेति तृतीयान्तेन पदेन फलसामग्रीभूतस्य तस्य निर्देशात्फलार्थत्वाच्चिकीर्षितस्य तस्य तत्कालापेक्षितत्वाच्च। ततश्च तस्य व्यापारस्याङ्गप्रधानव्यासक्तत्वात्प्रधानवदङ्गानामपि तत्कालयोगः समान इति वाजपेयवद्बृहस्पतिसवस्यौपदेशिककालेनातिदेशिकः कालो बाध्यते। न चायमौपदेशिकः कालो बृहस्पतिसवव्यतिरिक्तेष्वङ्गेषु सावकाशत्वाद् बृहस्पतिसवे नातिदेशिकं कालं बाधितुं प्रभवतीति वाच्यं, अतिदेशस्यापि कालव्यतिरिक्ताङ्गेषु सावकाशत्वेनेतराङ्गेष्विव बृहस्पतिसवेपि निरर्गलतया प्रवर्तमानं कालविधिं

१ 'क्त्वाप्रयोग...भुक्त्वा गच्छतीति'-एतद्वाक्यं नास्ति ब-आदर्शे.

सङ्कोचयितुं न सामर्थ्यमिति वक्तुं सुशकत्वात् । तस्मात्सावकाशत्वस्याप्रयोजकत्वेनौपदेशिकेनातिदेशिकस्य बाधनाद् बृहस्पतिसवः प्रधानेन सह शरदि कर्तव्य इति पूर्वपक्षं कृत्वा सिद्धान्तितम् । सत्यमौपदेशिकेनातिदेशिकं बाध्यते इति । इह त्वौपदेशिकस्य न सम्भवः । तथाहि वाजपेयकरणकः सेतिकर्तव्यताको यः फलभावनारूपः पुंव्यापारः शरदि वाजपेयेनेति कालविधिना शरत्काले कर्तव्यतया चोदितस्तं क्त्वाप्रत्ययेन निर्दिश्य ततः पश्चात्तनत्वेन वाजपेयेनेष्ट्वा बृहस्पतिसवेनेति विधीयमानो बृहस्पतिसवो वाजपेयप्रयोगबहिर्भावान्न तत्कालं भजते । तथा च वाजपेये कृते कर्तव्यो बृहस्पतिसवस्तदनन्तरकालातिक्रमकारणस्यातिदेशकृतस्य वसन्तकाललक्षणाङ्गोपसंहारस्य सत्त्वात्तदुत्तरवसन्तकाले कर्तव्यः । क्त्वा च पूर्वकालतायां स्मर्यते नानन्तर्ये । तन्निष्पन्नमपि वाजपेयापूर्वं तदुत्तरवसन्तकालेऽनुष्ठीयमानेन बृहस्पतिसवेन बलवत् क्रियते इति ॥ केषुचिन्निमित्तेषु पुनरग्निधारणं कार्यम् । तथा च **कात्यायनः** ( ४४१ )

प्रस्खलत्यभियुक्तश्चेत्स्थानादन्यत्र दह्यते ।
न तं दग्धं विदुर्देवास्तस्य भूयोऽपि दापयेत् ॥

**याज्ञवल्क्यः** ( २.१०७ )

अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेत् ।

अन्तरा पतिते पिण्डे पुनर्हरणे यदि हस्तयोर्न दाहस्तदा वेदितव्यम् । दाहे त्वशुद्धिरेव । अत एव **नारदः** ( ऋणादान २९८ )

यस्त्वन्तरा पातयति दग्धश्च न विभाव्यते ।
पुनस्तं हारयेदग्निं स्थितिरेषा दृढीकृता ॥

इति श्रीकोदण्डपरशुरामेति····व्यवहारविवेकोद्द्योते अग्निविधिः॥९॥

अथ जलविधिः । तत्र **पितामहः**

तोयस्यातः प्रवक्ष्यामि विधिं धर्म्यं सनातनम् ।
मण्डलं धूपदीपाभ्यां कारयेत विचक्षणः ॥
शरान्संपूजयेद्भक्त्या वैणवं च धनुस्तथा ।
मङ्गलैः पुष्पधूपैश्च ततः कर्म समाचरेत् ॥

**शरान् धूपदीपाभ्यां संपूजये**दित्यन्वयः। जलसमीपे संस्कृतायां भुवि मण्डलं कृत्वा शरादिकं सम्पूज्य प्रयोगप्रारम्भः कर्तव्य इत्यर्थः। धनुषः प्रमाणं लक्ष्यस्थानं च **नारदेन** दर्शितम् ( ऋणादान ३०७ )

क्रूरं धनुः सप्तशतं मध्यमं षट्शतं स्मृतम्।
मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिः॥
मध्यमेन तु चापेन प्रक्षिपेच्च शरत्रयम्।
हस्तानां तु शते सार्धे लक्ष्यं कृत्वा विचक्षणः॥
न्यूनाधिके तु दोषः स्यात्क्षिपतः सायकांस्तथा।

**सप्तशतं** सप्ताधिकशताङ्गुलम्। एवं **षट्शतं पञ्चशतं** च। शरा अनायसाग्रा वैणवाश्च कार्याः। तथा च **कात्यायनः** ( ४४२ )

शरांश्चानायसाग्रांस्तु प्रकुर्वीत विशुद्धये।
वेणुकाण्डमयांश्चैव क्षेप्ता तु सुदृढं क्षिपेत्॥

मण्डलसमीपे तोरणं शोध्यकर्णप्रमाणोच्छ्रितं कार्यम्। तथा च **नारदः**

गत्वा तु तज्जलस्थानं तटे तोरणमुच्छ्रितम्।
कुर्वीत कर्णमात्रं तु भूमिभागे समे शुचौ॥

जले विशेषं दर्शयति **पितामहः**

स्थिरे तोये निमज्जेत्तु न ग्राहिणि न चाल्पके।
तृणशैवालरहिते जलौकामत्स्यवर्जिते॥
देवखातेषु यत्तोयं तस्मिन्कुर्याद्विशोधनम्।
आहार्यं वर्जयेन्नित्यं शीघ्रवेगनदीषु च॥

**ग्राहिणि** ग्राहाख्यजलजन्तुयुक्ते। **आहार्यं** नद्यादित आहृत्य महति कटाहादौ स्थापितम्। **नारदः** ( ऋणादान ३०५ )

नदीषु नातिवेगासु तडागेषु सरःसु च।
ह्रदेषु स्थिरतोयेषु कुर्यात्पुंसां निमज्जनम्॥

**नातिवेगासु** अवस्थितिविरोधिवेगरहितासु । तत्र जले प्राड्विवाको वरुणं पूजयेत् । तदाह **नारदः**

गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः ।
वरुणाय प्रकुर्वीत पूजामादौ समाहितः ॥

ततो नाभिमात्रे जले कश्चिद्दृढकायः स्थापनीयः । तथा च **नारदः** (ऋणादान ३०८)

ब्राह्मणः क्षत्रियो वैश्यो रागद्वेषविवर्जितः ।
नाभिमात्रे जले स्थाप्यः पुरुषः स्थाणुवद्बली ॥

अनेन पुरुषेण यज्ञियवृक्षोद्भवां धर्मस्थूणामवष्टभ्य प्राङ्मुखेन स्थातव्यं

उदके प्राङ्मुखस्तिष्ठेद् धर्मस्थूणां प्रगृह्य च । इति

वचनात् । ततः प्राड्विवाकः प्रागुक्तक्रमेण धर्मावाहनपूजनादिहोमान्तं कृत्वा शोध्यशिरसि प्रतिज्ञापत्रारोपणं च विधाय जलाभिमन्त्रणं कुर्यात् । तथा च **पितामहः**

स्थापयेत्प्रथमं तोये स्तम्भवत्पुरुषं नृपः ।
आगतं प्राङ्मुखं कृत्वा तोयमध्ये तु कारिणम् ॥
ततस्त्वावाहयेद् देवान्सलिलं चानुमन्त्रयेत् ।

**स्तम्भवत्पुरुषं** स्तम्भसमन्वितं पुरुषम् । देवावाहनं पूर्वोक्तस्य सकलदिव्यसाधारणस्य प्रतिज्ञापत्रबन्धनान्तस्य कर्मजातस्योपलक्षणम् । **सलिल**ग्रहणं सलिलदेवताभूतस्य वरुणस्याप्युपलक्षणम् । जलाभिमन्त्रणमन्त्रश्च **पितामहेन** दर्शितः

तोय त्वं प्राणिनां प्राणः सृष्टेराद्यं तु निर्मितम् ।
शुद्धेस्त्वं कारणं प्रोक्तं द्रव्याणां देहिनां तथा ॥
अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे ।

**विष्णुनापि** (१२.७–८)

त्वमम्भः सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेवाम्भो विजानीषे न विदुर्यानि मानवाः ॥

व्यवहाराभिशस्तोऽयं मानुषस्त्वयि मज्जति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥

अनयोर्मन्त्रयोस्तुल्यार्थत्वाद्विकल्पः । वरुणाभिमन्त्रणमन्त्रश्च दर्शितो **नारदेन** ( ऋणादान ३१६-३१७ )

सत्यासत्यविभागस्य तोयाग्नी स्पष्टकृत्तमौ ।
अद्भ्यश्चाग्निरभूद्यस्मात्तस्मात्तोये विशेषतः ॥
क्रियते धर्मतत्त्वज्ञैर्दूषितानां विशोधनम् ।
तस्मात्सत्येन भगवञ्जलेश त्रातुमर्हसि ॥

**शङ्खलिखिता**भ्यामपि–सदसच्च त्वमेव वरुण उभयोः प्रतिष्ठितस्त्वं त्वयि सत्यं त्विदं देव वरुण त्वमेव तद् ब्रूहि वरेण्य तदादिशस्त्वेति[1] । अनयोश्च विकल्पः । ततोऽभिमन्त्रिते जले प्राड्विवाकः शोध्यं प्रवेशयेत् । तथा च **कालिकापुराणे**

पाह्येनं वरुण त्वं च अस्मादेवाभिशापतः ।
शुद्धश्चेदतिकारुण्यादभिमन्त्र्य जले क्षिपेत् ॥

पाह्येनमित्यादिना अतिकारुण्यादित्यन्तेन मन्त्रेणाभिमन्त्र्य जले पुरुषं प्रवेशयेदित्यर्थः । अयं च मन्त्रो वैकल्पिकः । शोध्यो कृताभिमन्त्रणो[2] जलं प्रविशेदित्याह **याज्ञवल्क्यः** ( २.१०८ )

सत्येन माभिरक्ष त्वं वरुणेत्यभिशाप्य कम् ।
नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत् ॥

**कं** उदकं **अभिशाप्य** सत्येनेत्यादिमन्त्रेणाभिमन्त्र्य । एतदनन्तरं पूर्वोक्ते लक्ष्यस्थाने शरत्रयं प्रक्षिपेत्[3] । तथा च **बृहस्पतिः**

अप्सु प्रवेश्य पुरुषं प्रेषयेत्सायकत्रयम् । इति ।

शरप्रक्षेप्तुर्विशेषमाह **पितामहः**

---

१ 'तदादिशस्वेति' ब–आदर्शे. २ 'दत्ताभिमन्त्रणः' इति अ-क. ३ 'प्रक्षियेत्' इति अ-क.

क्षेप्ता तु क्षत्रियः कार्यस्तद्वृत्तिर्ब्राह्मणोऽपि वा ।
अक्रूरहृदयः शान्तः सोपवासस्तथा शुचिः ॥

कालविशेषे देशविशेषे च शरप्रक्षेपं निषेधति स एव

इषुं न प्रक्षिपेद्विद्वान् मारुते वाति वै भृशम् ।
विषमे भूप्रदेशे च वृक्षस्थाणुसमाकुले ॥ इति ।

त्रिष्वपि शरेषु मुक्तेषु द्वयोर्धावकयोः पुरुषयोर्मध्य एकस्मिन्पुरुषे मध्यमशरपातस्थानं गत्वा तं शरं गृहीत्वा स्थिते अपरस्मिन्धावके पुरुषे तोरणसमीपे स्थिते प्राड्विवाकः कालबोधनार्थं करतालिकात्रयं दद्यात् । तत्र तृतीयस्यां करतालिकायां शोध्यः पुरुषो नाभिदघ्नोदकस्थस्य पुरुषस्योरू गृहीत्वा निमज्जेत् । तत्समकाल एव तोरणसमीपस्थितो धावकः पुरुषो धावन्मध्यमशरस्थानं गच्छेत् । तथा च **कात्यायनः** (४४३)

क्षिप्तेषु मज्जनं कार्यं गमनं समकालिकम् ।

**क्षिप्तेषु** शरेषु । तोरणसमीपस्थे धावके मध्यमशरपातस्थानं प्राप्ते[1] तदैवेतरो धावकस्ततः स्थानान्मध्यमशरमादाय तोरणस्थानं धावन्नागच्छेत् । स आगतो यदि शोध्यं न पश्यति जले तस्य सम्यङ्निमग्नत्वात्तर्हि स शुद्धः । यद्युन्मग्नस्य तस्य किमपि कर्णादिकमङ्गं दृश्यते यदि वा स यत्र निमग्नस्ततः स्थानान्तरं गच्छेत्तदा त्वशुद्धः । तथा च **नारदपितामहौ** (नारद, ऋणादान ३०९-३१२)

शरप्रक्षेपणस्थानाद्युवा जवसमन्वितः ।
गच्छेत्परमया शक्त्या यत्रासौ मध्यमः शरः ॥
मध्यमं शरमादाय पुरुषोऽन्यस्तथाविधः ।
प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः ॥
आगतस्तु शरग्राही न पश्यति यदा जले ।
अन्तर्जलगतं सम्यक् तदा शुद्धं विनिर्दिशेत् ॥

---

१ 'प्राप्ते' इति नास्ति ब-आदर्शे.

अन्यथा न विशुद्धः स्यादेकाङ्गस्यापि दर्शनात् ।
स्थानाद्वान्यत्र गमनाद्यस्मिन् पूर्वं निवेशितः ॥

**एकाङ्गस्ये**त्येतत् कर्णाद्यभिप्रायेण । अत एव **कात्यायनः** (४४४)

शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका ।
अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत् ॥

मध्यमशरस्य ग्रहणं पतनस्थानादेव न सर्पणस्थानात् । अत एव **पितामहः**

शरस्य पतनं ग्राह्यं सर्पणं परिवर्जयेत् ।
सर्पन्सर्पन् शरो याति दूराद् दूरतरं यतः ॥

शरानयनार्थं नियुक्तयोर्धावकयोर्लक्षणमाह **नारदः**

पञ्चाशतो धावकानां यौ स्यातामधिकौ जवे ।
तौ च तत्र नियोक्तव्यौ शरानयनकारणात् ॥

इति श्रीकोदण्डपरशुरामे····व्यवहारविवेकोद्द्योते जलविधिः ॥१०॥

अथ विषविधिः । तत्र **नारदः** (ऋणादान ३१८–३२०, ३२२, ३२४)

अतः परं प्रवक्ष्यामि विषस्य विधिमुत्तमम् ।
यस्मिन् काले यथा देयं यादृशं परिकीर्तितम् ॥
यावन्मात्रं समुद्दिष्टं धर्मतत्त्वानुवेदिभिः ।
लोलयित्वेप्सिते काले देयमेतद्धिमागमे ॥
नापराह्णे न मध्याह्ने सन्ध्यायां च विवर्जयेत् ।
शार्ङ्गं हैमवतं शस्तं वर्णगन्धरसान्वितम् ॥
अकृत्रिममसंमूढममन्त्रोपहतं च यत् ।[1]
वर्षे चतुर्यवा मात्रा ग्रीष्मे पञ्चयवा स्मृता ॥
हेमन्ते सा सप्तयवा शरद्यल्पा ततोऽपि हि ।

**हिमागमे** हेमन्तशिशिरयोः । **शार्ङ्गं** शृङ्गोद्भवम् । **हैमवतं**

---

१ 'असंगूढम्' इति ब.

हिमालयोद्भवम् । **हेमन्ते** इति हेमन्तशिशिरयोर्ग्रहणम् । **शरदि ततोऽप्यल्पा** षड्यवेत्यर्थः । वत्सनाभस्यापि ग्राह्यतामाह **पितामहः**

यवाः सप्त प्रदातव्याः शुचिहेतोरसंशयम् ।
शृङ्गिणो वत्सनाभस्य हिमजस्य विषस्य वा ॥

**यवाः सप्तेति** शीतकालविषयं पूर्वोदाहृतवचनात् । शृङ्गिविषस्य स्वरूपं दर्शयति **कात्यायनः** (४४६–४४७)

अजाशृङ्गनिभं श्यामं सुपीतं शृङ्गसम्भवम् ।
भङ्गे च शृङ्गवेराभं ख्यातं तच्छार्ङ्गिणं विषम् ॥
रक्तस्थमसितं[1] कुर्यात्कठिनं चैव तत्क्षणात् ।
अनेन विधिना ज्ञेयं विषं दिव्यविशारदैः ॥

**भङ्गे** छेदने । **शृङ्गवेराभं** आर्द्रकसंकाशम् । भङ्गे आर्द्रकसङ्काशं सुपीतमित्यन्वयः । **शार्ङ्गिणं** शृङ्गिणां सम्बन्धि । इनण्यनपत्ये (पा. ६.४.१६४)–इति प्रकृतिभावान्न टिलोपः । **यद्रक्तस्थं तत्क्षणात् रक्तमसितं[2] कठिनं** च कुर्यादिति सम्बन्धः । वत्सनाभस्वरूपमपि दर्शयति स एव (कात्या. ४४८–४४९)

वत्सनाभनिभं पीतं वर्णज्ञानेन निश्चितम् ।
शुक्तिशृङ्गाकृतिं[3] भङ्गे विद्यात्तद्वत्सनाभकम् ॥
मधुक्षीरसमायुक्तं स्वच्छं कुर्वीत तत्क्षणात् ।
बाह्यमेवं समाख्यातं लक्षणं धर्मसाधकैः ॥

**बर्ज्यं** विषं दर्शयति **नारदः**

भृष्टं च चारितं चैव धूपितं मिश्रितं तथा ।
कालकूटमलाबुं च विषं यत्नेन वर्जयेत् ॥

**पितामहोऽपि**

---

१ 'रिक्तस्थम्' इति अ–क. २ 'असितं सितं च कुर्यात्' इति क, 'असितं च कुर्यात्' इति अ. ३ 'शृङ्गाकृतिः भङ्गे' इति क; 'शृङ्गाकृतिभङ्गे' इति अ.

चारितानि च जीर्णानि कृत्रिमाणि तथैव च ।
भूमिजातानि सर्वाणि विषाणि परिवर्जयेत् ॥

एतच्च विषं सम्यक् पिष्टं त्रिंशद्गुणेन घृतेन मिश्रितं देयम् । तथा च **नारदः**

पूर्वाह्णे शीतले देशे विषं देयं तु देहिनाम् ।
घृतेन योजितं श्लक्ष्णं पिष्टं त्रिंशद्गुणेन तु ॥

एतच्च विषं पूर्वोक्ते दिव्यप्रदेशे देवद्विजसन्निधौ प्राड्विवेकेन शिवपूजां विधाय तस्य पुरतो विषं स्थापयित्वा धर्मावाहनादि प्रतिज्ञापत्रबन्धनान्तं प्रागुक्तं कर्मकलापं विधाय विषमभिमन्त्र्योदङ्मुखेन प्राङ्मुखेन वा दक्षिणाभिमुखाय दातव्यम् । तथा च **नारदः**

दद्याद्विषं सोपवासो देवब्राह्मणसंनिधौ ।
धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम् ॥
द्विजानां संनिधावेव दक्षिणाभिमुखे स्थिते ।
उदङ्मुखः प्राङ्मुखो वा दद्याद्विप्रः समाहितः ॥

अभिमन्त्रणमन्त्रश्च **नारदेनोक्तः** ( ऋणादान ३२५ )

विष त्वं ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः ।
शोधयैनं नरं पापात्सत्येनास्यामृतीभव ॥

**विष्णुनापि** ( १३.६-७ )

विषत्वाद्विषमत्वाच्च क्रूरत्वात्सर्वदेहिनाम् ।
त्वमेव विष जानीषे न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥

शोध्यस्याभिमन्त्रणमन्त्रं दर्शयति **पितामहः**

दीयमानं करे कृत्वा विषस्य[1] परिशापयेत् ।

---

१ 'विषणः' (?) इति अ-क.

विष त्वं ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम् ।
पापेषु दर्शयात्मानं शुद्धानाममृतं भव ॥

**याज्ञवल्क्यो**ऽपि ( २.११० )

विष त्वं ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः ।
त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम् ॥ इति ।

एवमभिमन्त्र्य तद्भक्षणीयमित्याह स एव ( या. २.१११ )

एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् ।

भक्षितं विषं यदि जीर्णं भवति तदा शुद्धः, अन्यथा त्वशुद्धः । तथ च **बृहस्पतिः**

विधिदत्तं विषं येन जीर्णं मन्त्रौषधैर्विना ।
स शुद्धः स्यादन्यथा तु दण्ड्यो दाप्यश्च तद्धनम् ॥

**याज्ञवल्क्यो**ऽपि ( २.१११ )

यस्य वेगैर्विना जीर्येच्छुद्धिं तस्य विनिर्दिशेत् ।

**वेगो** नाम धातोर्धात्वन्तरप्राप्तिः

धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः । इति-

वचनात् । धातवस्त्वगादयः सप्त ।

त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः । इति वचनात् ।

विषवेगाश्च सप्त । तेषां लक्षणानि विषतन्त्रे दर्शितानि ।

वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ
तस्योर्ध्वस्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ ।
यो वेगः पञ्चमोऽसौ नयनविवशतां कण्ठभङ्गं च हिक्कां
षष्ठो निश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य ॥

दिनान्तपर्यन्तं विषवेगराहित्ये शोध्यस्य शुद्धतेत्याह **नारदः** ( ऋणादान ३२६ )

छायानिवेशितो रक्ष्यो दिनशेषमभोजनः ।
विषवेगक्रमातीतः शुद्धोऽसौ मनुरब्रवीत् ॥

**विष्णुः** ( १३.५ )

विषं वेगक्रमातीतं सुखेन यदि जीर्यते ।
विशुद्धं तमिति ज्ञात्वा दिवसान्ते विसर्जयेत् ॥

**पितामहः**

भक्षिते यदि स स्वस्थो मूर्च्छाछर्दिविवर्जितः ।
निर्विकारो दिनस्यान्ते शुद्धं तमिति निर्दिशेत् ॥

शोध्यो राज्ञा कंचित्कालं कुहकादिभ्यो रक्षणीयः । तथा च **पितामहः**

त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम् ।
कुहकादिभयाद्राजा धारयेद्दिव्यकारिणम् ॥
ओषधीर्मन्त्रयोगांश्च मणीनथ विषापहान् ।
कर्तुः शरीरसंस्थांस्तु गूढोत्पन्नान्परीक्षयेत् ॥

**विज्ञानेश्वराचार्यैस्तु**

पञ्चतालशतं कालं निर्विकारो यदा भवेत् ।
तदा भवति संशुद्धस्ततः कुर्याच्चिकित्सितम् ॥ इति

**नारद**वाक्यं पठित्वा करतालिकापञ्चशतीपरिमितं कालं यदि निर्विकारस्तर्हि शुद्धः, अनन्तरं तु चिकित्सनीय इत्यभिधाय यत्तु दिनान्तलक्षणावधिबोधकं वाक्यं तदल्पमात्राविषयमित्युक्तम् । इति श्रीकोदण्डपरशुरामे·····व्यवहारविवेकोद्द्योते विषविधिः ॥ ११ ॥

अथ कोशविधिः । तत्र **नारदः** (ऋणादान ३२७-३२८)

अतःपरं प्रवक्ष्यामि कोशस्य विधिमुत्तमम् ।
शास्त्रविद्भिर्यथा प्रोक्तं सर्वकालाविरोधिनम् ॥
पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च ।
सशूकस्याव्यसनिनः कोशपानं विधीयते ॥
इच्छतः श्रद्दधानस्य देवब्राह्मणसन्निधौ ।

**सशूकस्य** असत्येन दिव्यकरणेऽनिष्टशङ्कायुक्तस्य । **कोशपानं** उग्रदेवतास्नापनोदकपानम् । देवतास्नानोदकं च प्रसृतित्रयं ज्ञातव्यम् ।

तथा **विष्णुः** ( १४. २-३ )—उग्रान्देवान्समभ्यर्च्य तत्स्नानोदकात्प्रसृतित्रयं पिबेदिदं मया न कृतमिति व्याहरन्देवताभिमुखः—इति । **उग्रा देवाः** दुर्गादयः । स्नापनीयदेवतासु विशेषमाह **पितामहः**

भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम् ।
समभावे तु देवानामादित्यस्य तु पाययेत् ॥
दुर्गायाः पाययेच्चौरान्ये च शस्त्रोपजीविनः ।
भास्करस्य तु यत्तोयं ब्राह्मणं तन्न पाययेत् ॥

**समभावे** सर्वासु देवतासु भक्तिसाम्ये । अल्पेऽपराधे उग्रदेवतायुधानि स्नापयित्वा तदुदकं पाययेदित्याह **कात्यायनः** ( ४५२ )

स्वल्पेऽपराधे देवानां स्नापयित्वायुधोदकम् ।
पाय्यो विकारे चाशुद्धो नियम्यः शुचिरन्यथा ॥

**पाय्यः** पाययितव्यः । **नियम्यो** दण्ड्यः । **आयुधग्रहणं** ताम्रादिनिर्मितादित्यमण्डलस्याप्युपलक्षणम् । अत एव **बृहस्पतिः**

यद्भक्तः सोऽभियुक्तः स्यात्तद्देवायुधमण्डलम् ।
प्रक्षाल्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम् ॥

अत्र विशेषमाह **पितामहः**

दुर्गायाः स्नापयेच्छूलमादित्यस्य तु मण्डलम् ।[1]
अन्येषामपि देवानां स्नापयेदायुधानि तु ॥

एतच्च स्नापनोदकपायनं कृतोपवासेन प्राड्विवाकेन देवतायतनसमीपे मण्डलं विधाय तत्र शोध्यं स्थापयित्वा गन्धपुष्पादिभिर्देवतामभ्यर्च्य स्नापयित्वा तत्स्नानोदकं मण्डले नीत्वा प्रागुक्तधर्मावाहनादिप्रतिज्ञापत्रबन्धनान्तं कृत्वा शोध्यमसत्येनैतद्दिव्यकरणेऽनिष्टं संश्राव्य जलविधावुक्तेन तोय त्वं प्राणिनां प्राण इत्यादिना मन्त्रेणाभिमन्त्र्य कर्तव्यम्[2] । शोध्यश्च प्रागुक्तेन सत्यानृतविभागस्येत्यादिना मन्त्रेणाभिमन्त्र्य पिबेत् । अत्र **नारदः**

---

१ 'दुर्गायाः पाययेच्छूलम्' इति ब. २ 'कर्तव्यम्' इत्यारभ्य 'मन्त्रेणाभिमन्त्र्य' इत्ययं भागो नास्ति ब-आदर्शे.

तमाहूयाभिशस्तं तु मण्डलाभ्यन्तरे स्थितम् ।
आदित्याभिमुखं कृत्वा पाययेत्प्रसृतित्रयम् ॥

**पितामहः**

प्राङ्मुखं कारिणं कृत्वा पाययेत्प्रसृतित्रयम् ।
पूर्वोक्तेन विधानेन स्नातमार्द्राम्बरं शुचिम् ॥

**पूर्वोक्तेन** सकलदिव्यसाधारणतया प्रागुक्तेन। **याज्ञवल्क्यः** (२. ११२)

देवानुग्रान्समभ्यर्च्य तत्स्नानोदकमाहरेत् ।
संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम् ॥

**नारदः**

अर्चयित्वा तु तं देवं प्रक्षाल्य सलिलेन तु ।
एनश्च श्रावयित्वा तु पाययेत्प्रसृतित्रयम् ॥

एनः पापफलं कुष्ठाद्युद्भवरूपं तच्च दर्शितं तेनैव

स्वेच्छया यः पिबेत्कोशं कश्चिच्चेद् दूषितो नरः ।
न संवदेन्नरो लोभाच्छ्वित्री भवति दुर्मतिः ॥
जानानः कामकारेण कोशं पीत्वा विसंवदेत्[1] ।
दरिद्रो व्याधितो मूर्खः सप्तजन्मानि जायते ॥ इति ।

सशिरःस्थेऽभियोगेऽभियोक्तुः श्राव्यमनिष्टं दर्शयति स एव

बलात्कोशं द्विजो दत्त्वा हितमिच्छेत चात्मनः ।
स विनाशी भवेत्तस्य तच्च कार्यं न सिध्यति ॥

कृतकोशपानस्य शोध्यस्य शुद्धिकालावधिमाह **विष्णुः** (१४. ४-५)

यस्य पश्येद् द्विसप्ताहात्त्रिसप्ताहाद्[2]थापि वा ।
रोगोऽग्निर्ज्ञातिमरणं राजातङ्कमथापि वा ॥

---

१ 'पीत्वा च संवदेत्' इति अ-क. २ 'त्रिसप्ताहाद्' इत्यस्मादारभ्य 'रोगाद्युद्भवे न' इत्यन्तो भागो नास्ति ब-आदर्शे.

तमशुद्धं विजानीयात्तथा शुद्धं विपर्यये ।

**कात्यायनः** ( ४५६ )

अथ दैवविसंवादस्त्रिसप्ताहात्तु दापयेत् ।
अभियुक्तं प्रयत्नेन तमर्थं दण्डमेव च ॥

**दैवविसंवादः** दैविक्र्व्याध्युद्भवः । दैविका व्याधयश्च दर्शितास्तेनैव

ज्वरातिसारविस्फोटाः शूलास्थिपरिपीडनम् ।
नेत्ररुग्भालरोगश्च तथोन्मादः प्रजायते ॥
शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणाम् ।

**पितामहः**

त्रिरात्रात्सप्तरात्राद्वा द्विसप्ताहादथापि वा ।
वैकृतं यस्य दृश्येत पापकृत्स तु मानवः ॥

शोध्यपुत्रादेरप्यतिपीडायां पराजय इत्याह **बृहस्पतिः**

सप्ताहाद्वा द्विसप्ताहाद्यस्यार्तिर्न प्रजायते ।
पुत्रदारधनानां च स शुद्धः स्यान्न संशयः ॥

एतेषां त्रिरात्रादीनां चतुर्णां पक्षाणामभियोगाल्पत्वमहत्त्वाभ्यां व्यवस्था द्रष्टव्या । अवधिकालादूर्ध्वं रोगाद्युद्भवे न पराजय इत्याह **नारदः** ( ऋणादान ३३१)

ऊर्ध्वं यस्य द्विसप्ताहाद्वैकृतं सुमहद्भवेत् ।
नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात् ॥

अत्र द्विसप्ताह इत्यवधिकालमात्रोपलक्षणमन्ते कृतकालव्यतिक्रमादिति हेतोरभिधानात् । तेनैकविंशतिरात्रस्यावधिकालत्वाश्रयणे चतुर्दशरात्रादूर्ध्वमपि वैकृतोत्पत्तौ पराजयः, त्रिरात्रसप्तरात्रपक्षयोश्च चतुर्दशरात्रात्प्रागपि वैकृतोत्पत्तौ न पराजय इति सिद्धम् । इति श्रीकोदण्डपरशुरामे.... व्यवहारविवेकोद्योते कोशविधिः ॥ १२ ॥

अथ तण्डुलविधिः । तत्र **पितामहः**

तण्डुलानां प्रवक्ष्यामि विधिं लक्षणचोदितम् ।
चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः ॥
तण्डुलान् कारयेच्छुक्लान् शालेर्नान्यस्य केनचित् ।
मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥
स्नानोदकेन संमिश्र्य रात्रौ तत्रैव वासयेत् ।
आवाहनादिपूर्वं तु कृत्वा रात्रौ विधानतः ॥

सोपवासः प्राड्विवाको रात्रौ सूर्यालये धर्मावाहनादिहोमान्तं सकलदिव्यसाधारणं प्रागुक्तं कृत्वा शुक्लाञ्छालितण्डुलानादित्यस्नापनोदकेन संमिश्र्य प्रातःकालपर्यन्तं तत्रैव स्थापयेदित्यर्थः । प्रातः प्राड्विवाकेन यत्कर्तव्यं तदाह स एव

प्रभाते कारिणे देया आदित्याभिमुखाय तु ।

**कारिणे** शोध्याय **देया**स्तण्डुला इत्यनुषङ्गः । एतच्छोध्यस्य शिरसि प्रतिज्ञापत्रमाबध्य कर्तव्यम् । तथा च स एव

प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम् ।
तण्डुलान्भक्षयित्वा तु पत्रे निष्ठीवयेत्ततः ॥
भूर्जस्यैव तु नान्यस्य अभावे पिप्पलस्य तु । इति ।

**भक्षयित्वा** भक्षणं कारयित्वा । हेतुमण्णिजन्तस्य भक्षेरयं प्रयोगः । शुद्ध्यशुद्धिनिर्णयोपायमाह **बृहस्पतिः**

सोपवासः सूर्यगृहे तण्डुलान्भक्षयेच्छुचिः ।
शुद्धः स्याच्छुक्लनिष्ठीवे रक्तमिश्रे तु दोषभाक् ॥

**कात्यायनो**ऽपि (४५३)

देवतास्नानपानीयदिग्धतण्डुलभक्षणे ।
शुद्धनिष्ठीवनाच्छुद्धो नियम्योऽशुचिरन्यथा ॥

**पितामहः**

शोणितं दृश्यते यस्य हनुस्तालु च शीर्यते ।
गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ॥

इति श्रीकोदण्डपरशुरामे······व्यवहारविवेकोद्द्योते तण्डुलविधिः ॥ १३ ॥

अथ तप्तमाषविधिः । तत्र **पितामहः**

तप्तमाषस्य वक्ष्यामि विधिमुद्धरणे शुभम् ।
कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ॥
चतुरङ्गुलखातं तु मृन्मयं वापि मण्डलम् ।
पूरयेद् घृततैलाभ्यां विंशत्या च पलैस्तु तत् ॥
सुवर्णमाषकं तस्मिन्सुतप्ते निक्षिपेत्ततः ।
अङ्गुष्ठाङ्गुलियोगेन तप्तमाषकमुद्धरेत् ॥

**मण्डलं** वर्तुलाकारम् । **सुवर्णमाषकं** कर्षषोडशांशप्रमाणकम् । **सुवर्ण**ग्रहणं रूप्यमाषनिवृत्त्यर्थम् । सुवर्णमाषपरिमितं हिरण्यं ताम्रं वा तत्र पिण्डीकृतं निक्षिपेदित्यर्थः । **अङ्गुष्ठाङ्गुलियोगेन** अङ्गुष्ठतर्जनीमध्यमाभिरित्यर्थः । एतच्च तप्तमाषोद्धरणं प्राड्विवाकेन घृततैलयोस्तापे प्रवर्तमाने धर्मावाहनादिप्रतिज्ञापत्रबन्धनान्तं सर्वदिव्यसाधारणं कर्म कृत्वा त्वमग्ने वेदाश्चत्वार इत्यादिना प्रागुक्तेन मन्त्रेणाभिमन्त्र्य कारयितव्यम् । शोध्यस्तु त्वमग्ने सर्वभूतानामित्यादिना याज्ञवल्क्योक्तेन मन्त्रेणाभिमन्त्र्य तप्तमाषमुद्धरेत् । अत एव **बृहस्पतिः**

समुद्धरेत्तैलघृतात् सुतप्तात्तप्तमाषकम् ।

शुद्ध्यशुद्धिनिर्णयोपाय उक्तो **बृहस्पतिपितामहाभ्यां**

कराग्रं न धुनेद्यस्तु विस्फोटोऽस्य न जायते ।
शुद्धो भवति धर्मेण पितामहवचो यथा ॥

**कालिकापुराणे**पि

न धुनेद्यः कराग्रं तु यस्य रक्तं न जायते ।
विस्फोटाद्यैस्तथा दोषैः स शुद्धो यस्य चोज्झितम् ॥

**रक्तं** रक्तवर्णम् । **यस्य कराग्रं विस्फोटाद्यैः उज्झितमित्य**न्वयः । इत्येकस्तप्तमाषप्रकारः । प्रकारान्तरमप्याह **पितामहः**

सौवर्णे राजते ताम्रे आयसे मृन्मयेपि वा ।
गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः ॥
सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोभिताम् ।
सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् ॥
भ्रमद्वीचितरङ्गाढ्ये अनखस्पर्शगोचरे ।
परीक्षेतार्द्रपर्णेन चुरुकारं सुघोषकम् ॥
ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत् ।
परं पवित्रममृतं घृत त्वं यज्ञकर्मसु ॥
दह पावक पापं त्वं हिमशीतं शुचौ भव ।
उपोषितं ततः स्नातमार्द्रवाससमागतम् ॥
ग्राहयेन्मुद्रिकां तां तु घृतमध्यगतां तथा ।
प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः ॥
यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाऽशुचिः ॥ इति ।

अत्रापि धर्मावाहनादिकं समानम् । शोध्यस्य स एवाग्न्यभिमन्त्रणमन्त्रः प्राड्विवाकस्य त्वत्र परं पवित्रमित्यभिमन्त्रणमन्त्रः । तर्जन्यैवात्र मुद्रिकोद्धरणं प्रदेशिनीं परीक्षेयुरिति तस्याः परीक्ष्यत्वाभिधानात् । इति तप्तमाषविधिः ॥

अथ फालविधिः । तत्र **बृहस्पतिः**

आयसं द्वादशपलं घटितं फालमुच्यते ।
अष्टाङ्गुलं भवेद् दीर्घं चतुरङ्गुलविस्तृतम् ॥
अग्निवर्णं तु तच्चौरो जिह्वया लेलिहेत्सकृत् ।
न दग्धश्चेच्छुद्धिमियादन्यथा तु स हीयते ॥

अत्रापि प्राड्विवाकः फालस्य तापे प्रवृत्ते धर्मावाहनादिप्रतिज्ञापत्रारोपणान्तं कुर्यात् । प्राड्विवाकस्य त्वमग्ने वेदा इत्यादिः प्रागुक्तोऽभिमन्त्रणमन्त्रः । शोध्यस्य त्वमग्ने सर्वभूतानामित्यादिः प्रागुक्तोऽभिमन्त्रणमन्त्रः । इति फालविधिः ॥

अथ धर्मजविधिः । तत्र **पितामहः**

अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम् ।
हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणाम् ॥
राजतं कारयेद्धर्ममधर्मं सीसकायसम् ।
लिखेद्भूर्जे पटे वापि धर्माधर्मौ सितासितौ ॥
अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत् ।
सितपुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पधृक् ॥
एवं विधायोपलिप्य पिण्डयोस्तौ निधापयेत् ।
गोमयेन मृदा वापि पिण्डौ कार्यौ समन्ततः ॥
मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ ।
उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ ॥
आवाहयेत्ततो देवान् लोकपालांश्च पूर्ववत् ।
धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत् ॥
यदि पापविशुद्धोऽहं धर्मस्त्वायातु मे करे ।
अभियुक्तस्ततश्चैकं प्रगृह्णीताविलम्बितः ॥
धर्मे गृहीते शुद्धः स्यादधर्मे तु स हीयते ।
एवं समासतः प्रोक्तं धर्माधर्मपरीक्षणम् ॥

**हन्तॄणा**मित्यभिधानात्साहसाभियोगे **याचमानाना**मित्यर्थाभियोगे **प्रायश्चित्तार्थिना**मिति पातकाभियोगे एतद्दिव्यं भवतीति सूचितम् । **सीसकायसं** सीसेनायसा च विनिर्मितम् । **बृहस्पति**रपि

पत्रद्वये लेखनीयौ धर्माधर्मौ सितासितौ ।
जीवदानादिकैर्मन्त्रैर्गायत्र्याद्यैश्च सामभिः ॥
आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः ।
अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः ॥
समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपलक्षितौ ।
ततः कुम्भात्पिण्डमेकं प्रगृह्णीताविलम्बितः ॥

धर्मे गृहीते शुद्धः स्यात्सम्पूज्यश्च परीक्षकैः ।

**जीवदानादिकैर्मन्त्रैः** मा प्र गामीति (प्र गाम इति ?) सूक्तपठितैः (ऋ.१०.५७) ऋङ्मन्त्रैरन्यैर्वा प्राणप्रतिष्ठामन्त्रैरित्यर्थः । इति धर्मजविधिः ॥ इति श्रीकोदण्डपरशुरामे······व्यवहारविवेकोद्द्योते दिव्यनिरूपणम् । समाप्तं च क्रियापादनिरूपणम् ॥ १४ ॥

अथ निर्णयपादनिरूपणम् । तत्र निर्णयप्रकारानाह **बृहस्पतिः**

धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया ।
चतुःप्रकारोऽभिहितः सन्दिग्धेऽर्थे तु निर्णयः ॥
एकैको द्विविधः प्रोक्तः क्रियाभेदान्महर्षिभिः ।
अपराधानुरूपं च दण्डं च परिकल्पयेत् ॥

धर्मनिर्णयस्य द्वौ भेदौ दर्शयति **स** एव

सम्यग्विचार्य कार्यं तु युक्त्या संपरिकल्पितम् ।
परीक्षितं तु शपथैः स ज्ञेयो धर्मनिर्णयः ॥
प्रतिवादी प्रपद्येत यत्र धर्मः स निर्णयः ।
दिव्यैर्विशोधितः सम्यग् द्वितीयः समुदाहृतः ॥

**प्रतिवादी प्रपद्येत**ेत्यस्य काकाक्षिवदुभयत्र सम्बन्धः । यत्र **प्रतिवादी युक्त्या सम्यग्विचार्य संपरिकल्पितं शपथैः** पुत्रशिरःस्पर्शादिभिः **परीक्षितं कार्यं प्रपद्येत** अङ्गीकुर्यात् स आद्यो धर्मनिर्णयः । **दिव्यैर्**घटादिभि**र्विशोधितः प्रतिवादी** यत्र **प्रपद्येत** स **द्वितीयो** धर्माख्यो निर्णयः समुदाहृत इत्यर्थः । व्यवहाराख्यस्य निर्णयस्य द्वौ भेदौ दर्शितौ तेनैव

प्रमाणैर्निश्चयो यस्तु व्यवहारः स उच्यते ।
वाक्छलानुत्तरत्वेन द्वितीयः परिकीर्तितः ॥

**प्रमाणा**न्यत्र साक्षिणो लिखितं च । **वाक्छलानुत्तरत्वेन** वाक्छलेन अनुत्तरत्वेन च यो निश्चयः स द्वितीयो व्यवहार इत्यर्थः । चरित्रनिर्णयस्य द्वौ भेदौ दर्शितौ **तेनैव**

अनुमानेन निर्णीतं चरित्रमिति कथ्यते ।
देशस्थित्या द्वितीयं तु शास्त्रविद्भिरुदाहृतम् ॥

**अनुमानेन** भुक्तियुक्तिरूपेण यो निर्णयः स चरित्रम् । **देशस्थित्या** यो निर्णयः स द्वितीयं चरित्रमित्यर्थः । राजाज्ञानिर्णयस्य द्वौ भेदौ दर्शयति **स** एव

प्रमाणसहिताद्यस्तु राजाज्ञा निर्णयः स्मृतः ।
शास्त्रसभ्यविरोधे च तथान्यः परिकीर्तितः ॥

**प्रमाणसहिता राजाज्ञा आद्यो निर्णयः** । शास्त्राणां सभ्यानां च परस्परं विरोधे या राजाज्ञा स द्वितीयो राजाज्ञारूपो निर्णय इत्यर्थः । धर्मादीनां चतुर्णां निर्णयानां पूर्वमात्रस्योत्तरोत्तरापेक्षया दुर्बलत्वमित्याह **नारदः** ( व्य.मा.अ. १.१० )

धर्मश्च व्यवहारश्च चरित्रं राजशासनम् ।
चतुष्पाद् व्यवहारोऽयमुत्तरः पूर्वबाधकः ॥

**चतुष्पात्** चतुःप्रकारः । **व्यवहारो**ऽत्र निर्णयः । व्यवहारस्य धर्मबाधकतामाह **बृहस्पतिः**

शास्त्रं केवलमाश्रित्य क्रियते यत्र निर्णयः ।
व्यवहारः स विज्ञेयो धर्मस्तेनावहीयते ॥

**शास्त्रं** स्मृतिशास्त्रोक्तं साक्ष्यादिप्रमाणम् । **तेन** व्यवहारेण **अवहीयते** बाध्यते । **कात्यायनो**ऽपि ( ३९ )

युक्तियुक्तं तु कार्यस्य दिव्यं यत्र तु वर्जितम् ।
धर्मस्तु व्यवहारेण बाध्यते तत्र नान्यथा ॥

चरित्रस्य व्यवहारबाधकतामाह **बृहस्पतिः**

देशस्थित्यानुमानेन नैगमानुमतेन वा ।
क्रियते निर्णयस्तत्र व्यवहारस्तु बाध्यते ॥

**नैगमाः** पौरवणिजः । **नैगमानुमतेनानुमानेनेति** समानाधिकरणे पदे । **कात्यायनो**ऽपि ( ४०-४१ )

प्रतिलोमप्रसूतेषु तथा दुर्गनिवासिषु ।
विरुद्धं नियतं प्राहुस्तद्धर्मं न विचारयेत् ॥
निर्णयं तु यदा कुर्यात्तेन धर्मेण पार्थिवः ।
व्यवहारश्चरित्रेण तदा तेनैव बाध्यते ॥

**तेन धर्मेण** देशाचाररूपेण । राजशासनस्य चरित्रबाधकतामाह **बृहस्पतिः**

विहाय चरिताचारं यत्र कुर्यात्पुनर्नृपः ।
निर्णयं सा तु राजाज्ञा चरित्रं बाध्यते तया ॥

**चरिताचारं** परम्परागतं देशाचारम् । **कात्यायनो**ऽपि ( ४२ )

विरुद्धं न्यायतो यत्तु चरित्रं कल्प्यते नृपैः ।
एवं तत्र निरस्येत चरित्रं तु नृपाज्ञया ॥

**नृपैर्यत्तु न्यायविरुद्धं चरित्रं** न ग्राह्यमित्येवं **कल्प्यते** तत्र **नृपाज्ञया चरित्रं निरस्यते** बाध्यते इत्यर्थः ।

निर्णयानन्तरकर्तव्यमाह **व्यासः**

जितं तु दण्डयेद्राजा जेतुः पूजां प्रवर्तयेत् ।
जेतुः प्रवर्तते पूजा गन्धमाल्याम्बरादिना ॥

**कात्यायनः** ( २६२ )

सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम् ।
लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु पार्थिवः ॥

**सिद्धेनार्थेन** साधितधनेन । **लेख्यं** जयपत्रम् । तत्स्वरूपं लेख्यनिरूपणे दर्शितम् । साधितं धनं तदभिवृद्धिसहितं दापनीयम् । तथा च **नारदः**

मध्ये यत्स्थापितं द्रव्यं चलं वा यदि वा स्थिरम् ।
पश्चात्तत्सोदयं दाप्यं जयिने जयपत्रकम् ॥

**मध्ये यत्स्थापितं** विवादकाले मध्यस्थस्थापितम् । धनदापने प्रकारमाह **कात्यायनः** ( ४७७-४७८ )

राजा तु स्वामिने विप्रं सान्त्वेनैव प्रदापयेत् ।
देशाचारेण चान्यांस्तु[1] दुष्टान्सम्पीड्य दापयेत् ॥
रिक्थिनं सुहृदं वापि छलेनैव प्रदापयेत् ।

न केवलं राज्ञा पराजितः स्वामिने सोदयं धनं दापनीयः किन्तु स्वेनापि दण्ड्यः । यदि सपणो विवादस्तदा प्रतिज्ञातः पणोऽपि तस्माद् ग्राह्यः । तथा च **याज्ञवल्क्यः** ( २.१८ )

सपणश्चेद्विवादः स्यात्तत्र हीनं तु दापयेत् ।
दण्डं च स्वपणं चैव धनिने धनमेव च ॥

**नारदो**ऽपि ( व्य.मा. अ.१.५ )

विवादे सोत्तरपणे द्वयोर्यस्तत्र हीयते ।
स पणं स्वकृतं दाप्यो विनयं च पराजये ॥

**विनयं** दण्डम् । पराजितस्य साधितं[2]द्रव्याद्यदाने तल्लग्नकस्तद्धनं दापनीयः । तस्मिन्मृते प्रोषिते वा तत्पुत्रो दापनीयः । तथा च **व्यासः**

दानवादप्रतिभुवौ दाप्यौ तत्पुत्रकौ तथा । इति ।

**तत्पुत्रकौ** दानविवादप्रतिभुवोः पुत्रकौ । दानप्रतिभूस्त्वग्रे दर्शयिष्यते । विवादप्रतिभूस्तु प्राग्दर्शितः । दण्डस्य द्वैविध्यमाह **नारदः** ( परिशिष्ट ५३-५४ )

शारीरश्चार्थदण्डश्च दण्डस्तु द्विविधः स्मृतः ।
शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्तितः ॥
काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च ।
शारीरो दशधा प्रोक्तो ह्यर्थदण्डस्त्वनेकधा ॥

**दशधेति** न परिगणनम् । अन्येषामपि बन्धनाङ्ककरणादीनां शारीरदण्डानां सत्त्वात् । कांश्चिच्छारीरदण्डान्दर्शयति **मनुः** (८.१२४-१२५)

दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत् ।
उपस्थ उदरं जिह्वा हस्तौ पादौ च पञ्चमम् ॥

---

१ 'चाद्रव्यांस्तु' इति अ. २ 'साधितस्य द्रव्याद्यदाने' इति अ-क.

चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च । इति ।

**उपस्थः** स्त्रीपुंसयोश्चिह्नम् । एतेषामगम्यागमनादिविषयाणामुपस्थनिग्रहादीनां दण्डानां क्षत्रियादिविषयत्वं न ब्राह्मणविषयत्वं

त्रिषु वर्णेषु तानि स्युरक्षतो ब्राह्मणो व्रजेत् ।

इति तेनैवाभिधानात् ( मनु ८.१२४ ) । ब्राह्मणस्य तु निर्वासनं दण्ड इत्युक्तं तेनैव ( मनु ८.३८० )

न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम् ।
राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम् ॥

**शङ्खोऽप्याह**—त्रयाणां वर्णानां धनापहारवधबन्धक्रिया विवासनाङ्ककरणं ब्राह्मणस्य—इति । अत्र **क्रिया** इत्येतत्पृथक् पदम् । **गौतमोऽपि** ( १२.४३ )—न शारीरो ब्राह्मणदण्डः—इति । यत्तु

चतुर्णामपि वर्णानां प्रायश्चित्तमकुर्वताम् ।
शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत् ॥

इति वचनं तदतिदृप्तस्य बहुधनस्योक्तप्रायश्चित्तानुष्ठायिनो बन्धनरूपः शारीरो दण्डः कार्य इत्येतद्विषयं न त्वङ्गभङ्गादिविषयं

न त्वङ्गभेदं विप्रस्य प्रवदन्ति मनीषिणः ।

इति **हारीत**वचनात् । यत्तु बन्धस्य क्षत्रियादिवर्णत्रयविषयत्वबोधकं प्रागुक्तं **शङ्ख**वचनं तदेतदितरब्राह्मणविषयम् । ब्राह्मणस्य मुण्ढनादिरूपं दण्डमाह **नारदः** ( साहस १० )

शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात् ।
ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन च ॥

**तस्य** ब्राह्मणस्य । मुण्डनं ब्राह्मणस्य वधप्रतिनिधित्वेनाह **मनुः** ( ८.३७९ )

मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते ।
इतरेषां तु वर्णानां दण्डः प्राणान्तिको भवेत् ॥

इदमेवाभिप्रेत्याह **बृहस्पतिः**

महापातकयुक्तोऽपि न विप्रो वधमर्हति ।
निर्वासनाङ्कनं मौण्ड्यं तस्य कुर्यान्नराधिपः ॥

अङ्कने विशेषमाह **नारदः** ( मनु ९.२३७, नारद, परिशिष्ट ४४ )

गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ।
स्तेये तु श्वपदः कार्यो ब्रह्महण्यशिराः पुमान् ॥

दण्डान्तरमप्याह **याज्ञवल्क्यः** ( १.३६७ )

वाग्दण्डस्त्वथ धिग्दण्डो धनदण्डो वधस्तथा ।
योज्या व्यस्ताः समस्ता वाप्यपराधवशादिमे ॥

**वाग्दण्डः** परुषवचनरूपः । **धिग्दण्डो** धिगिति कुत्सनम् । एतेषां दण्डानां विषयविशेषस्तत्र तत्र द्रष्टव्यः । ऋणादानादिषु व्यवहारपदेषु यो दण्डविशेषः स तत्तन्निरूपणे दर्शयिष्यते । दिव्यसाधनके जयपराजयनिर्णये दण्डविशेषो दर्शितः **कात्यायनेन** ( ४५९–४६१ )

शतार्धं दापयेच्छुद्धमशुद्धो दण्डभाग्भवेत् ।
विषे तोये हुताशे च तुलाकोशे च तण्डुले ॥
तप्तमाषकदिव्ये च क्रमाद् दण्डं प्रकल्पयेत् ।
सहस्रं षट्शतं चैव तथा पञ्च शतानि च ॥
चतुस्त्रिद्व्येकमेवं च हीनं हीनेषु कल्पयेत् ।

**शुद्धस्य शतार्ध**दापनं भृतित्वेन न तु दण्डत्वेन । अयं दिव्यनिमित्तको दण्डो निह्नवमिथ्याभियोगनिमित्तकेन दण्डेन समुच्चीयते निमित्तसमुच्चयात् ॥

क्वचित्पुनर्न्यायप्रवृत्तिमाह **नारदः** ( व्य.मा.अ. १.४३ )

स्त्रीषु रात्रौ बहिर्ग्रामादन्तर्वेश्मन्यरातिषु ।
व्यवहारः कृतोऽप्येष पुनः कर्तव्यतामियात् ॥

**बृहस्पतिः**

पलायनानुत्तरत्वादन्यपक्षाश्रयेण च ।
हीनस्य गृह्यते वादो न स्ववाक्यजितस्य तु ॥

**नारदः** ( व्य.मा.अ. २.४० )

साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः ।
स्ववाचैव जितानां तु नोक्तः पौनर्भवो विधिः ॥

साक्षिसभ्योक्त्या पराजये तेषु दूषणस्योपन्यासे पुनर्व्यवहारप्रवृत्तिः स्ववाक्येन पराजये तु न सेत्यर्थः । प्राड्निर्णीतस्य पुनरुद्धरणं द्विगुणदण्डाङ्गीकारेण कार्यमित्याह **नारदः** ( व्य.मा.अ. १.६५ )

तीरितं चानुशिष्टं च यो मन्येत विधर्मतः ।
द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत् ॥

**तीरितं** समापितं निर्णीतमिति यावत् । **अनुशिष्टं** साक्षिभिरुक्तम् ।

**याज्ञवल्क्यः** ( १.३०५ )

दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।
सभ्याः सजयिनो दण्ड्या विवादाद् द्विगुणं दमम् ॥

**सजयिनो** जयिना सहिताः । **कात्यायनः** ( ४९६ )

कुलादिभिर्निर्गतेपि[1] न सन्तोषं गतस्तु यः ।
विचारयेत्कृतं राजा कुकृतं पुनरुद्धरेत्[2] ॥

**मनुः** ( ९.२३४ )

अमात्या प्राड्विवाको वा ये कुर्युः कार्यमन्यथा ।
तत्स्वयं नृपतिः कुर्यात्तान् सहस्रं तु दण्डयेत् ॥

**कचित्कृतस्य** निवृत्तिमाह **नारदः** ( ऋणादान३९–४१,२९–३० )

यद्बालः कुरुते कार्यमस्वतन्त्रस्तथैव च ।
अकृतं तदपि प्राहुः शास्त्रे शास्त्रविदो जनाः ॥
स्वतन्त्रोऽपि हि यः कार्यं कुर्यादप्रकृतिं गतः ।
तदप्यकृतमेवाहुरस्वतन्त्रत्वहेतुतः ॥
कामक्रोधाभिभूतार्तभयव्यसनपीडिताः ।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः ॥

---

१ कुलादिभिर्निर्गतो येन– इति अ–क. २ 'उद्वहन्' इति ब.

तथा दासकृतं कार्यमकृतं परिचक्षते ।
अन्यत्र स्वामिसन्देशान्न दासः प्रभुरात्मनः ॥
पुत्रेण च कृतं कार्यं यन्न स्याच्छन्दतः पितुः ।
तदप्यकृतमेवाहुर्दासः पुत्रश्च तत्समौ ॥

अस्वतन्त्रानाह **नारदः** ( ऋणादान ३३–३७ )

अस्वतन्त्रः स्मृतः शिष्य आचार्ये तु स्वतन्त्रता ।
अस्वतन्त्राः स्त्रियः सर्वाः पुत्रा दासाः परिग्रहाः ॥
गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः ।
बाल आ षोडशाद्वर्षात्पोगण्डश्चेति कीर्त्यते ॥
परतो व्यवहारज्ञः स्वतन्त्रः पितुरा मृतेः ।
जीवतोर्न स्वतन्त्रः स्याज्जरयापि समन्वितः ॥
तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ।
अभावे बीजिनो माता तदभावे तु पूर्वजः ॥

**परिग्रहाः** परिजनाः । **पितु**रित्येकवचनं छान्दसं पित्रोरित्यर्थः । उत्तरत्र तथाभिधानात् । **आ मृतेः** मरणमारभ्य । **कात्यायनः** ( ४६६ )

पिताऽस्वतन्त्रः पितृमान् भ्राता भ्रातृव्य एव वा ।
कनिष्ठो वा विभक्तस्वो दासः परिकरस्तथा ॥

**पिताऽस्वतन्त्रः पितृमान्** पितरि जीवति उत्पादितपुत्रोऽप्यस्वतन्त्र इत्यर्थः । **अविभक्तस्वः** अविभक्तधनः । क्वचिदस्वतन्त्रैरपि पुत्रादिभिः कृतस्यानिवृत्तिमाह **स** एव ( कात्या. ४६८–४७० )

प्रमाणं सर्व एवैते पण्यानां क्रयविक्रये ।
यदि संव्यवहारं प्राक् कुर्वन्तोप्यनुमोदिताः ॥
क्षेत्रादीनां तथैव स्याद् भ्राता भ्रातृसुतः सुतः ।
निसृष्टाः कृत्यकरणे गुरुणा परिगच्छता ॥
निसृष्टार्थस्तु यो यस्मिंस्तस्मिन्नर्थे प्रभुश्च सः ।
तद्भर्ता तत्कृतं कार्यं नान्यथा कर्तुमर्हति ॥

**बृहस्पतिरपि**

यः स्वामिना नियुक्तस्तु धनायव्ययपालने ।
कुसीदकृषिवाणिज्ये निसृष्टार्थस्तु स स्मृतः ॥
प्रमाणं तत्कृतं सर्वं लाभालाभव्ययोदयम् ।
स्वदेशे वा विदेशे वा स्वामी तन्न विसंवदेत् ॥ इति ।

उक्तप्रकारेण निर्णयं कुर्वतो राज्ञः फलं दर्शयति **बृहस्पतिः**

एवं शास्त्रोदितं राजा कुर्यान्निर्णयपालनम् ।
वितत्येह यशो लोके महेन्द्रसचिवो भवेत् ॥
साक्षिलेख्यानुमानेन प्रकुर्वन्कार्यनिर्णयम् ।
वितत्येह यशो राजा ब्रध्नस्याप्नोति विष्टपम् ॥

इति निर्णयपादनिरूपणम् । इति श्रीकोदण्डपरशुरामे···व्यवहारविवेकोद्द्योते व्यवहारमातृकानिरूपणम् ॥ १५ ॥

अथ ऋणादानादीनि व्यवहारपदानि निरूप्यन्ते । तत्र प्रथमं तावदृणादानाख्यमाद्यं व्यवहारपदं निरूप्यते । तस्य स्वरूपं दर्शयति **नारदः**

( ऋणादान १ )

ऋणं देयमदेयं च येन यत्र यथा च यत् ।
दानग्रहणधर्माश्च ऋणादानमिति स्मृतम् ॥

एतादृशमृणं देयमेतादृशमदेयमनेन देयमस्मिन्समये देयमनेन प्रकारेण देयमित्यधमर्णसम्बन्धि प्रतिदानविषयकं सर्वमुत्तमर्णसम्बन्धिनो दानग्रहणधर्माश्च यस्मिन्विवादविषये तदृणादानाख्यं व्यवहारपदमित्यर्थः। प्रतिदानग्रहणयोर्दानपूर्वकत्वान्नायं पाठक्रमो विवक्षितः । ऋणदानप्रकारमाह **बृहस्पतिः**

परिपूर्णं गृहीत्वाधिं बन्धं वा साधुलग्नकम् ।
लेख्यारूढं साक्षिमद्वा ऋणं दद्याद्धनी सदा ॥

**परिपूर्णं** वृद्धिसहितमूलद्रव्यपर्याप्तम् । **आधिर्बन्धकम्** । तत्र यो

१ 'आद्यं व्यवहारपदम्' इति ब.

विशेषः सोऽग्रे दर्शयिष्यते। बन्धशब्देनात्रोत्तमर्णस्य विश्वासार्थं तदभिमतस्य कस्यचिद्धस्तेऽधमर्णेन स्थापितं द्रव्यं गृह्यते। अस्मिन्नर्थे बन्धशब्दः प्रयुक्तो **नारदेन**

निक्षेपो मित्रहस्तस्थो बन्धो विश्वासकः स्मृतः।

विश्वासहेतुमित्रहस्तस्थो निक्षेपो बन्ध इत्यर्थः। **लग्नकः** प्रतिभूः। तत्र यो विशेषः सोऽग्रे दर्शयिष्यते। उत्तमर्णः परिपूर्णमाधिं बन्धं[1] **वोत्तमं** लग्नकं वा गृहीत्वाधमर्णहस्तलिखितारूढं साक्षियुक्तं वा ऋणं दद्यादित्यर्थः। ऋणशब्दपर्यायस्य कुसीदशब्दस्यार्थं कथयंस्तद्व्याजेन तत्प्रयोजनं दर्शयति **नारदः** (ऋ.९८)

स्थानलाभनिमित्तं यद्दानग्रहणमिष्यते।
तत्कुसीदमिति ज्ञेयं तेन वृत्तिः कुसीदिनाम्॥

**स्थानं** मूलधनस्यावस्थितिः। **लाभो** वृद्धिः। **तन्निमित्तं** तत्प्रयोजनकम्। कुसीदशब्दस्यावयवार्थमाह **बृहस्पतिः**

कुत्सितात्सीदतश्चैव निर्विशङ्कैः प्रगृह्यते।
चतुर्गुणं वाष्टगुणं कुसीदाख्यमतस्त्वृणम्॥

कुत्सितात् सीदत इत्येते अधमर्णविशेषणे। मतभेदेन वृद्धिप्रकारमाह **स** एव

वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधान्यैः प्रकीर्तिता।
षड्विधा मे समाख्याता तत्त्वतस्तां निबोध मे।

**मे** मम मते। ताश्च विधा दर्शयति **स** एव

कायिका कालिका चैव चक्रवृद्धिरतोऽपरा।
कारिता सशिखावृद्धिर्भोगलाभस्तथैव च॥

आसां स्वरूपं दर्शयति **स** एव

कायिका कर्मसंयुक्ता मासग्राह्या तु कालिका।
वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता॥

---

१ 'बन्धं चोत्तमं' इति अ-क.

प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा स्मृता ।
गृहात्तोष (षः?) फलं क्षेत्राद्भोगलाभः प्रकीर्तितः ॥

**कायिका कर्मसंयुक्ता** भोग्याधितया[1] स्थापितस्य यो दोहनवाहनादिकर्मरूपो भोगस्तत्सहिता या वृद्धिः सा कायिकेत्यर्थः । अत एव **व्यासः**

दोह्यवाह्यकर्मयुता कायिका समुदाहृता ।

**स्मृतिचन्द्रिकायां** तु यत्र बन्धकीकृतस्य गवाश्वादेर्दोहनवाहनादिकं कायिकं कर्म वृद्धित्वेन परिकल्पितं तत्र सा वृद्धिः कायिकेत्युक्तम् । **मासग्राह्या तु कालिका** प्रतिमासं ग्राह्यत्वेन परिकल्पिता या वृद्धिः सा कालिकेत्यर्थः । अत[2] एव **नारदः** (ऋ. १०३)

प्रतिमासं स्रवति या वृद्धिः सा कालिका मता । इति ।

वृद्धेरपि प्रतिमासं मूलभावे[3] पुनर्वृद्धिश्चक्रवृद्धिः । अत एव **नारदः**

वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता । इति ।

**कारिता ऋणिना कृते**ति ऋणिनाधमर्णेन स्वेच्छया कृता या वृद्धिः सा कारितेत्यर्थः ।

वृद्धिः सा कारिता नाम यर्णिकेन स्वयं कृता । इति

**नारदेना**भिधानात् (नारद,ऋ.१०३) । अधमर्णकारितैव वृद्धिर्देया नोत्तमर्णकारितेत्याह **कात्यायनः** (४९८)

ऋणिकेन तु या वृद्धिरधिका संप्रकल्पिता ।
आपत्कालकृता नित्यं दातव्या कारिता तु सा ॥
अन्यथा कारिता वृद्धिर्न दातव्या कथंचन ।

उत्तमर्णप्रलोभनार्थमापत्काले शास्त्रीयवृद्ध्यधिकापि स्वयं परिकल्पिता या वृद्धिः कारिताख्या सा दातव्या । **अन्यथा** न स्वयं परिकल्पिता किं तर्हि धनिकेनाधिका परिकल्पिता सा न दातव्येत्यर्थः । **प्रत्यहं गृह्यते** इति अधमर्णप्रतिश्रुतदिनसंख्यायुक्तवृद्धिग्रहणकालोपलक्षणम् ।

१ 'भोग्याधितया···कायिकेत्यर्थः'–एतद्वाक्यं नास्ति ब–आदर्शे. २ 'अत एव··· कालिका मतेति' इति नास्ति ब–आदर्शे. ३ 'पुनर्भावेन' इति क.

अत एव कालमात्रनिर्देशः कृतः **कात्यायनेन** (४९९)

प्रतिकालं ददात्येव शिखावृद्धिस्तु सा स्मृता । इति ।

अस्या वृद्धेः शिखासादृश्यमुक्तं **बृहस्पति**नैव

शिखेव वर्धते नित्यं शिरश्छेदान्निवर्तते ।
मूले दत्ते तश्चैवैषा शिखावृद्धिस्तु सा स्मृता ॥

गृहाद् बन्धकीकृताद्यो निवासादिजनितः सन्तोषः क्षेत्राद्यत्सस्यादिफलं सा भोगलाभाख्या वृद्धिरिति **गृहात्तोष** इत्यस्यार्थः । **कल्पतरौ** तु

गृहात्स्तोमः सदः क्षेत्राद्भोगलाभः प्रकीर्तितः ।

इति पठित्वा स्तोमो भाटकं सदः सस्यादिफलमिति व्याख्यातम् । गृहक्षेत्रग्रहणं सर्वस्य स्थावररूपस्य भोग्याधेरुपलक्षणम् ।

आधिभोगस्त्वशेषो यो वृद्धिस्तु परिकल्पितः ।
प्रयोगे यत्र चैवं स्यादाधिभोगः स उच्यते ॥

इति **कात्यायन**स्मरणात् (५०१) । **यत्र** यस्मिन् ऋणादानप्रयोगे स्थावरमात्रसम्बन्धी आधिभोगो वृद्धित्वेन परिकल्पितस्तत्र सा वृद्धिराधिभोग इत्युच्यते इत्यस्यार्थः । वृद्धेः परिमाणमाह **याज्ञवल्क्यः** (२.३७)

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।
वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा ॥

सबन्धके प्रयोगे प्रयुक्तद्रव्यस्याशीतितमो भागो वृद्धिः । पणशते प्रयुक्ते सपादः पणः प्रतिमासं वर्धत इत्यर्थः । **अन्यथा** बन्धकराहित्ये । **वर्णक्रमात्** ब्राह्मणादिवर्णक्रमेण **शतं द्वित्रिचतुःपञ्चकं** द्वित्रिचतुःपञ्चाधिकं—तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते (पा.५.१.४७)—इति कन् । बन्धकरहिते पणशतप्रयोगे प्रतिमासं ब्राह्मणात्पणद्वयं क्षत्रियात्पणत्रयं वैश्यात् पणचतुष्टयं शूद्रात्पणपञ्चकं ग्राह्यमित्यर्थः । प्रतिभूसहिते प्रयोगे वृद्धेः परिमाणमाह **व्यासः**

सबन्धे भाग आशीतः षाष्ठो भागः सलग्नके ।
निराधाने द्विकशतं मासलाभ उदाहृतः ॥

**सबन्धे** आधिसंहिते[1] । **आशीतः** अशीतितमः **षाष्ठः** षष्टितमः । **लग्नकः** प्रतिभूः । **आधान**ग्रहणं प्रतिभुवोऽप्युपलक्षणम् । **कल्पतरौ** तु साष्टभाग इति पठित्वा सलग्नके अशीतितमो भागः स्वकीयाष्टमभागसहितो मासवृद्धिरित्युक्तम् । यत्तु

अशीतिभागं गृह्णीयान्मासाद् वार्धुषिकः शते ।
द्विकं शतं वा गृह्णीयात्सतां धर्ममनुस्मरन् ॥ इति

**मनु**वचने ( ८.१४०—१४१ ) द्विकं शतं वेति पक्षान्तराभ्यनुज्ञानं तदबन्धकविषयतया व्यवस्थापनीयं पूर्वोदाहृतवचनात् । कचिद्वृद्धेः परिमाणान्तरमाह **याज्ञवल्क्यः** ( २.३८ )

कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् ।

दद्युरित्युत्तरवाक्यस्थस्यानुषङ्गः । ऋणं गृहीत्वा दुर्गममार्गगन्तारः प्रतिमासं पणशतस्य दशपणान् वृद्धिं दद्युः समुद्रगामिनो विंशतिपणान् दद्युरित्यर्थः । ब्राह्मणादयः सर्वेऽधमर्णाः सबन्धके वा प्रयोगे स्वकृतां वृद्धिं सर्वजातीयेषूत्तमर्णेषु दद्युरिति कारितवृद्ध्यङ्गीकरणलक्षणं पक्षान्तरमाह **स** एव ( या. २.३८ )

दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु । इति ।

गवादीनां पशूनां दासीनां च ऋणत्वेन दत्तानां वृद्धिविशेष उक्त**स्तेनैव** ( याज्ञ. २.३९ ) सन्ततिस्तु पशुस्त्रीणाम्—इति । सम्भवति च गवादीनामृणत्वेन दानं तत्पोषणाशक्तस्य तत्पुष्टिसन्तत्यर्थिनः ग्रहणं तु क्षीरवाहनसेवाद्यर्थिनः । कचिदस्वीकृतापि वृद्धिर्दातव्येत्याह **विष्णुः** ( विष्णुधर्मसूत्र ६.४० )

यो गृहीत्वा ऋणं सर्वं श्वो दास्यामीति सामकम् ।
न दद्याल्लोभतः पश्चात्तदहा वृद्धिमाप्नुयात् ॥

---

१ 'आधिरहिते' इति क.

श्व इति प्रतिश्रुतस्य प्रतिदानकालावधेरुपलक्षणम् । **सममेव साम-कम्** । योऽमुकस्मिन्दिने सममेवाहं त्वदीयं धनं दास्यामीति प्रतिज्ञाय ऋणं गृहीत्वा पश्चाल्लोभाद्विलम्बं कुर्यात्सोवधिदिनमारभ्य वृद्धिं दद्यादित्यर्थः । यदि स्वकार्यं कर्तुं याचित्वा गृहीतमप्रतिदायैव कश्चिद्देशान्तरं गच्छेत्तदा संवत्सरादूर्ध्वं तद्धनं वर्धत इत्याह **कात्यायनः** ( ५०२ )

यो याचितकमादाय तमदत्त्वा दिशं व्रजेत् ।
ऊर्ध्वं संवत्सरात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥

इदं त्वप्रतियाचितविषयम् । यदि प्रतियाचितो याचितकमदत्त्वा देशान्तरं गच्छेत्तदा मासत्रयादूर्ध्वं तद्धनं वर्धते इत्युक्तं **तेनैव** (कात्या० ५०३)

कृत्वोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत् ।
ऊर्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥

**कृत्वोद्धारं** याचितकं गृहीत्वा **याचितोप्यदत्त्वे**त्यन्वयः । यदि याचितकमादाय प्रतियाचितोपि तत्र स्थितो न ददाति स प्रतियाचनादिनमारभ्य तद्धनस्य वृद्धिं दद्यादित्याह **स** एव ( कात्या. ५०४ )

स्वदेशेपि स्थितो यस्तु न दद्याद्याचितः क्वचित् ॥
तं ततो कारितां वृद्धिमनिच्छन्तं च दापयेत् ॥

**ततः** तद्दिनमारभ्य । एतत्सर्वं कंचिदवधिमपरिकल्प्य याच्ञाप्राप्ते वेदितव्यम् । अवधिं स्वीकृत्य तदतिक्रमे तु तद्दिनमारभ्य तद्धनस्य वृद्धिर्ज्ञातव्या तदह्ना वृद्धिमाप्नुयादिति न्यायस्य समानत्वात् । विवाहादौ यच्छोभाद्यर्थं मित्रादिभिः प्रीत्या दत्तं तत्स्वेन वृद्धिमपरिकल्प्य गृहीतमपि मासषट्कादूर्ध्वं वर्धत इत्याह **नारदः** (ऋ. १०८)

न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् ।
अनाकारितमप्यूर्ध्वं वत्सरार्धाद्विवर्धते ॥

**अनाकारिता** अकृता । प्रीतिदत्तस्य प्रतियाचितस्यादाने वृद्धिविशेषमाह **कात्यायनः** ( ५०५ )

प्रीतिदत्तं न वर्धेत यावन्न प्रतियाचितम् ।
याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ॥

**पञ्चकं** पञ्चाधिकम् । पणशतस्य पणपञ्चकं प्रतियाचनदिनमारभ्य प्रतिमासं वर्धते इत्यर्थः । क्रीतस्य वस्तुनो मूल्यमदत्त्वा देशान्तरगमने वृद्धिमाह **स** एव ( कात्या. ५०७ )

पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत् ।
ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात् ॥

एतच्च विक्रेत्रा यदि न याचितस्तदा ज्ञातव्यम् । याचने त्वेतस्य वृद्धिशेषनिक्षिप्तद्रव्ययोश्च याचनदिनादारभ्य प्रतिमासं शते पञ्चकं वर्धत इत्याह **स** एव ( कात्या. ५०६ )

निक्षिप्तं वृद्धिशेषं च क्रयविक्रय एव च ।
याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ॥

अस्यामकृतायां वृद्धौ यत्र पञ्चकं शतमित्यादिपरिमाणविशेषानुपदेशस्तत्राशीतिभागो वृद्धिः स्यादिति याज्ञवल्क्योक्तं परिमाणं ग्राह्यम् । अत एव **विष्णुः** ( विष्णुधर्मसूत्र ६.३-४ ) वृद्धिं दद्युरकृतामपि वत्सरातिक्रमे-यथाभिहिताम्—इति । **यथाभिहितां** शास्त्रैर्यथोक्तां तथाविधामित्यर्थः । क्वचिदकृताया वृद्धेरपवादमाह **नारदः** ( व्य.मा.अ.२.३६ )

पण्यमूल्यं भृतिर्न्यासौ[2] दण्डो यश्च प्रकल्पितः ।
वृथादानाक्षिकपणा वर्धन्ते नाविवक्षिताः ॥

**पण्यमूल्यं** क्रीतस्य मूल्यं **भृतिर्**वेतनं **न्यासो** निक्षेपः । **वृथादानं** नटादिभ्यः प्रतिश्रुतम् । **आक्षिकपणो** द्यूतद्रव्यम् । **अविवक्षिताः** अप्रतिश्रुतवृद्धिकाः । अत्र पण्यमूल्यस्य वृद्ध्यभावाभिधानं प्रवासप्रतियाचनयोरभावे ज्ञातव्यम् । न्यासस्य वृद्ध्यभावो निक्षिप्तं वृद्धिशेषं चेति पूर्वोदाहृतकात्यायनवचनात्प्रतियाचनाभावे

---

१ 'शतं पञ्चकं' इति अ—क. २ 'भृतिर्न्यासो' इति ब.

न वृद्धिः स्त्रीधने लाभे न क्षिप्ते च यथास्थिते ।
सन्दिग्धे प्रातिभाव्ये च यदि न स्यात्स्वयंकृता ॥

इति **संवर्त**वचनाद् व्यक्त्यन्यथाकरणाभावे च ज्ञातव्यः । **लाभो** वृद्धिः । **सन्दिग्धे प्रातिभाव्ये** दातुमिदमुचितमनुचितं वेति सन्देहविषये ऋण( णि ? )द्रव्यार्पणादौ । अन्यत्रापि क्वचिद् वृद्ध्यभावमाह **व्यासः**

प्रातिभाव्यं भुक्तबन्धमगृहीतं च दित्सतः ।[1]
न वर्धते प्रपन्नस्य दमः शुल्कं प्रतिश्रुतम् ॥

**भुक्तबन्ध** इति गोप्याधितया स्थापितस्य वस्त्रालङ्कारादेरुपभोगे वृद्धिर्न भवतीत्येतदर्थम् । अत एवोक्तं **गौतमेन** (गौ.ध.सू. १२.२९)– भुक्ताधिर्न वर्धते—वस्त्रालङ्कारादिरिति । **अगृहीतं च दित्सत** इति कृतवृद्धेरपवादः । **दित्सतः** प्रतिदातुमिच्छतोऽधमर्णाद् वृद्धिलोभादिवशाद्युत्तमर्णेन तन्न गृहीतं तदा तस्य कृतापि वृद्धिर्न देयेत्यर्थः । तथा च **याज्ञवल्क्यः** ( २.४४ )

दीयमानं न गृह्णाति प्रयुक्तं यत्स्वकं धनम् ।
मध्यस्थस्थापितं तत्स्याद्वर्धते न ततः परम् ॥

**मध्यस्थस्थापित**मिति विशेषणादधमर्णेन यदि स्वहस्ते स्थाप्येत तदा भवत्येव वृद्धिः । दत्तस्य ऋणस्य प्रतिमासं प्रतिवर्षं वा वृद्धिग्रहणं विना चिरमवस्थितस्य परमां वृद्धिं द्रव्यभेदेनाह **बृहस्पतिः**

हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके ।
धान्ये चतुर्गुणा प्रोक्ता सदवाह्यलवेषु च ॥
उक्ता पञ्चगुणा शाके बीजेक्षौ षड्गुणा स्मृता ।
लवणस्नेहमद्येषु वृद्धिरष्टगुणा मता ।
गुडे मधुनि चैवोक्ता प्रयुक्ते चिरकालिके ॥

**कुप्यं** त्रपुसीसादिकम् । **सदः** क्षेत्रफलं पुष्पफलमूलादिकम् ।

---

[1] 'भुक्तं बन्धं' इति अ–क.

धान्यस्य क्षेत्रफलत्वेपि पृथङ्निर्देशो गोबलीवर्दन्यायात्। **वाह्यो** घोटकादिः। **लव** ऊर्णाचामरादिः। यत्तु

धान्ये सदलवे वाह्ये नातिक्रामति पञ्चताम्।

इति **मनु**वचनं ( ८.१५१ ) तत् षाड्गुण्यादिनिषेधपरम्। **स्मृतिचन्द्रिका**कारस्तु प्रत्यर्पणसमसमयसमृद्धाधमर्णविषयमित्याह। अत्र चिरकालशब्देन प्रतिश्रुताया अशीतिभागादिवृद्धेर्यस्मिन् काले द्वैगुण्यादिप्रापकत्वं भवति ततोऽधिकः कालो गृह्यते। वज्रादिष्वपि द्वैगुण्यमाह **वसिष्ठः**

वज्रशुक्तिप्रवालानां हेम्नश्च रजतस्य च।
द्विगुणा त्विष्यते वृद्धिः कृतकालानुसारिणी॥

**शुक्ति**शब्देनात्र मुक्ताफलं लक्ष्यते वज्रसाहचर्यात्। अत एव **कात्यायनः** ( ५१० )

मणिमुक्ताप्रवालानां सुवर्णरजतस्य च।
तिष्ठते द्विगुणा वृद्धिः फलकैटाविकस्य च॥

**कैटं** कीटोद्भवं पट्टसूत्रादि। **आविकं** कम्बलादि। ताम्रादौ त्रिगुणां वृद्धिमाह **वसिष्ठः**

ताम्रायःकांस्यरीतीनां त्रपुणः सीसकस्य च।
त्रिगुणा तिष्ठते वृद्धिः कालाच्चिरकृतस्य तु॥

**रीति**रारकूटम्। कार्पासे षड्गुणां वृद्धिमाह **व्यासः**

शाककार्पासबीजेक्षौ षड्गुणा परिकीर्तिता।

तैलादावष्टगुणां वृद्धिमाह **कात्यायनः** ( ५११ )

तैलानां चैव सर्वेषां मद्यानामथ सर्पिषाम्।
वृद्धिरष्टगुणा ज्ञेया गुडस्य लवणस्य च॥

**व्यासो**ऽपि

वदन्त्यष्टगुणान् काले मद्यस्नेहरसासवान्।

**स्नेह**स्तैलादिः। **रसः** क्षीरादिः। **विष्णुः** ( विष्णुधर्मसूत्र ६.११-

१५) हिरण्यस्य द्विगुणा वृद्धिस्त्रिगुणा वस्त्रस्य धान्यस्य चतुर्गुणा रसस्याष्टगुणा सन्ततिः स्त्रीपशूनाम्—इति । यत्तु—त्रिगुणं धान्यं धान्येनैव रसा व्याख्याताः पुष्पमूलफलानि च तुलाधृतमष्टगुणम्—इति **वसिष्ठवचने** (वसिष्ठधर्मसूत्र २.४४-४७) धान्यादीनां त्रैगुण्याभिधानं तद्यस्मिन्देशे त्रिगुणमेव धान्यादिकं देयमिति स्थितिस्तद्विषयम् । **तुलाधृतं** शर्करादि । एवमन्यान्यपि यानि न्यूनाधिकपरमवृद्धिप्रतिपादकानि

वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ।

इत्येवमादीनि **याज्ञवल्क्यादि**वचनानि (या. २.३९) तानि देशविशेषविषयतया योज्यानि । देशस्थितिभेदेन परमवृद्धेर्भेद उक्तो **नारदेन** (ऋ. १०५–१०६)

ऋणानां सार्वभौमोऽयं विधिर्वृद्धिकरः स्मृतः ।
देशाचारस्थितिस्त्वन्या यत्रर्णमवतिष्ठते ॥
द्विगुणं त्रिगुणं चैव तथान्यस्मिंश्चतुर्गुणम् ।
तथाष्टगुणमन्यस्मिन्देयं देशेऽवतिष्ठते ॥ इति ।

येषां द्वैगुण्यादिकमनाम्नातं तेषां द्वैगुण्यं ज्ञेयमित्याह **विष्णुः** (विष्णुधर्मसूत्र ६.१७)—अनुक्तानां द्विगुणम्—इति ॥

अयं च द्वैगुण्यादिरूपो वृद्ध्युपरमो यदि वृद्धिः पुरुषान्तरे न संक्रामिता न वा मूलीकृता तदा भवतीति ज्ञातव्यम् । तेनाधमर्णो यदि तां वृद्धिमहं दास्यामीति पुरुषान्तरमङ्गीकारयति स्वयं वा तां मूलत्वेनाङ्गीकरोति उत्तमर्णो वा कस्मिंश्चित्पुरुषे तां वृद्धिमधमर्णाङ्गीकारपुरःसरं बन्धकीकृत्य स्वधनं गृह्णाति तदा तद्दिनमारभ्य प्रतिदानपर्यन्तं तद्धनं वर्धत एव । अत एव **मनुः** (८.१५१)

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहिता ।

**कुसीद**मृणं तस्य **वृद्धिः** कुसीदवृद्धिः । **द्वैगुण्य**ग्रहणं त्रैगुण्यादीनामप्युपलक्षणम् । **सकृदाहिता** सकृत्प्रयुक्ता पुरुषान्तरसंक्रमणादिप्रयोगान्तररहितेत्यर्थः । केचित्तु सकृदाहृतेति पठन्ति तत्रायमर्थः । यदि

प्रतिमासं प्रतिवर्षं न गृह्यते किं तु सकृद् गृह्यते तदा द्वैगुण्यं नातिक्रामतीति। एतेन सकृद्ग्रहणाभावे द्वैगुण्यमतिक्रामतीति सूचितम्। क्वचिद् वृद्ध्युपरमो नास्तीत्याह **बृहस्पतिः**

तृणकाष्ठेष्टकासूत्रकिण्वचर्मास्थिवर्मणाम्।
हेतिपुष्पफलानां च वृद्धिस्तु न निवर्तते॥

**किण्वं** सुरोत्पादनकारणभूतो मलविशेषः। **चर्म** शरादिनिवारकफलकः। **वर्म** कवचं। **हेति**रायुधम्। **वसिष्ठः**

दन्तचर्मास्थिशृङ्गाणां मृन्मयानां तथैव च।
अक्षया वृद्धिरेतेषां पुष्पमूलफलस्य च॥

**विष्णुः** (विष्णुधर्मसूत्र ६.१६)—किण्वकार्पाससूत्रचर्मवर्मायुधेष्टकाङ्गाराणामक्षया—इति। अत्र यत्पुष्पफलकार्पासानां वृद्ध्युपरमाभावाभिधानं तदत्यन्तसमृद्धाधमर्णविषयं देशविशेषविषयं वेति न प्रागुक्तवचनविरोधः। शिखावृद्ध्यादीनामनुपरममाह **बृहस्पतिः**

शिखावृद्धिं कायिकीं च भोगलाभं तथैव च।
धनी तावत्समादद्याद्यावन्मूलं न शोधितम्॥

**न शोधितं** न प्रत्यर्पितम्॥

आधेः स्वरूपं तद्भेदं च दर्शयति **बृहस्पतिः**

आधिर्बन्धः समाख्यातः स च प्रोक्तश्चतुर्विधः।
जङ्गमः स्थावरश्चैव गोप्यो भोग्यस्तथैव च॥
याहच्छिकः सावधिश्च लेखारूढोऽथ साक्षिमान्।

यद्यप्याधिरष्टविधो दर्शितस्तथापि गोप्यभोग्ययाहच्छिकसावधिरूपाणां चतुर्णां भेदानामत्रानेकविधाध्युपयोगार्थं तात्पर्यातिशयेन कथनं नान्येषामिति वक्तुं प्रोक्तश्चतुर्विध इत्युक्तमिति **स्मृतिचन्द्रिकायाम्।** आगृहीतस्य धनस्योपरि विश्वासार्थमधमर्णेनोत्तमर्णे धीयते स्थाप्यते इत्याधिः। **गोप्यो** रक्षणीयः। **याहच्छिकः** अकृतावधिः। **सावधिः** अमुकस्मिन् दिने ऋणं प्रत्यर्प्याहमेनमाधिं मोचयिष्यामि नो चेत्तवैव

चायमित्यवधिं कृत्वा स्थापितः । एता मुख्याङ्कतस्रो विधा दर्शयति **नारदः** (ऋ. १२४-२५)

अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः ।
कृतकालोपनेयश्च यावद्देयोद्यतस्तथा ॥
स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च ।

**अधि** उपरि **क्रियते** स्थाप्यते । **कृतकालोपनेयः** कृतकाले कल्पितेऽवधौ उपनेयः स्वसमीपं नेयोऽधमर्णान्मोचनीय इत्यर्थः । **यावद्देयोद्यतः** यावद्दृणं तिष्ठति तावत्स्थापितोऽवधिरहित इत्यर्थः । आधेर्गृहीतस्य यथासमयं परिपालनं कर्तव्यमितरथा वृद्धिहानिर्मूलहानिर्वा भवतीत्याह **हारीतः**

बन्धं यथा स्थापितं स्यात्तथैव परिपालयेत् ।
अन्यथा नश्यते लाभो मूलं वा तद्व्यतिक्रमात् ॥

**तद्व्यतिक्रमात्** समयव्यतिक्रमात् । अत्र वृद्धिहान्यभिधानं गोप्यतया स्थापितस्याधेर्भोगे वेदितव्यम् । अत एव **याज्ञवल्क्यः** (२.५९)

गोप्याधिभोगे नो वृद्धिः सोपकारेऽथ ह्रापिते । इति ।

गोप्याधेरल्पेऽपि भोगे महत्यपि वृद्धिर्न दातव्या । **सोपकारे** भोग्याधौ सवृद्धिके **ह्रापिते** व्यवहारायोग्यतां प्रापिते वृद्धिर्न दातव्येत्यर्थः । एतच्च बलात्कारविषयम् । तथा च **मनुः** (८.१४४)

न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत् ।

भोगप्रतिषेधं कुर्वतोऽधमर्णस्य वचनमुल्लङ्घ्याधिं भुञ्जानस्यात्यन्तापराधित्वादल्पभोग एव सर्ववृद्धिनाश इत्यर्थः । बलात्काराभावे तूक्तं तेनैव (मनु ८.१५०)

यः स्वामिनाननुज्ञातमाधिं भुङ्क्तेऽविचक्षणः ।
तेनार्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः ॥

**अर्ध**ग्रहणमननुज्ञाताधिभोगानुसारेण कल्पितस्य वृद्धिभागस्योपलक्षणम् । बृहस्पतिवचने यन्मूलहान्यभिधानं तद्बलात्कारकृतमहाभोगविष-

यमित्युक्तं **स्मृतिचन्द्रिकायाम्** । आधिविनाशविषयमिति केचित् । गोप्याधितया स्थापितस्य दास्यादेः कर्मकारणे विशेषान्तरमाह **कात्यायनः** ( ५२५ )

अकाममननुज्ञातमाधिं यः कर्म कारयेत् ।
भोक्ता कर्मफलं दाप्यो वृद्धिं वा न लभेत सः ॥

**अकामम्** इच्छारहितम् । **कर्मफलं** वेतनम् । **दाप्यः** अधमर्णायेति शेषः । एवं गोप्याधितया स्थापिते घोटकादौ तद्भाटकं दापनीयं वृद्धिर्वा त्याजनीया । उभयविधस्याधेर्योऽन्यथाभावादिकं प्रापयति तं प्रत्याह **याज्ञवल्क्यः** ( २.५९ )

नष्टो देयो विनष्टश्चेद् दैवराजकृताद्दृते ।

**नष्टो** विकृतिं गतः पूर्ववत्कृत्वा देयः । **विनष्टः** आत्यन्तिकं नाशं प्राप्तः सोऽपि मूल्यादिद्वारेण देयः । अग्न्युदकदेशोपप्लवादिदैवकृते राजकृते च विनाशे नैवमित्यर्थः । विकृतस्यैवाधेः प्रत्यर्पणे लाभहानिमाह **नारदः** ( ऋ. १२५-१२६ )

उपचारस्तथैवास्य लाभहानिर्विपर्यये ।
प्रमादाद्धनिनस्तद्वदाधौ विकृतिमागते ॥

**अस्य** आधेः **तथैव** समयानतिक्रमेणैवोप**चारो** व्यवहारः । **तद्विपर्यये** वृद्धिहानिः । **तद्वदाधौ धनिनः प्रमादाद् विकृतिमागते** लाभहानिरित्यर्थः । उपभोगेन विकृतिं गतस्य तथैवार्पणे मूलनाशमाह **बृहस्पतिः**

भुक्ते त्वसारतां प्राप्ते मूलहानिः प्रजायते ।

आधेर्विनाशे तन्मूल्यं दातव्यमित्याह **व्यासः**

ग्रहीतृदोषान्नष्टश्चेद्बन्धो हेमादिको भवेत् ।
ऋणं सलाभं संशोध्य तन्मूल्यं दापयेद्धनी ॥

**सलाभमृणं संशोध्य** सम्यग्विचार्य विनष्टाधेर्मूल्यं दत्त्वा

यधृणमध्ये किंचिदधमर्णेऽवशिष्टं तदा तद् गृह्णीयादित्यर्थः। सवृद्धिकमूल्पर्याप्ताधेर्नाशे तद्धानिमाह नारदः ( ऋ. १२६ )

विनष्टे मूलनाशः स्याद् दैवराजकृताद्दते।

हारीतोऽपि

आधौ नष्टे धनं नष्टं धनिकस्याधिरेव वा। इति।

सलाभमूलापेक्षया बहुमूल्यस्याधेर्नाशे सलाभं मूलं दत्त्वावशिष्टं मूल्यमपि दद्यात्। तथा च बृहस्पतिः

बहुमूल्यो यत्र नष्ट ऋणिकं तत्र तोषयेत्।

मनुरपि ( ८.१४४ )

मूल्येन तोषयेच्चैनमाधिस्तेनोऽन्यथा भवेत्।

यो धनिक आधिनाशेऽपि ऋणपत्रावष्टम्भेनाधमर्णाद्धनं जिघृक्षेत स दण्डनीय इत्याह कात्यायनः ( ५२८ )

आधिदुष्टेन (आधिं दुष्टेन ?) लेख्येन भुङ्क्ते यद्दणिकाद्धनी।
नृपो दमं दापयित्वा आधिलेख्यं तु नाशयेत्॥

दमं दण्डम्। दैवराजकृते आधिविनाशे वृद्धिसहितमृणमाध्यन्तरं वाधमर्णो धनिने दद्यात्। तथा च बृहस्पतिः

दैवराजोपघातेन यत्राधिर्नाशमाप्नुयात्।
तत्राधिं दापयेद्दद्यात्सोदयं वा धनमृणी॥

राजोपघातोऽत्रोच्छृङ्खलेन राज्ञा कृत उपप्लवो न तु धनिकापराधनिमित्तकः। अत एवोक्तं व्यासेन

दैवराजोपघाते तु न दोषो धनिनः क्वचित्। इति।

एवं चोरस्वजनादिनिमित्तकाध्यापचारेऽपि धनिकदोषाभावे धनमाध्यन्तरं वा दातव्यम्। अत एव कात्यायनः ( ५२४ )

न चेद्धनिकदोषेण निपतेद्वा म्रियेत वा।
आधिमन्यं स दाप्यः स्याद्दणान्मुच्येत नर्णिकः॥

**निपतेत्** नश्येत् । **क्रियेतेति** पश्चाद्यभिप्रायेण । **अदाने** तस्मा-
दृणान्न मुच्येतेत्यर्थः । सम्यग्रक्ष्यमाणस्याप्याधेरसारत्वे जाते धनमाध्य-
न्तरं वा दातव्यमित्याह **नारदः** ( ऋ. १३० )

रक्ष्यमाणोपि यद्याधिः कालेनेयादसारताम् ।
आधिरन्योऽथवा कार्यो देयं वा धनिनो धनम् ॥

**असारतां** वृद्धिसहितमूलद्रव्यापर्याप्तताम्[1] । **याज्ञवल्क्योऽपि**
( २.६० )

आधेः स्वीकरणात्सिद्धी रक्ष्यमाणोऽप्यसारताम् ।
यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत् ॥

**आधेः स्वीकरणात्** उपभोगात् सिद्धिर्न लेख्यमात्रेणेत्यर्थः ।
तथा च **नारदः** ( ऋ. १२९ )

आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा ।
सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा ॥

गोप्याधौ भोगः स्वीकारः, भोग्याधौ फलभोगः । एतच्चाधेर्भोगात्सि-
द्धिप्रतिपादनं—आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ( या. २.२३ )
इत्येवमादिवाक्योक्तनिर्णयार्थम् । अत एव द्वयोर्धनिकयोर्दुष्टेनाधमर्णेनैकस्य
बन्धकीकरणे भोगवशान्निर्णय इत्याह **विष्णुः** ( ५.१८४ )

ययोर्निक्षिप्त आधिस्तौ विवदेतां यदा नरौ ।
यस्य भुक्तिर्जयस्तस्य बलात्कारं विना कृता ॥

उभयोरपि भुक्तियोगित्वे निर्णयप्रकारमाह **बृहस्पतिः**

क्षेत्रमेकं द्वयोर्बन्धे दत्तं यत्समकालिकम् ।
येन भुक्तं भवेत्पूर्वं तस्य तत्सिद्धिमाप्नुयात् ॥

**क्षेत्र**ग्रहणमुपलक्षणम् । **वसिष्ठोऽपि**

तुल्यकाले निसृष्टानां[2] लेख्यानामाधिकर्मणि ।
येन भुक्तं भवेत्पूर्वं तस्याधिर्बलवत्तरः ।

**निसृष्टानां** कृतानां **लेख्यानां** सद्भावेऽपीति शेषः । उभयोरप्ये-

---

१ 'बन्धम्' इति अ-क. २ 'विसृष्टानां' इति ब.

कस्य क्षेत्रस्य बन्धकीकृत्य निर्देशे तयोश्चोपभोगार्थं युगपत् प्राप्तयोर्विभज्य तद्ग्रहणमित्याह **वसिष्ठः**

यद्येकदिवसे तौ तु भोक्तुकामावुपागतौ ।
विभज्याधिः समं तेन भोक्तव्य इति निश्चयः ॥

**तेन** ताभ्याम् । वचनव्यत्यये सुश्छान्दसः । उभयोरेकं बन्धकीकुर्वतोऽधमर्णस्य दण्ड उक्तः **कात्यायनेन** ( ५१७ )

आधिमेकं द्वयोर्यस्तु कुर्यात्का प्रतिपद्भवेत् ।
तयोः पूर्वकृतं ग्राह्यं तत्कर्ता चोरदण्डभाक् ॥

आधिविशेषे दण्डविशेषमाह **विष्णुः** ( विष्णुधर्मसूत्र ५.१८१-१८२ )—गोचर्ममात्राधिकां भुवमन्यस्याधीकृतामन्यस्य यः प्रयच्छेत्स वध्यः । ऊनां चेत् षोडशसुवर्णं दण्ड्यः—इति । गोप्याधिर्मूलधनस्य द्वैगुण्यापत्तिपर्यन्तं यदि न मोच्यते यदि च सावधिर्गोप्याधिर्भोग्याधिश्च कृतावधिकालपर्यन्तं न मोच्यते तदा सोऽधमर्णस्य नश्यति उत्तमर्णस्य स्वं भवति । निरवधिको भोग्याधिस्तु न कदाचिदुत्तमर्णस्य स्वं भवतीत्याह **याज्ञवल्क्यः** ( २.५८ )

आधिः प्रणश्येद् द्विगुणे धने यदि न मोच्यते ।
काले कालकृतो नश्येत्फलभोग्यो न नश्यति ॥

**काले** अवधौ प्राप्ते इत्यर्थः । **कालकृतः** कृतावधिकः । जातिकालसुखादिभ्यः परवचनम्—इति वार्तिककारवचनान्निष्ठान्तस्य परनिपातः । द्विगुणीभावानन्तरमवध्यनन्तरं चाधिविमोचने चतुर्दश दिनानि प्रतीक्षा कार्येत्याहतुर्व्यासबृहस्पती

हिरण्ये द्विगुणीभूते पूर्णे काले कृतावधौ ।
बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य तु ॥
तदन्तरा धनं दत्त्वा ऋणी बन्धमवाप्नुयात् ।

**धनी** उत्तमर्णः । **तत्** तस्मात्कारणात् । **अन्तरा** दिनचतुर्दशकमध्ये इत्यर्थः । यत्तु

पूर्णावधौ शान्तलाभे बन्धे स्वामी धनी भवेत् ।
अनिर्गते दशाहे तु ऋणी मोचितुमर्हति ॥

इति दिनदशकप्रतीक्षाविधायकं **बृहस्पतिवचनं** तद्वस्त्रादिविषयं व्यास-बृहस्पतिवचनं तु हिरण्यविषयं हिरण्ये द्विगुणीभूते इति तत्राभिधानात् । **शान्तलाभे** त्रैगुण्यादिपरमवृद्ध्या निवृत्तलाभे । अत एव शान्त-लाभे इति सामान्येनाभिधानाद् याज्ञवल्क्यवचने द्वैगुण्यग्रहणं त्रैगुण्या-दीनामप्युपलक्षणम् । तेन यदा गोप्याधिं स्थापयित्वा वस्त्रादिकमृणतया गृह्यते तदा पूर्वोक्तात् त्रैगुण्यादिपरमवृद्धिकालादूर्ध्वं दिनदशकमध्ये अमो-चित आधिरुत्तमर्णस्य स्वं भवतीति सिध्यति । यत्तु

न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः ।

इति कालसंरोधाच्चिरकालावस्थानादाधेर्न निसर्गो न धनिकेनान्यत्राधी-करणं न वा विक्रयणमित्याधेर्धनिकस्वत्वाभावप्रतिपादकं **मनुवचनं** (८. १४३) तदकृतावधिकभोग्याधिविषयम् । द्वैगुण्याद्यतिक्रमेऽवध्यति-क्रमे च चतुर्दशाहादिप्रतीक्षणानन्तरमाधेर्यद्धनिकस्वत्वमुक्तं तद्धनिकेन यदाधमर्णस्तदसंनिधौ तत्पुत्रादिर्वा तमर्थं ज्ञापयित्वा धनं याच्यते तदा भवति नान्यथा । अत एव **व्यासः**[1]

गोप्याधिर्द्विगुणादूर्ध्वं कृतकालस्तथावधेः ।
आवेदयित्वर्णिकुले भोक्तव्यस्तदनन्तरम् ॥ इति ।

यदि मूले परां वृद्धिं प्राप्ते चतुर्दशाहादिप्रतीक्षाकालमध्ये बन्धकमोच-नात्प्रागधमर्णो म्रियेत देशान्तरगतस्य तस्य जीवनवार्ता न श्रूयेत वा तत्पु-त्रादिश्च न स्यात्तदा यत्कर्तव्यं तदाह **बृहस्पतिः**

हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके ।
द्रव्यं तदीयं संगृह्य विक्रीणीत ससाक्षिकम् ॥

---

१ अस्य स्थाने 'अत एव' इति क-आदर्शे.

रक्षेद्वा कृतमूल्यं तु दशाहं जनसंसदि ।
ऋणानुरूपं परतो गृहीतान्यत्तु वर्जयेत् ॥

**हिरण्य**ग्रहणं वस्त्रादीनामप्युपलक्षणम् । **द्विगुणीभूते** इति त्रैगुण्यादीनामप्युपलक्षणम् । **नष्टे** कुत्रचिद्गते चिरमज्ञाते । **द्रव्यं** बन्धकीकृतं द्रव्यम् । **परतः** दशाहादूर्ध्वम् । **अन्यत्तु वर्जये**दित्यनेनावशिष्टसमर्पणमृणिबान्धवे तदभावे राजनि कर्तव्यमिति सूचितम् । अत एव **कात्यायनः** (५२९)

आधाता यत्र वै न स्याद्धनी बन्धं निवेदयेत् ।
राज्ञस्ततः स विज्ञातो विक्रेय इति धारणा ॥
सवृद्धिकं गृहीत्वा तु शेषं राजन्यथार्पयेत् ।

क्वचिद्द्रोप्याधेर्द्वैगुण्याद्यतिक्रमेप्यधमर्णस्वत्वं नापैतीत्याह **याज्ञवल्क्यः** ( २. ६१ )

चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम् ।
सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ।

**चरित्रं** शोभनाचारः[1] । तेन यद्बन्धकं तच्चरित्रबन्धकं तेन यद्द्रव्यमात्मसात्कृतं पराधीनं वा कृतं तच्चरित्रबन्धककृतम् । अयमर्थः । यदि धनिनः शोभनाचारतामवगत्याधमर्णेन बहुमूल्यं द्रव्यं बन्धकीकृत्याल्पमेव द्रव्यं गृहीतं यदि वाधमर्णस्य निर्दोषतामवगत्योत्तमर्णेनाल्पमूल्यं बन्धकं गृहीत्वा बहुधनं दत्तं तदा तद्धनं राजा सवृद्धिकं दापयेत् । न त्वाधिनाश इत्यर्थः । अथवा चरित्रं गङ्गास्नानाग्निहोत्रादिजनितमपूर्वं तद्बन्धकीकृत्य गृहीतं चरित्रबन्धककृतम् । **सत्यङ्कारकृतं** यदृणग्रहणसमये द्विगुणीभूतेपि धने मया धनमेव द्विगुणं दातव्यं न त्वयमाधिस्तवेति परिभाष्य गृहीतं धनम् । चरित्रबन्धकादिस्थले द्वैगुण्यादूर्ध्वमधमर्णेन नाधिनाशो भविष्यतीति बुद्ध्या न विलम्बः कार्य इत्याह **व्यासः**

---

१ 'शोभना वाचः' इति अ-क.

गोप्याधिं द्विगुणादूर्ध्वं मोचयेदधमर्णिकः । इति ।

अत्रैव विषयेऽधमर्णासंनिधाने धनिकेनाधिर्विक्रेतव्य इत्याह **याज्ञवल्क्यः** ( २. ६३ )

विना धारणकाद्वापि विक्रीणीत ससाक्षिकम् ।

अत्र **वा**शब्दो व्यवस्थितविकल्पार्थः । यदर्णदानकाले आधिनाशो नेति परिभाषितं तदायं पक्षः । इतरथा आधिः प्रणश्येद् द्विगुण इत्याधिनाश इत्युक्तं **विज्ञानेश्वराचार्यैः ।** यदि द्वैगुण्यापत्तिकालादवधिकालाद्वा प्राग्यदाकदाचिद्धनं दत्त्वाधिं मोचयितुमधमर्णः समायाति तदा तदैवाधिर्मोक्तव्यो न वृद्धिलोभेन स्थापनीयः । तथा च **बृहस्पतिः**

धनं मूलीकृतं दत्त्वा यदाधिं प्रार्थयेदृणी ।
तदैव तस्य मोक्तव्यस्त्वन्यथा दोषभाग्धनी ॥

भोग्याधौ वृद्धिपरिकल्पन[1]रहिते मूलमात्रं दत्त्वा गोप्याधौ सवृद्धिकं मूलं दत्त्वा यदाधिं प्रार्थयेतेत्यर्थः । **याज्ञवल्क्यो**ऽपि ( २. ६२ )

उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा भवेत् ।

धनिकस्यासंनिधाने तदाप्तहस्ते धनं दत्त्वाधिमधमर्णो गृह्णीयादित्याह **स** एव ( या. २. ६२ )

प्रयोजकेऽसति धनं कुलेऽन्यस्याधिमाप्नुयात् ।

**यदि** धनिकोऽपि न संनिहितस्तस्याप्तोऽपि कोऽपि न स्यादधमर्णस्य चाग्रिमवृद्धिप्रतिरोधायाधिविक्रयेण धनदित्सा भवति तदा तत्कालोचितं यदाधेर्मूल्यं तत्परिकल्प्य धनिकगृह एव तमाधिं स्थापयेत् । तथा च न तद्दिनमारभ्य तद्धनं वर्धेत इत्याह **स** एव ( या. २. ६३ )

तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः ।

**तिष्ठे**दाधिरिति शेषः । **तत्र** प्रयोक्तृकुले । एतच्चाधिमोचनं यदि भोग्याधिर्गोप्याधिश्चैतावन्तं कालं मया न मोचनीय इत्यधमर्णेन परि-

---

१ 'वृद्धिकल्पनरहिते' इति अ–क.

भाष्य स्थापितस्तदावधिकालात्प्राग्लोभेन न कर्तव्यम् । इदमेवाभिप्रेत्याह फलभोग्याधिविषये **व्यासः**

फलभोग्यं पूर्णकालं दत्त्वा द्रव्यं तु सामकम् । इति ।

ऋणी बन्धमवाप्नुयादित्यनुषङ्गः । मूलमात्रं दत्त्वा परिभाषितकालमापन्नं फलभोग्याधिमाप्नुयादित्यर्थः । **फलभोग्य**ग्रहणमाध्यन्तरोपलक्षणम् । **साम**कग्रहणं सवृद्धिकस्याप्युपलक्षणम् । कचिद्भोग्याधौ विशेषमाह **बृहस्पतिः**

क्षेत्रादिकं यदा भुक्तमुत्पन्नमधिकं ततः ।
मूलोदयं प्रविष्टं चेत्तदाधिं प्राप्नुयादृणी ॥
परिभाष्य यदा क्षेत्रं प्रदद्याद्धनिके[1] त्वृणी ।
त्वयैतच्छान्तलाभार्थे[2] भोक्तव्यमिति निश्चयः ॥
प्रविष्टे सोदये द्रव्ये प्रदातव्यं त्वया मम ॥ इति ।

**अधिकं** मूलापेक्षयाधिकं क्षेत्राद्यर्थव्ययद्रव्यम् । **ततः** तस्मात्क्षेत्रादेः । **उदयो** वृद्धिः । **शान्तलाभार्थे** परमवृद्धिसहिते मूलद्रव्ये । इयं निमित्ते सप्तमी । परमवृद्धिसहितं क्षेत्राद्यर्थव्ययद्रव्यसहितमेतन्मूलद्रव्यमस्मिन्क्षेत्र उपभोक्तव्यम्, उपभोगेन सवृद्धिके धने प्रविष्टे त्वयैतत्क्षेत्रं मोक्तव्यमिति परिभाष्य यदा क्षेत्रादिकं बन्धकीकुर्यात्तदा क्षेत्रादिफलभोगेन क्षेत्राद्यर्थव्ययसहिते सवृद्धिके धने प्रविष्टे ऋणी किमप्यदत्त्वा तमाधिं प्राप्नुयादित्यर्थः । एवंविधस्याधेः करणं (करणे ?) पूर्वगृहीते ऋणे कालक्रमेण परां वृद्धिं प्राप्ते सति तदनन्तरं यः सवृद्धिकमूलोपभोगार्थं क्षेत्रादिराधिः क्रियते स क्षेत्राद्यर्थव्ययसहितसवृद्धिकमूलोपभोगानन्तरं धनिकेनाधमर्णाय प्रत्यर्पणीयः । तथा च **याज्ञवल्क्यः** ( २. ६४ )

यदा तु द्विगुणीभूतमृणमाधौ तदा खलु ।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥

---

१ 'धनिकम्' इति अ. २ 'शान्तलभेऽर्थे' इति अ-ब.

**तदा** आधौ कृते इति शेषः। अयं च क्षयाधिरिति लोके व्यवह्रियते॥

अथ प्रतिभूभेदाः। तत्र **बृहस्पतिः**

दर्शने प्रत्यये दाने ऋणिद्रव्यार्पणे तथा।
चतुःप्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिः॥

**प्रत्ययो** विश्वासः। **दानं** गृहीतद्रव्यदानम्। **ऋणिद्रव्यार्पणं** ऋणिनो यद् द्रव्यं गृहोपकरणादि तस्यार्पणम्। एतेषां चतुर्णां प्रातिभाव्यस्वीकरणप्रकारमाह **स** एव

आहैको दर्शयामीति साधुरित्यपरोऽब्रवीत्।
दाताहमेतद् द्रविणमर्पयामीति चापरः॥

**एको** दर्शनप्रतिभूर्दर्शनापेक्षायामेनं दर्शयिष्यामीत्याह। **अपरः** प्रत्ययप्रतिभूरेष **साधुर्न** त्वां प्रतारयिष्यति यतोऽयं श्रोत्रियस्य पुत्रोऽस्य सर्वसस्यसम्पन्नो ग्रामोऽस्ति मत्प्रत्ययेनास्य धनं देहीति ब्रवीति। दानप्रतिभूर्यद्ययं न ददाति तदा सवृद्धिकमृणमहं दातेति वदति। **अपरः** ऋणिद्रव्यार्पणप्रतिभूर्यद्ययं न ददाति तदाहमेतदीयगृहोपकरणादिकमर्पयिष्यामीति कथयतीत्यर्थः। दर्शनप्रतिभूर्धनिकस्य धारणकदर्शनापेक्षायां तं दर्शयेदित्याह[1] **कात्यायनः** (५३ )

दर्शनप्रतिभूर्यस्तु देशे काले च दर्शयेत्।

दर्शिते धारणके स प्रातिभाव्यान्मोक्तव्य इत्याह **स** एव (कात्या. ५३२)

यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत्।

यो न दर्शयति तेन सवृद्धिकमृणं दातव्यमित्याह **स** एव (कात्या. ५३५)

यो यस्य प्रतिभूस्तिष्ठेद् दर्शनायेह मानवः।
अदर्शयन्स तत्तस्य प्रयच्छेत्स्वधनादृणम्॥

एतच्चाधमर्णान्वेषणार्थावधिकालातिक्रमे वेदितव्यम्। अन्वेषणार्थावधिकालश्च प्रतिभुवे दातव्यः। तथा च **कात्यायनः** (५३२–५३३)

नष्टस्यान्वेषणार्थं तु देयं पक्षत्रयं परम्।
यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत्॥

---

१ 'दर्शनप्रतिभुवं निदर्शति कात्यायनः' इति **अ–क.**

काले प्रतीते प्रतिभूर्यदि तं नैव दर्शयेत् ।
स तमर्थं प्रदाप्यः स्यात्प्रेते चैष विधिः स्मृतः ॥

**परं** परमावधिरूपम्। **प्रतीते** अन्वेषणार्थं परिकल्पिते देशनैकट्याद्यनुसारेण । दर्शनावधिकालभेदानाह **बृहस्पतिः**

नष्टस्यान्वेषणे कालं दद्यात्प्रतिभुवे धनी ।
देशानुरूपतः पक्षं मासं सार्धमथापि वा ॥

एतच्च दैवराजकृतप्रतिबन्धाभावे वेदितव्यम् । तथा च **कात्यायनः** (५३१)

दर्शनप्रतिभूर्यस्तं देशे काले न दर्शयेत् ।
निबन्धमावहेत्तत्र दैवराजकृतादृते ॥

**निबन्धमृणमावहेद्** दद्यात् । **दैवकृतं** दीर्घरोगबन्धुमरणादिकं **राजकृतं** बन्धनादिकम् । प्रत्ययप्रतिभूर्विश्वासव्यभिचारे ऋणं दद्याद् दानप्रतिभूस्तु धारणकेनर्णानपाकरणे ऋणं दद्यात् । तथा च **नारदः** (ऋ. ११९)

ऋणिष्वप्रतिकुर्वत्सु प्रत्यये वाथ हापिते ।
प्रतिभूस्तदृणं दद्यादनुपस्थापयंस्तदा ॥

ऋणिद्रव्यार्पणप्रतिभूरपि धारणकेनर्णानपाकरणे देयद्रव्यसमानं तद्गृहोपकरणादिकं दद्यात् । तथा च **बृहस्पतिः**

आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम् ।
उत्तरौ तु विसंवादे तौ विना तत्सुतौ तथा ॥

**आद्यौ** दर्शनप्रत्ययप्रतिभुवौ । **वितथे** अहमेनं दर्शयिष्याम्यसौ साधुरित्येवंरूपयोः स्वोक्तयोर्वाक्ययोरसत्यत्वे । **उत्तरौ** दानर्णिद्रव्यार्पणप्रतिभुवौ । **विसंवादे** लोभादिना धारणकेनाप्रतिदाने । **तौ विना** तयोर्दूरदेशगमने मरणे च । अत्र तौ विनेति द्विवचनान्तसर्वनाम्ना संनिहि-

१ 'परं परमावधि···नाह बृहस्पतिः' इति भागो नास्ति क-आदर्शे. २ 'दीर्घरोगमरणादिकम्' इति अ-क.

तयोः दानर्णिद्रव्यार्पणप्रतिभुवोः परामर्शाद्दर्शनप्रत्ययप्रतिभूसुतैर्न तद्देयमिति गम्यते । अत्रार्थे **याज्ञवल्क्यो**ऽपि ( २. ५३-५४ )

दर्शनप्रत्यये दाने प्रातिभाव्यं विधीयते ।
आद्यौ तु वितथे दाप्याावितरस्य सुता अपि ॥
दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा ।
न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय[1] यः स्थितः ॥

अत्र पूर्वश्लोकार्थ उत्तरश्लोकेन स्पष्टीक्रियत इति न पुनरुक्तिः। **तत्पुत्राः** तयोः पुत्राः । **दानाय यः स्थितः** दानप्रतिभूर्यस्तस्य पुत्रा दद्युरित्यर्थः । प्रतिभुवः पुत्रो मूलमात्रं दद्यान्न वृद्धिं, पौत्रस्तु मूलमपि न दद्यात् । तथा च **कात्यायनः** ( ५६१ )

प्रातिभाव्यागतं पौत्रैर्दातव्यं न तु तत् क्वचित् ।
पुत्रेणापि समं देयमृणं सर्वत्र पैतृकम् ।

**सर्वत्र** प्रातिभाव्यागतमृणमित्यन्वयः[2] । **व्यासो**ऽपि

ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं सुतः ।
समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चयः ॥

यत्तु

खादको वित्तहीनः स्याल्लग्नको वित्तवान्यदि ।
मूलं तस्य भवेद्देयं न वृद्धिं दातुमर्हति ॥

इति **नारद**वचनं (ऋ. ११६) तदपि लग्नको वित्तवान्यदि मृतस्तदा तत्पुत्रेण मूलमात्रं देयं न वृद्धिरित्येवंपरतया योज्यम् । क्वचिद्दर्शनप्रतिभूपुत्रस्य प्रत्ययप्रतिभूपुत्रस्य[3] च ऋणदातृत्वमाह **कात्यायनः** (५३४)

गृहीत्वा बन्धकं यत्र दर्शनेऽस्य स्थितो भवेत् ।
विना पित्रा धनात्तस्माद् दाप्यः स्यात्तदृणं सुतः ॥

---

१ 'दद्युर्दानाय···तस्य पुत्रा दद्युः' इत्येष भागो गलितः ब-आदर्शे. २ 'प्रातिभाव्यागतमित्यन्वयः' इति ब. ३ 'प्रत्ययप्रतिभूपुत्रस्य' इत्येतन्नास्ति अ-ब-आदर्शयोः.

**दर्शनग्रहणं** प्रत्ययस्याप्युपलक्षणं समानन्यायत्वात् । दर्शने प्रतिभूत्वेन स्थित इत्यर्थः । यत्रानेके प्रतिभुवस्तत्र विशेषमाह **याज्ञवल्क्यः** (२.५५)

बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ।
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ॥

**एकच्छायाश्रितेषु** एकस्याधमर्णस्य छायां धनदातृत्वलक्षणं सादृश्यमाश्रितेषु धारणकवत् प्रत्येकं कृत्स्नद्रव्यदानाय स्थितेष्वित्यर्थः । **धनिकस्य यथारुचि** यमेव धनिको याचते स एव सर्वं दद्यादित्यर्थः । एकच्छायप्रतिभूपुत्रे विशेषमाह **कात्यायनः** ( ५३८ )

एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते ।
प्रोषिते तु तत्सुतः सर्वं पित्रंशं तु मृते तु सः ॥

**प्रोषिते** देशान्तरं गते । **सर्वं** सवृद्धिकमृणम् । मृते तु पितुरंशं सवृद्धिकं दद्यादित्यर्थः । **स्मृतिचन्द्रिकायां** तु वाक्यमेवं पठितं—एकच्छायाश्रिते सर्वं दद्यात्तु प्रोषिते सुतः । मृते पितरि पित्रंशं परणं न बृहस्पतिः ॥ इति ( काता. ५३७ ) । **परणं** अन्येषां प्रतिभुवामंशम् । प्रतिभूभ्यो धनग्रहणे विशेषमाह **बृहस्पतिः**

नात्यन्तं पीडनीयाः स्युर्ऋणं दाप्याः शनैः शनैः ।

प्रतिभुवो दौष्ट्ये यत्कर्तव्यं तदाह **पितामहः**

योऽस्यैव प्रतिभूर्भूत्वा मिथ्या चैव तु गच्छति ।
धनिकस्य धनं दाप्यो राज्ञा दण्डं च तत्समम् ॥
कुर्याच्चेत्प्रतिभूर्वादमृणिकार्थेऽर्थिना सह ।
सोपसर्गस्तदा दण्ड्यो विवादाद् द्विगुणं धनम् ॥

ये प्रातिभाव्ये निषिद्धास्ते प्रत्याकलितनिरूपणे दर्शिताः । प्रतिभुवा धनिकाय यद्दत्तं तदधमर्णेन समं दातव्यम् ।

यस्यार्थे येन यद्दत्तं विधिनाभ्यर्थितेन तु ।
साक्षिभिर्भावितेनैव प्रतिभूस्तत्समाप्नुयात् ॥ (काता. ५४०)

**समाप्नुयात्** सममाप्नुयादित्यर्थः। **साक्षिभिर्भावितेन** साक्षिभिः साधितेन। एतच्च समदानं धनिकानिर्बन्धेन प्रतिभुवा स्वयं गत्वा दाने वेदितव्यम्। धनिकनिर्बन्धेन दाने त्वधमर्णेन तस्मै तद् द्विगुणं दातव्यम्। तथा च **नारदः**

यं चार्थं प्रतिभूर्दद्याद्धनिकेनोपपीडितः।
ऋणिकस्तं प्रतिभुवे द्विगुणं प्रतिदापयेत् ॥

**याज्ञवल्क्योऽ**पि (२. ५६)

प्रतिभूर्दापितो यत्तु प्रकाशं धनिनां धनम्।
द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत् ॥

**प्रकाशं** बहूनां पुरतः। **दापितो** राज्ञा न तु स्वयं गत्वा दत्तवानित्यर्थः। एतच्च द्विगुणदानं पक्षत्रयादूर्ध्वं वेदितव्यम्। तथा च **बृहस्पतिकात्यायनौ**

प्रातिभाव्यं च यो दद्यात्पीडितः प्रतिभावितः।
त्रिपक्षात्परतः सोऽर्थं द्विगुणं लब्धुमर्हति ॥ (कात्या.५३९)

**प्रातिभाव्यं** प्रातिभाव्यागतं धनम्। **प्रतिभावितः** प्रतिभूत्वेन कृतः। त्रिपक्षादूर्ध्वं द्वैगुण्यदानं हिरण्यविषयम। वस्त्रादीनि तु पूर्वोक्ततत्तत्परमवृद्धिसहितानि दातव्यानि। अत एव प्रतिभूदत्ते परमवृद्धिं दर्शयति **याज्ञवल्क्यः** (२. ५७)

सन्ततिः स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च।
वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणः स्मृतः ॥ इति ॥

दत्तस्वर्णस्य ग्रहणप्रकारमाह **बृहस्पतिः**

प्रतिपन्नमृणं दाप्यः सामादिभिरुपक्रमैः।
धर्मोपधिबलात्कारैर्गृहसंरोधनेन च ॥

**प्रतिपन्नं** संप्रतिपन्नम्। **दाप्यः** दातुमुन्मुखः कर्तव्यः। **उपक्रमैः** उपायैः। ते चोपाया विविच्य दर्शिता धर्मोपधीत्यादिना। **गृहसंरोध-**

---

१ 'समाप्नुयात्प्राप्नुयादित्यर्थः' इति अ–क.

**नेन** आचरिताख्योपायेन । धर्मादीनां चतुर्णामुपायानां स्वरूपं दर्शयति **स** एव

सुहृत्सम्बन्धिसन्दिष्टैः सामोक्त्यानुगमेन च ।
प्रायेण वा ऋणी दाप्यो धर्म एष उदाहृतः ॥
छद्मना याचितं चार्थमानीय ऋणिकाद्धनी ।
अन्वाहितादि संगृह्य दाप्यते यत्र सोपधिः ॥
बद्धा स्वगृहमानीय ताडनाद्यैरुपक्रमैः ।
ऋणिको दाप्यते यत्र बलात्कारः स कीर्तितः ॥
दारपुत्रपशून् बद्धा कृत्वा द्वारोपवेशनम् ।
यत्रर्णिको दाप्यतेऽर्थं तदाचरितमुच्यते ॥

**सुहृत्सम्बन्धिसन्दिष्टानि** मान्यजनवाक्यानि **सामोक्तिः** प्रियवाक्यम् । **अनुगमो**ऽनुसरणम् । **प्रायः** प्रार्थनाबाहुल्यम् । **छद्म** उत्सवादिव्याजः । **अन्वाहित**मन्यस्मै दातुमर्पितम् । **आदि**शब्दात्प्रकारान्तरस्यापि ग्रहणम् । येन केनापि प्रकारेणाधमर्णस्य धनं स्वाधीनीकृत्य यत्र स ऋणं दाप्यते स उपधिरित्यर्थः । धर्मादीनां प्रयोगे नियमसाह **कात्यायनः** ( ५८७-५८८ )

राजानं स्वामिनं विप्रं सान्त्वेनैव प्रदापयेत् ।
रिक्थिनं सुहृदं चापि छलेनैव प्रदापयेत् ॥
वणिजः कर्षकांश्चैव शिल्पिनश्चाब्रवीद्भृगुः ।
देशाचारेण दाप्याः स्युर्दुष्टान् संपीड्य दापयेत् ॥

**सान्त्वेन** साम्ना धर्माख्योपायेन । **रिक्थी** अत्र बान्धवः । वणिगादयो देशाचारेण दाप्याः स्युरित्यन्वयः । **संपीड्ये**ति बलात्काराचरितयोर्ग्रहणम् । देशाचारं दर्शयति **स** एव (कात्या. ५८०)

धार्योऽवरुद्धस्त्वृणिकः प्रकाशं जनसंसदि ।
यावन्न दद्यात्तद्देयं देशाचारस्थितिर्यथा ॥

**यथे**त्यनेन यस्मिन्देशे धनिकेन स्वयमेवावरुध्य धार्यते तत्र तथा

धार्यः, यत्र देशेऽधमर्णाद्वेतनार्थिना क्रूरेण पुरुषान्तरेणावरुध्य धार्यते तत्र तथा धार्य इति दर्शितम् । अवरोध्यस्य विण्मूत्रशङ्कायां तत्प्रतिरोधो न कार्य इत्याह स एव (कात्या. ५८१)

विण्मूत्रशङ्का यत्र स्याद्धार्यमाणस्य देहिनः ।
पृष्ठतो वानुगन्तव्यो निबद्धं वा समुत्सृजेत् ॥

**निबद्धमिति** शृङ्खलादिना बद्धमेव मूत्राद्युत्सर्गार्थं प्रेषयेदित्यर्थः । अत्र निकृष्टविषयो द्वितीयः पक्षः । अवरुद्धस्य भोजनादिकाले दर्शनप्रतिभुवं गृहीत्वा मोचनमाह स एव (कात्या. ५८२)

स कृतप्रतिभूश्चैव मोक्तव्यः स्याद्दिने दिने ।
आहारकाले रात्रौ च निबन्धे प्रतिभूः स्थितः ॥

**निबन्धे** पलायनप्रतिबन्धे । दर्शनप्रतिभुवोऽभावेऽधमर्णेन वा तस्यादाने प्रकारद्वयमाह स एव ( कात्या. ५८३ )

यो दर्शनप्रतिभुवं नाधिगच्छेन्न चाश्रयेत् ।
स चारके निरोद्धव्यः स्थाप्यो वावेद्य रक्षिणः ॥

**चारके** कारागृहे । रक्षिणो रक्षकान् । रक्षणे पुरुषान्नियुज्य प्रस्थाप्यो वेत्यर्थः । क्वचिदेतस्य प्रतिषेधमाह स एव ( कात्या. ५८४ )

न चारके निरोद्धव्य आर्यः प्रात्ययिकः शुचिः ।

**प्रात्ययिकः** विश्वास्यः । कथं तर्हि स मोचनीय इत्याकाङ्क्षायामाह स एव ( कात्या. ५८४ )

सोऽनिबन्धः प्रमोक्तव्यो निबद्धः शपथेन वा ।

**अनिबन्धः** रक्षकरहितः । अत्रार्यस्यावरोधविषये विशेषाभिधानं यद्यपि विप्रादौ धर्माद्युपायस्य[1] नियम उक्तस्तथापि क्वचिद्देशविशेषे विप्रादावुपायान्तरप्रयोगोस्तीति सूचनार्थम् । सावधिकमृणमवधिप्राप्तौ निरवधिकं द्वैगुण्यादिपरमवृद्धेः प्राप्तौ कार्यविशेषोपनिपातश्चेत्तस्याप्राप्तावप्येतैरुपायैः सवृद्धिकं ग्राह्यम् । अथवा परमवृद्धिसहितं धनं मूलं कृत्वा

१ 'धर्मायस्यायं नियम उक्तः' इति अ—क.

लेख्यान्तरं ग्राह्यम् । अथवा सवृद्धिकमूलोपभोगयोग्यक्षेत्रादिरूप आधि-र्ग्राह्यः । तथा च बृहस्पतिः

पूर्णावधौ शान्तलाभमृणमुद्राहयेद्धनी ।
कारयेद्वा ऋणी लेख्यं चक्रवृद्धिव्यवस्थया ॥
द्विगुणस्योपरि यदा चक्रवृद्धिः प्रगृह्यते ।
भोगलाभस्तथा तत्र मूलं स्यात्सोदयमृणम् ॥

**शान्तला**भग्रहणमशान्तलाभस्याप्युपलक्षणम् । **द्विगुण**स्येति त्रैगु-ण्यादिपरमवृद्धिमात्रोपलक्षणम् । यदा चक्रवृद्धिर्भोग्याधिर्वा गृह्यते तत्र सोदयं मूलमृणं स्यादित्यर्थः । यदि निर्धनोऽधमर्णस्तदा ग्रहणप्रकारमाह **नारदः** (ऋ. १३१)

अथ शक्तिविहीनः स्यादृणी कालविपर्ययात् ।
शक्त्यपेक्षमृणं दाप्यः काले काले यथोदयम् ॥

**यथोदयं** यथाधनोत्पत्ति । एतच्चोत्कृष्टजातिविषयम् । तथा च **मनुः** (८. १७७.)

कर्मणापि समं कुर्याद्धनिकस्याधमर्णिकः ।
समोऽपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः ॥

यत्तु

हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥

इति **याज्ञवल्क्य**वचने (२.४३) ब्राह्मणग्रहणं तदुत्कृष्टजातिवि-षयम् । यत्तु

कर्षकान्क्षत्रविट्शूद्रान् समहीनांस्तु दापयेत् ।

इति **कात्यायन**वचनं (५८६) तत्तेषां यथोदयं धनदानसामर्थ्ये वेदितव्यम् । उत्कृष्टजातिः शनैर्धनदानासामर्थ्येऽपि न कर्म[1] कारयितव्यः ।

धनदानासहं बुद्ध्वा स्वाधीनं कर्म कारयेत् ।
अशक्तौ बन्धनागारे प्रवेश्यो ब्राह्मणादृते ॥ इति

---

१ 'कर्म' इति नास्ति ब-आदर्शे; 'तत्कर्म' इति अ.

**कात्यायने**नैवाभिधानात् (४७९) । अत्र कर्मकरणाशक्तौ बन्धनागारप्रवेशनाभिधानं सामर्थ्योत्पत्तौ कथंचिदृणप्राप्त्यर्थमित्युक्तं **स्मृतिचन्द्रिकायाम्** । एतैर्धर्माद्युपायैः स्वीयं धनं साधयन्नुत्तमर्णो न राज्ञा निवारणीयः । तथा च **विष्णुः** (विष्णुधर्मसूत्र ६.१८)—प्रयुक्तमर्थं यथाकथंचित्साध्यमानो न राज्ञा वाच्यः स्यात्—इति । **यथाकथंचित्** स्मृतिदेशाचाराविरुद्धमार्गेण । **मनु**रपि (८.५०)

यः स्वकं साधयेदर्थमुत्तमर्णोऽधमर्णिकात् ।
स राज्ञा नाभियोक्तव्यः स्वकं संसाधयन् धनम् ॥

योऽधमर्णः संप्रतिपन्नमर्थं धर्मादिभिरुपायैर्याच्यमानो राजानं गत्वा धनिकमभियुञ्जीत स राज्ञा दण्डनीयः । तथा च **याज्ञवल्क्यः** (२.४०)

प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत् ।
साध्यमानो नृपं गच्छन्दण्डं दाप्यश्च तद्धनम् ॥

दण्डद्रव्यस्य परिमाणमुक्तं **विष्णुना** (विष्णुधर्मसूत्र६.१९)—साध्यमानश्चेद्राजानमभिगच्छेत्तत्समं दण्ड्यः—इति । **तत्सम**मृणद्रव्यसमम् ।

यत्तु

यः साधयन्तं छन्देन वेदयेद्धनिकं नृपे ।
स राज्ञर्णचतुर्भागं दाप्यस्तस्य च तद्धनम् ॥ इति

**मनूक्तो** (८. १७६) दण्डः स दरिद्राधमर्णविषयः । **छन्देन** स्वेच्छया । यद्यधमर्णो विप्रतिपद्येत तदा सभायां साक्ष्याद्युपन्यासेन स्वमर्थं साधयित्वा गृह्णीयात् । तथा च **बृहस्पतिः**

प्रतिपन्नस्य धर्मोयं व्यपलापी तु संसदि ।
लेख्येन साक्षिभिर्वापि भावयित्वा प्रदाप्यते ॥

एवं च

धर्मेण व्यवहारेण छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥ इति

**मनूक्तो** (८.४९) व्यवहारलक्षण उपायो विप्रतिपन्नविषय इति

ज्ञातव्यम् । व्यवहारः साक्ष्याद्युपन्यासः । संप्रतिपत्तिरहिते रोधनाद्युपायं निषेधति बृहस्पतिः

न रोद्धव्यः क्रियावादी सन्दिग्धेऽर्थे कथंचन ।
आसेधयंस्त्वनासेध्यं दण्ड्यो भवति धर्मतः ॥

रोधनं व्यवहारव्यतिरिक्तोपायस्योपलक्षणम् । **क्रियावादि-सन्दिग्धपदयोरर्थं** विवृणोति स एव

प्रदातव्यं यद्भवति न्यायतस्तद्ददाम्यहम् ।
एवं यत्रर्णिको ब्रूते क्रियावादी स उच्यते ॥
रूपसंख्यादिलाभेषु यत्र भ्रान्तिर्द्वयोर्भवेत् ।
देयानादेययोर्वापि सन्दिग्धोऽर्थः स कीर्तितः ॥

विप्रतिपन्नेऽर्थे बलात्कारं कुर्वतो दण्डमर्थहानिं चाह **कात्यायनः** (५८९)

पीडयेत्तु धनी यत्र ऋणिकं न्यायवादिनम् ।
तस्मादर्थात्स हीयेत तत्समं चाप्नुयाद्दमम् ॥

**बृहस्पतिर**पि[1]

अनावेद्य तु राज्ञे यः सन्दिग्धेऽर्थे प्रवर्तते ।
प्रसह्य स विनेयः स्यात्स चाप्यर्थो न सिध्यति ॥

आवेदितेन राज्ञा धनिकसाधितस्याप्यर्थस्यर्णिकेनादाने यत्कर्तव्यं तदाह **यमः**

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्याद्गृहीत्वा द्विगुणं ततः ॥

द्विगुणग्रहणं वृद्धिसहितमूलोपलक्षणम् । उत्तमर्णेन साक्ष्यादिभिः साधितमृणं दापितवतो राज्ञोऽधमर्णाद्दण्डग्रहणमुत्तमर्णाद्भृतिग्रहणं चाह **विष्णुः** ( विष्णुधर्मसूत्र ६. २०-२१ )—उत्तमर्णश्चेद्राजानमियात्ततस्तद्विभाविते ऽर्थेऽधमर्णो राज्ञे धनदशभागसमं दण्डं दद्यात् प्राप्तार्थश्चोत्तमर्णो

---

१ 'बृहस्पतिनापि' इति क.

विंशतितममंशम्—इति । **तद्विभाविते** उत्तमर्णेन साधिते सति । **याज्ञवल्क्यो**ऽपि (२. ४२)

राज्ञाधमर्णिको दाप्यः साधिताद्दशकं शतम् ।
पञ्चकं च शतं दाप्यः प्राप्तार्थोप्युत्तमर्णिकः ॥

अधमर्णात्साधितार्थस्य दशमो योंशस्तावद् द्रव्यं दण्डतया गृह्णीयात्, उत्तमर्णात्तु साधितार्थस्य विंशतितममंशं भृतितया गृह्णीयादित्यर्थः । यत्तु

यो यावन्निह्नुवीतार्थं मिथ्या यावति वा वदेत् ।
तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्द्विगुणं दमम् ॥

इति **मनुवचनं** (८.५९) तद्बहुधनातिदुर्वृत्ताधमर्णोत्तमर्णविषयम् । **यावन्निह्नुवीत** यावन्तमपलपेत् । **यावति मिथ्या वदेत्** मयैतावद्दत्तमित्यसत्यं वदेत् तावुभावपि तावतो धनस्य द्विगुणं धनं दण्ड्यावित्यर्थः ।

यत्तु

निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् ।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत् ॥ इति

**याज्ञवल्क्यवचने** (२.११) अपलपितुः समदण्डाभिधानं तद् द्विगुणदण्डादानापर्याप्तधनदुर्वृत्ताधमर्णविषयम् । पूर्वोदाहृतवचनविरोधापत्तेः । **अभियोगात्** अभियुक्तधनात् ।

मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत् ।
कारणे विधिरेष स्याज्जितस्यैकतरस्य तु ॥
प्राङ्न्यायवादे च तथा यच्चासत्येन युज्यते । इति

**व्यासवचन**विरोधापत्तेश्च । **कारणे** कारणोत्तरे । **असत्येन** मिथ्योत्तरेण । प्रत्यवस्कन्दने प्राङ्न्याये मिथ्योत्तरे च वादिप्रतिवादिनोर्मध्ये यस्यैकतरस्य पराजयस्तस्याभियुक्तधनाद् द्विगुणो दण्ड इत्यर्थः । यत्तु **विज्ञानेश्वराचार्यै**र्मिथ्योत्तरेऽपह्नोतुः पराजये समो दण्डो मिथ्याभियोक्तुर्द्विगुणो दण्डः, एवं प्राङ्न्याये प्रत्यवस्कन्दने चार्थिनोऽपह्नववादित्वा-

त्प्रत्यर्थिना प्राङ्न्यायकारणसाधने प्रकृतधनसम एव दण्डः, यदि प्रत्यर्थी प्राङ्न्यायकारणे न साधयति तदा स मिथ्याभियोग्येवेति तस्य द्विगुणो दण्ड इत्युक्तं तदेतद् व्यासवचनविरुद्धत्वान्नादरणीयम् । यत्पुनर्मनु-नोक्तं (८.५१)

अर्थेऽपव्ययमानं तु कारणेन (करणेन?) विभावितम् ।
दापयेद्धनिकस्यार्थं दण्डलेशं च शक्तितः ॥ इति

तद्दशमांशदानासमर्थसद्वृत्ताधमर्णविषयम् । **अपव्ययमान**मपलप-न्तम् । यस्तु प्रभुत्वाद्यवलेपादुत्तमर्णेन याचितस्तदाऽसंप्रतिपद्य राजसभा-यामानीतः स्वयमेव संप्रतिपद्यते सोभियुक्तार्थस्य विंशतितममंशं दण्ड-नीयः । तथा च **नारदः** (ऋ. १३२)

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्याद्गृहीत्वांशं तु विंशकम् ॥

**मनुरपि** (८. १३९)

ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति ।
अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम् ॥

अस्यार्थः । यः पूर्वमप्रतिपद्य राजसभायामानीतोऽधमर्ण ऋणं देय-तया प्रतिजानीते सत्यमस्मै धारयामीति स पञ्चकं शतमर्हति दातुमिति शेषः । यस्तु सभायामप्यपह्नुते नाहमस्मै धारयामीति पश्चाच्च संप्रतिपद्यते स तद्द्विगुणं प्रतिपादितपञ्चकाद् द्विगुणं दशकं शतं दण्डमर्हतीति । बहूनामुत्तमर्णानां युगपत्प्राप्तौ येन क्रमेण राज्ञाधमर्णो दापयितव्यस्तमाह **याज्ञवल्क्यः** (२.४१)

गृहीतानुक्रमाद् दाप्यो धनिनामधमर्णिकः ।
दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम् ॥

**नृपतेः** क्षत्रियस्य । समानजातीयेषूत्तमर्णेषु येन क्रमेण धनग्रहणं तेनैव दापनं विजातीयेषु ब्राह्मणादिवर्णक्रमेणेत्यर्थः । **कात्यायनोपि** (५१४)

नानर्णसमवाये तु यद्यत्पूर्वकृतं भवेत् ।
तत्तदेवाग्रतो देयं राज्ञः स्याच्छ्रोत्रियानु च ॥

**श्रोत्रियानु** ब्राह्मणानन्तरम् । एकस्मिन्दिने यैर्ऋणं दत्तं तेषामुत्तमर्णानां युगपत्प्राप्तौ युगपद्दापनीयं धनाल्पत्वभूयस्त्वयोस्तु तदनुसारेण भागं परिकल्प्य दापनीयम् । तथा च **स** एव ( कात्या. ५१३ )

एकाहे लिखितं यत्र तत्र कुर्यादृणं समम् ।
ग्रहणं रक्षणं लाभमन्यथा तु यथाक्रमम् ॥

**ग्रहणं** बन्धकदानं **रक्षणं** बन्धकपरिपालनं **लाभं** बन्धकभोगं च **समं** युगपदेव कुर्यात् । **अन्यथा** अहर्भेदे तूक्तक्रमेण कुर्यादित्यर्थः । नानर्णसमवायेप्यधमर्णो यस्योत्तमर्णस्य धनेन यद्वस्तु सम्पादयति तद्विक्रयादिप्राप्तं धनं तस्मा एवर्णापाकरणार्थं दद्यान्न सर्वेभ्योपि विभज्य । तथा चोक्तं **तेनैव** ( कात्या. ५१५ )

यस्य द्रव्येण यत्पण्यं साधितं यो विभावयेत् ।
तद् द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा ॥

**पण्य**ग्रहणमुपलक्षणम् । एवकारो भिन्नक्रमः । ऋणिकस्यावश्यकं प्रतिदानकालकर्तव्यमाह **बृहस्पतिः**

याचमानाय दातव्यमप्रकालमृणं कृतम् ।
पूर्णावधौ शान्तलाभमभावे तु पितुः सुतैः ॥

**अप्रकाल**मदीर्घकालं निरवधिकमिति यावत् । निरवधिकं याच्ञानन्तरं परमवृद्धौ जातायां च सावधिकमवधिपूर्तौ दातव्यमेव न स्थापनीयमित्यर्थः । याचनादेः प्रागपि सति सम्भवे प्रतिदानं कार्यमृणस्यावश्यापाकरणीयत्वात् । निर्धनस्यर्णप्रतिदानप्रकारमाह **मनुः** ( ८.१५४ )

ऋणं दातुमशक्तो यः कर्तुमिच्छेत्पुनः क्रियाम् ।
स दत्त्वा निर्जितां वृद्धिं करणं परिवर्तयेत् ॥

**यो** धनाभाववशात्सवृद्धिक**मृणं दातुमशक्तो** दीर्घकालत्वपरिहारेण धनिकमनःसमाधानं कर्तुं लेख्यादिरूपां **क्रियां पुन**श्चिकीर्षेत् स

निष्पन्नां वृद्धिं दत्त्वा पुनस्तत्कालादिचिह्नितां क्रियां कुर्यादित्यर्थः। यस्तु समग्रां वृद्धिमपि दातुमसमर्थस्तं प्रत्याह स एव (मनुः ८.१५५)

अदर्शयित्वा तत्रैव हिरण्यं परिवर्तयेत्।
यावती सम्भवेद्वृद्धिस्तावतीं दातुमर्हति॥

**हिरण्यमदर्शयित्वा** निष्पन्नां वृद्धिमदत्त्वा। **तत्रैव** पूर्वकृतलेख्य एव। **परिवर्तयेत्** तां वृद्धिं मूलत्वेन लिखेत्। तस्यास्तु यावती वृद्धि-र्दातुमशक्या[1] तावत्येव लेख्या न मूलधनवृद्धितुल्येत्यर्थः। यस्तु वृद्धौ किंचिद्दातुं शक्तः स तावद् दत्त्वाऽवशिष्टवृद्धिं मूलत्वेन लिखेत् समान-न्यायत्वात्। यस्तु ऋणप्रतिदानकाले समग्रं सवृद्धिकं मूलं दातुमसमर्थस्तं प्रत्याह **याज्ञवल्क्यः** (२.९३)

लेख्यस्य पृष्ठेऽभिलिखेद् दत्त्वा दत्त्वर्णिको धनम्।
धनी चोपगतं दद्यात्स्वहस्तपरिचिह्नितम्॥

अधमर्णो यथाशक्तया(क्त्य?)ल्पं दत्त्वा दत्त्वा एतावत्सवृद्धिकं मया दत्तमिति मूलपत्रस्य पृष्ठे लिखेत्। अथवोत्तमर्ण एतावन्मया लब्धमिति स्वहस्ताक्षरचिह्नितं यथा भवति तथा मूलपत्रे लिखेत् स्वहस्तलिखितमुप-गताख्यं प्रवेशपत्रं वाधमर्णाय दद्यादित्यर्थः। एतच्च प्रवेशपत्रदानं मूल-पत्रासन्निधाने वेदितव्यम्। तथा च **विष्णुः** (विष्णुधर्मसूत्र ६.२६)— असमग्रदाने लेख्यासन्निधाने वोत्तमर्णः स्वहस्तलिखितं दद्यात्-इति। प्रवेशपत्रादाने दोषमाह **नारदः** (ऋ. ११४)

गृहीत्वोपगतं दद्यादृणिकायोदयं धनी।
अददद्याच्यमानस्तु शेषहानिमवाप्नुयात्॥

**उदयमृ**णिकदत्तं धनम्। उदयं गृहीत्वेत्यन्वयः[2]। एतच्च[3] हान्यभिधानं शेषस्य स्वल्पत्वे ज्ञातव्यं बाहुल्ये तूत्तमर्णस्य गृहीतांशवृद्धिदानमेव। अत एव **बृहस्पतिः**

---

१ 'वृद्धिर्दातुं शक्या' इति अ–ब. २ 'गृहीत्वेत्यर्थः' इति ब. ३ 'एतच्छेषहान्य-भिधानं' इति ब.

धर्मादिनोद्ग्राह्य ऋणं यस्तूपरि न लेखयेत् ।
न चैवोपगतं दद्यात्तस्य तद्वृद्धिमाप्नुयात् ॥

**उद्ग्राह्य** गृहीत्वा । **ऋण**मसमग्रमिति शेषः । समग्रर्णप्रतिदानानन्तरं कर्तव्यमाह **याज्ञवल्क्यः** (२.९४)

दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै चान्यत्तु कारयेत् ।

**लेख्यं** मूलपत्रम् । **शुद्ध्यै** ऋणापाकरणख्यापनार्थ**मन्यद्** विशुद्धिपत्रं चोत्तमर्णाद्गृह्णीयादित्यर्थः । मूलपत्रस्य देशान्तरावस्थानादौ विशुद्धिपत्रस्यापि कथंचिदसम्भवे पक्षान्तरमाह **नारदः** (ऋ. ११६)

लेख्यं दद्याद्विशुद्धेर्णे (द्धर्णे?)तदभावे प्रतिश्रवः ।
धनिकर्णिकयोरेवं विशुद्धिः स्यात्परस्परम् ॥

**प्रतिश्रवः** प्रतिदानं कृतमित्यस्यार्थस्य साक्षिभिः श्रावणम् । ससाक्षिकर्णप्रतिदानं तु पूर्वसाक्षिसमक्षमेव कर्तव्यं तेषां कथंचिदसम्भवे साक्ष्यन्तरसमक्षं वा कर्तव्यम् । तथा च **याज्ञवल्क्यः** (२.९४)

साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकम् ।

ऋणाप्रतिदानेऽनिष्टमाह **कात्यायनः** (५९१)

उद्धारादिकमादाय स्वामिने न ददाति यः ।
स तस्य दासो भृत्यः स्त्री पशुर्वा जायते गृहे ॥

**उद्धारादिक**मित्यादिशब्देन निक्षेपादिकं गृह्यते । **दासः** क्रीतः **भृत्यो** वैतनिक इति तयोर्भेदः । **नारदो**ऽपि (ऋ. ७-८)

याच्यमानं न दद्याद्यदृणं वापि प्रतिग्रहम् ।
तद्द्रव्यं वर्धते तावद्यावत्कोटिशतं भवेत् ॥
ततः कोटिशते पूर्णे वेष्टितस्तेन कर्मणा ।
अश्वः खरो वृषो दासो भवेज्जन्मनि जन्मनि ॥

**प्रतिग्रहः** प्रतिश्रुतं धनम् । **व्यासो**ऽपि

तपस्वी चाग्निहोत्री च ऋणवान् म्रियते यदि ।
तपश्चैवाग्निहोत्रं च सर्वं तद्धनिनो भवेत् ॥

अधमर्णस्याभावे तत्पुत्रेण सवृद्धिकमृणं देयम् । तथा च **बृहस्पतिः**

याचमानाय दातव्यमप्रकालमृणं कृतम् ।
पूर्णावधौ शान्तलाभमभावे च पितुः सुतैः ॥

अस्यार्थः प्राङ् निरूपितः । **स** एव

ऋणमात्मीयवत्पित्र्यं पुत्रैर्देयं विभावितम् ।
पैतामहं समं देयं न देयं तत्सुतस्य च ॥

**आत्मीयवत्** सवृद्धिकमित्यर्थः । पितृकृतर्णप्रदानस्यावश्यकतामाह **नारदः** (ऋ. ५)

इच्छन्ति पितरः पुत्रान्स्वार्थहेतोर्यतस्ततः ।
उत्तमर्णाधमर्णाभ्यां मामयं मोचयिष्यति ॥
अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः ।
ऋणात्पिता मोचनीयो यथा न नरकं व्रजेत् ॥

**यतस्ततः** येन केनाप्युपायेन । **उत्तममृणं** जायमानो वै ब्राह्मण-स्त्रिभिर्ऋणवा जायते—इत्यादि तैत्तिरीयश्रुत्युक्तं (तै. सं. ६. ३. १०. ५) पितृऋणम् । **अधममृणं** वृद्ध्या गृहीतं धनम् । **जातेन** व्यवहाराभि-ज्ञतया निष्पन्नेन । **कात्यायनो**ऽपि (५५१-५२)

पितॄणां सूनुभिर्जातैर्दानेनैवाधमादृणात् ।
विमोक्षस्तु यतस्तस्मादिच्छन्ति पितरः सुतान् ॥
नाप्राप्तव्यवहारैस्तु पितर्युपरते क्वचित् ।
काले तु विधिना देयं वसेयुर्नरकेऽन्यथा ॥

**प्राप्तव्यवहारैः** हेयोपादेयपरिज्ञानविशेषसहितैः षोडशवर्षैरित्यर्थः । षोडशवर्षस्य व्यवहाराभिज्ञतामाह **नारदः** (ऋ. ३५-३६)

गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः ।
बाल आ षोडशाद्वर्षात्पोगण्डश्चेति शब्द्यते ॥
परतो व्यवहारज्ञः स्वतन्त्रः पितुरा मृतेः ।

---

१ 'नाप्राप्तव्यवहारैः' अ-ब.

मृतपितृकस्य बाल्ये स्वातन्त्र्ये सत्यपि नर्णदानेऽधिकारः किन्तु प्राप्तव्यवहारस्यैवेत्युक्तं तेनैव

अप्राप्तव्यवहारः सन् स्वतन्त्रोऽपि हि नर्णभाक् ।
स्वातन्त्र्यं हि स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतम् ॥

पितुः प्रवासे अचिकित्स्यरोगाद्यभिभवे च पितृकृतर्णप्रतिदानमाह **याज्ञवल्क्यः** ( २. ५० )

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा ।
पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ॥

**प्रोषिते** यत्प्रतिदानं तत्प्रवासादारभ्य विंशतेः संवत्सराणामूर्ध्वं वेदितव्यम् । तथा च **नारदः** ( ऋ. १४ )

नार्वाक् संवत्सराद्विंशात्पितरि प्रोषिते सुतः ।
ऋणं दद्यात्पितृव्ये वा ज्येष्ठे भ्रातर्यथापि वा ॥

**कात्यायनोऽपि** ( ५४८ )

विद्यमानेऽपि रोगार्ते स्वदेशात्प्रोषिते तथा ।
विंशात्संवत्सरादेयमृणं पितृकृतं तथा ॥

**विद्यमानेऽपि** जीवत्यपि । **विंशात्संवत्सरात्** ऊर्ध्वमिति शेषः । अत एव **विष्णुः** ( विष्णुधर्मसूत्र ६. २७ )—धनग्राहिणि प्रेते प्रव्रजिते द्विदशाः समाः प्रोषिते वा तत्पुत्रपौत्रैर्धनं देयं चातः परमनीप्सुभिः—इति । **प्रव्रजिते** संन्यस्ते **द्विदशाः समाः** विंशतिं वर्षाणि । अस्य **प्रोषिते** इत्यनेन सम्बन्धः । **अतः परं** विंशतिवर्षादूर्ध्वम् । **अनीप्सुभिश्च देय**मित्यन्वयः । यस्य तु बहवः पुत्रास्ते यदि विभक्तास्तदा स्वांशानुरूपमृणं दद्युः । यद्यविभक्तास्तदा तेषां समप्रधानतयावस्थाने सम्भूयसमुत्थानेन दानं गुणप्रधानभावेनावस्थाने यो मुख्यः स दद्यात् । तथा च **नारदः** ( ऋ. २ )

पितर्युपरते पुत्रा ऋणं दद्युर्यथांशतः ।
**विभक्ता अविभक्ता वा यो वा तामुद्वहेद्धुरम् ॥**

पुत्राभावे पौत्रेण रिक्थाग्राहिणा वृद्धिरहितं धनं दातव्यं रिक्थग्रहणे तु सवृद्धिकमेव[1] दातव्यम्। पुत्रेण रिक्थग्रहणे तदभावे वा सवृद्धिकमेव देयम्। प्रपौत्रेण[2] तु रिक्थग्रहणाभावे मूलमपि न देयम्—ऋणमात्मीयवत्पित्र्यमिति पूर्वोदाहृतबृहस्पतिवचनात्। रिक्थग्रहणाभावेऽपि पुत्रस्यर्णप्रतिदानमाह **कात्यायनः** (५५९)

> पित्र्र्णे विद्यमाने तु न च पुत्रो धनं हरेत्।
> देयं तद्धनिके द्रव्यं मृते पुत्रस्तु दाप्यते॥

**धनं** पितृधनम्। विभक्तः पुत्रो विभागानन्तरं पित्रा कृते ऋणे तिष्ठति तस्मिन् मृते च तद्धनं न गृह्णीयात्। किन्तूत्तमर्णाय दद्यात्। यदि किंचित्ततोवशिष्टं भवति तर्हि गृह्णीयात्। पितृधनाभावे रिक्थग्रहणरहितोऽपि स्वधनं दद्यादित्यर्थः। अत्र पुत्रग्रहणं पौत्रस्याप्युपलक्षणम्। पुत्रपौत्रैर्ऋणं देयमिति (या.२.५०) **याज्ञवल्क्येनो**भयोः साम्येन ग्रहणात्। पौत्रस्यावृद्धिकदानं तु वाचनिकमितरस्यानेन साम्यपाठेन निवृत्तिः। पुत्रेण पितृकृतस्वकीयर्णसमवाये पितृकृतं प्राग्देयं पौत्रेण तु पितृकृतपितामहकृतस्वकृतर्णसमवाये पितामहकृतमृणं प्राग्देयम्। तथा च **बृहस्पतिः**

> पित्र्यमेवाग्रतो देयं पश्चादात्मीयमेव च।
> तयोः पैतामहं पूर्वं देयमेवं[3] ऋणं सदा॥

पुत्रपौत्रैरदेयमृणं दर्शयति **याज्ञवल्क्यः** (२.४७)

> सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम्।
> वृथादानं तथैवेह पुत्रो दद्यान्न पैतृकम्॥

**सुराकामद्यूतकृतं** सुरापानस्त्रीव्यसनद्यूतपराजयकृतम्। **दण्डशुल्कावशिष्टकं** दण्डशुल्कयोरवशिष्टम्। **वृथादानं** धूर्तवन्द्यादिभ्यो यत्प्रतिश्रुतं

> धूर्ते वन्दिनि मल्ले च कुवैद्ये कितवे शठे।
> चाटचारणचोरेषु दत्तं भवति निष्फलम्॥

---

१ 'सवृद्धिकं दातव्यम्' इति क. २ 'पौत्रेण' इति अ. ३ 'देयमेवमृणं सदा' इति ब.

इति वचनात्। **बृहस्पतिरपि**

सौराक्षिकं वृथादानं कामक्रोधप्रतिश्रुतम्।
प्रातिभाव्यं दण्डशुल्कशेषं पुत्रं न[1] दापयेत्॥

**सौरं** सुरापानार्थम्। कामक्रोधप्रतिश्रुतयोः स्वरूपं दर्शितं **कात्यायनेन (५६४–५६५)**

लिखितं मुक्तकं वापि देयं यत्तु प्रतिश्रुतम्।
परपूर्वस्त्रियै तत्तु विद्यात्कामकृतं नृणाम्[2]॥
यत्र हिंसां समुत्पाद्य क्रोधाद् द्रव्यं विनाश्य वा।
उक्तं तुष्टिकरं यत्तु विद्यात्क्रोधकृतं तु तत्॥ इति।

**मुक्तकं** लेखनरहितम्। **प्रातिभाव्यं** दर्शनप्रातिभाव्यागतम्। कृत्स्नयोरपि दण्डशुल्कयोरदेयत्वमाहो**शना**

दण्डं वा दण्डशेषं वा शुल्कं तच्छेषमेव वा।
न दातव्यं तु पुत्रेण यच्च न व्यावहारिकम्॥

**व्यावहारिकं** (न व्यावहारिकं ?) सुरापानादिनिमित्तकमित्यर्थः। बहूनामृणप्रतिदानाधिकारिणां समवाये क्रममाह **याज्ञवल्क्यः (२. ५१)**

रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च।
पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः॥

दायविभागक्रमेण प्राप्तं यद्द्रव्यं तद्रिक्थं तद्यो गृह्णाति स **रिक्थग्राहः**। योषितं परस्त्रियं यो रागादिवशाद्भार्यात्वेनाङ्गीकरोति स **योषिद्ग्राहः**। **पुत्रोऽनन्याश्रितद्रव्यः** अन्यमाश्रितमन्याश्रितं, एतादृशं यद्द्रव्यं परकीयं द्रव्यं मातापितृसम्बन्धिद्रव्यमिति यावत्। पित्रोरत्रान्यशब्देन विवक्षणात्। तन्मातापितृद्रव्यं यस्य नास्ति दायग्रहणायोग्यत्वात्स क्लीबादिः पुत्रोऽनन्याश्रितद्रव्य इत्यर्थः। **पुत्रहीनस्य** दायग्रह-

१ 'पुत्रं च दापयेत्' इति अ. २ 'कामकृतमृणम्' इति क; अत आरभ्य 'तदनादरेण रिक्थग्राह' इत्यन्तो भागो गलितो ब–आदर्शे.

णार्हपुत्रहीनस्य **रिक्थिनः** । ऋणं रिक्थग्राहो दाप्यस्तदभावे योषिद्ग्राहस्तदभावे दायानर्हः पुत्र इत्यर्थः । पाठक्रमस्यात्राश्रितत्वात् । क्लीबादेर्दायग्रहणानर्हत्वमुक्तं **मनुना** ( ९. २०१ )

अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा ।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥

यत्तु **विष्णु**वचनं ( विष्णुधर्मसूत्र ६.२९ )—सपुत्रस्य वाप्यपुत्रस्य रिक्थग्राही ऋणं दद्यात्—इति तद्दायानर्हपुत्रस्य सद्भावेऽप्यसद्भावेपि वा तदनादरेण रिक्थग्राह ऋणं दद्यादित्येवंपरम् । रिक्थग्राहाभावे योषिद्ग्राहो दापनीय इत्यत्रार्थे **विष्णु**रपि ( विष्णुधर्मसूत्र ६.३० )—विधनस्य स्त्रीग्राही इति । **विधनस्य** रिक्थहारिरहितस्य । **बृहस्पति**रपि

स्त्रीहारी च तथैव स्यादभावे धनहारिणः ।

योषिद्ग्राहाभावे दायभागानर्हः पुत्रो दाप्य इत्यत्र **नारदो**ऽपि ( ऋ. २३ )

धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत् ।
पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः ॥

**स्त्रीधनिनोः** स्त्री च धनं च स्त्रीधने तद्वतोः स्त्रीहारिधनहारिणोरित्यर्थः । अत्र **स्त्रीहारी धनिपुत्रयो**रिति पुत्राभावे योषिद्ग्राहस्य ऋणदायित्वाभिधानं दायार्हपुत्राभावे वेदितव्यम् । सपुत्रस्य चेत्यनुवृत्तौ—विधनस्य स्त्रीहारी-इति **विष्णु**नाभिधानात् ( विष्णुधर्मसूत्र ६. ३० ) । **पुत्रोऽसतोः** स्त्रीधनिनोरिति स्वोक्तिविरोधापत्तेश्च । दायार्हे पुत्रे सत्यपि तस्य यदा दुश्चिकित्स्यरोगाद्युपद्रवेण बाल्येन वा ऋणदानासामर्थ्यं तस्यामवस्थायां तत्पितृधनं स्वसमीपे स्थापयति यः पितृव्यादिः स ऋणं दद्यात्तस्याभावे योषिद्ग्राहो दद्यादित्याह **कात्यायनः** ( ५५७,५७६ )

ऋणं तु दापयेत्पुत्रं यदि स्यान्निरुपद्रवः ।
द्रविणार्हश्च धुर्यश्च नान्यथा दापयेत्सुतम् ॥
व्यसनाभिप्लुते पुत्रे बाले वा यत्प्रदृश्यते ।
द्रव्यहृद् दापयेत्तं तु (दाप्यते तत्र?) तस्याभावे पुरन्ध्रिहृत् ॥

दायभागानर्हस्यापि भूयिष्ठधनवत्त्वे योषिद्ग्राहो न दद्यादित्याह **स** **एव** ( कात्या. ५७७ )

पूर्वं दद्याद्धनग्राहः पुत्रस्तस्मादनन्तरम् ।
योषिद्ग्राहः सुताभावे पुत्रे चात्यन्तनिर्धने ॥

पूर्वं रिक्थग्राहो दद्यात्तदभावे बहुतरधनयुक्तो दायानर्हः पुत्रो दद्यात् । तस्याभावे योषिद्ग्राहो दद्यादित्यर्थः । कीदृशस्य योषिद्ग्राहस्यर्णदानेऽधिकार इत्यपेक्षायामाह **नारदः** (ऋ.२१ )

या तु सप्रधनैव स्त्री सापत्या वान्यमाश्रयेत् ।
सोऽस्या दद्यादृणं भर्तुरुत्सृजेद्वा तथैव ताम् ।

**सप्रधना** प्रकृष्टधनसहिता । अस्या भर्तुर्ऋणं दद्यादित्यन्वयः । **स** **एव** (नारद, ऋ.२२ )

अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम् ।
ऋणं तयोः पतिकृतं दद्याद्यस्ते समश्नुते ॥
अधनस्याप्यपुत्रस्य मृतस्योपैति यः स्त्रियम् ।
ऋणं वोढुः स भजते तदेवास्य धनं स्मृतम् ॥

चतसृणां स्वैरिणीनां यान्तिमा तिसृणां पुनर्भुवां या प्रथमा तयोः पत्या कृतमृणं ते यः समश्नुते पतित्वेनोपभुङ्क्ते स दद्यादित्यर्थः । **उपैति** पतित्वेनोपभुङ्क्ते । पुनर्भ्वः स्वैरिण्यश्च प्रदर्शितास्तेनैव (नारद, स्त्रीपुंस. ४५–५२ )

परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् ।
पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा ॥
कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।
पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा ॥
देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते ।
उत्पन्नसाहसान्यस्मै सा द्वितीया प्रकीर्तिता ॥
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते ।
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्तिता ॥

स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति ।
कामात्समाश्रयेदन्यं स्वैरिणी प्रथमा तु सा ॥
कौमारं पतिमुत्सृज्य या त्वन्यं पतिमाश्रिता ।
पुनः पत्युर्गृहं यायात्सा द्वितीया प्रकीर्तिता ॥
मृते भर्तरि तु प्राप्ता देवरादीनपास्य या ।
उपगच्छेत्परं कामात्सा तृतीया प्रकीर्तिता ॥
प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या ।
तवाहमित्युपगता सा चतुर्थी प्रकीर्तिता ॥ इति ।

**उत्पन्नसाहसा** क्षतयोनिः प्रौढेति यावत् । **अन्यस्मै** देवराय असत्सु देवरेष्वित्युत्तरत्राभिधानात् । एतच्च योषिद्ग्राहस्य ऋणदानाधिकाराभिधानं विहितनिषिद्धज्ञानवतां शास्त्रोक्तपथानतियायिनां ब्राह्मणादीनां परयोषिद्ग्राहित्वस्यासम्भवेऽपि पामराणां रागान्धानां च तत्सम्भवत्येवेति न निर्विषयम् । अत एव योषिद्ग्राहस्य ऋणदानाधिकारकथनप्रस्तावे शौण्डिकादिग्रहणं करोति **कात्यायनः** (५६७)

निर्धनैरनपत्यैस्तु यत्कृतं शौण्डिकादिभिः ।
तत्स्त्रीणामपि भोक्ता तु दद्यात्तदृणमेव हि ॥

**शौण्डिकः** सुराकारः । आदिशब्दाच्चर्मकारादिग्रहणम् । **विज्ञानेश्वराचार्यै**स्तु रिक्थग्राह ऋणं दाप्य इत्यस्य प्रकारान्तरेण व्याख्यानं कृत्वा व्यवस्थान्तरं कृतम् । तद्यथा । रिक्थग्राही ऋणं दाप्यो योषिद्ग्राहस्तथैव च पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः ॥ अनन्याश्रितद्रव्यः अन्यमाश्रितमन्याश्रितम् । द्रव्यशब्देनात्र मातापितृसम्बन्धिद्रव्यस्य विवक्षा । अन्याश्रितं मातापितृसम्बन्धिद्रव्यं यस्य सोऽन्याश्रितद्रव्यो दायानर्ह इति यावत् । तदितरोऽनन्याश्रितद्रव्यः दायभागार्ह इत्यर्थः । पुत्रहीनस्य रिक्थिन ऋणं रिक्थग्राहो दाप्यस्तदभावे योषिद्ग्राहस्तदभावे दायार्हः पुत्रः । नन्वेतेषां[1] मेलने ह्ययं क्रमः । तदेव नोपपद्यते

1 'न त्वेतेषां मेलने' इति ब.

न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः । इति (मनु ९.१८५) पुत्रे सत्यन्यस्य रिक्थग्राहित्वासम्भवात् । योषिद्ग्राहोपि नोपपद्यते

न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते । इति

स्मरणात् (मनु ५. १६२) । किं च । ऋणं पुत्रो दाप्य इत्यप्ययुक्तं पुत्रपौत्रैर्ऋणं देयमिति याज्ञवल्क्येन (२.५०) प्रागेवोक्तत्वात् । अनन्याश्रितद्रव्य इति विशेषणमपि व्यर्थं पुत्रे सति मातापितृद्रव्यस्यान्यगामित्वासम्भवात् । सम्भवेऽपि रिक्थग्राहीत्यनेनैव प्राप्ते पुत्रोऽनन्याश्रितद्रव्य इत्यनर्थकम् । पुत्रहीनस्य रिक्थिन इत्येतदपि व्यर्थं सत्यपि पुत्रे रिक्थग्राहिण एव ऋणापाकरणाधिकारित्वस्य रिक्थग्राही ऋणं दाप्यः (या. २. ५१) इत्यनेनाभिधाने कैमुतिकन्यायेनासति पुत्रे तत्सिद्धेः । अत्राभिधीयते । सत्यपि पुत्रेऽन्यस्य रिक्थग्राहित्वं सम्भवति क्लीबादीनां दायानर्हत्वात् । योषिद्ग्राहित्वमपि रागकलुषीकृतचित्तस्यातिक्रान्तनिषेधस्योपपद्यते । ऋणं पुत्रो दाप्य इति पुनरभिधानं योषिद्ग्राहाभावेऽस्य ऋणदानेऽधिकारो न तस्मिन्सतीत्येवंरूपक्रमार्थम् । अनन्याश्रितद्रव्य इति न व्यर्थं पित्र्यरिक्थाभावेपि बहुषु पुत्रेषु दायग्रहणयोग्यो यस्तस्यैवाधिकारो न दायानर्हस्य क्लीबादेरिति प्रतिपादनार्थत्वात् । पुत्रहीनस्य रिक्थिन इत्येतदपि न व्यर्थम् । अत्र पुत्रग्रहणं पौत्रस्याप्युपलक्षणम् । पुत्रपौत्ररहितस्य ये समनन्तरं रिक्थग्राहत्वेन दायभागशास्त्रे निरूपिताः प्रपौत्रादयस्ते सर्वे दायभागोक्तक्रमेण ऋणं दाप्या यदि रिक्थं गृह्णन्ति न गृह्णन्ति चेन्न दाप्याः । पुत्रपौत्रौ तु रिक्थग्रहणाभावेऽपि दाप्याविति पुत्रपौत्रापेक्षया प्रपौत्रादीनां वैषम्यप्रतिपादनार्थत्वात् । पुत्रपौत्रापेक्षया प्रपौत्रादीनां वैषम्यं दर्शितं **नारदे**नापि (ऋ. ४)

क्रमादव्याहतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम् ।
दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्तते ॥ इति ।

अथवा योषिद्ग्राहाभावे पुत्रो दाप्य इत्युक्तं पुत्राभावे योषिद्ग्राहो दाप्य इत्येतदर्थं पुत्रहीनस्य रिक्थिन इति । अस्मिन् पक्षे रिक्थशब्देन योषिदुच्यते सैव चास्य धनं स्मृतमिति स्मरणात् । पुत्रहीनस्य सयोषि-

र्कस्य ऋणं योषिद्ग्राहो दद्यादित्यर्थः । ननु योषिद्ग्राहाभावे पुत्रो दाप्यः पुत्राभावे योषिद्ग्राहो दाप्य इत्युभयसद्भावे न कश्चिद्दाप्यः स्यात् । नैष दोषः । सप्रधनस्त्रीहारिणोऽन्तिमस्वैरिणीग्राहिणः प्रथमपुनर्भूग्राहिणश्चाभावे पुत्रो दाप्यः पुत्राभावे तु निर्धननिरपत्ययोषिद्ग्राही दाप्य इति व्यवस्थितेः । एतदेवोक्तं **नारदेन** ( ऋ. २३ )

धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत् ।
पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः ॥ इति ।

कस्मिंश्चित्स्त्रीहारिण्यसति पुत्रो दाप्यः पुत्रे सति ( पुत्रेऽसति ? ) कश्चित्स्त्रीहारी दाप्य इत्यर्थः । अथवा पुत्रहीनस्य रिक्थिन इत्यन्यथा व्याख्यातव्यम् । रिक्थग्राह्यादयः क्रमेण ऋणं दाप्या इत्युक्तं तत्रोत्तमर्णस्य तत्पुत्रस्य चाभावे कस्य दाप्या इत्यपेक्षायामिदमुपतिष्ठते पुत्रहीनस्य रिक्थिन इति । पुत्रहीनस्योत्तमर्णस्य यो रिक्थी रिक्थग्रहणार्हस्तस्य दाप्या इत्यर्थ इति सर्वं समञ्जसम् ॥

पितृव्यादिभिः कुटुम्बपोषणार्थं कृतं यदृणं तत्कुटुम्बिना दातव्यम् । तथा च **बृहस्पतिः**

पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः ।
यद्गृहीतं कुटुम्बार्थे तद्गृही दातुमर्हति ॥

**गृही** अत्र कुटुम्बी । अत एव नारदः ( ऋ. १२ )

शिष्यान्तेवासिदासस्त्रीप्रेष्यकृत्यकरैश्च यत् ।
कुटुम्बहेतोरुत्क्षिप्तं दातव्यं तत्कुटुम्बिना ॥

**शिष्योऽ**त्र वेदविद्यार्थी । **अन्तेवासी** शिल्पविद्यार्थी । **उत्क्षिप्तं** उत्थापितं कृतमिति यावत् । कुटुम्बिनोऽसन्निधानादिना तदनुज्ञानाभावेऽपि कुटुम्बार्थं कृतमृणं कुटुम्बिना दातव्यमित्याह **कात्यायनः** ( ५४५ )

प्रोषितस्यामतेनापि कुटुम्बार्थमृणं कृतम् ।
दासस्त्रीमातृशिष्यैर्वा दद्यात्पुत्रेण वा भृगुः ॥

**मनुः** ( ८. १६७ )

कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं समाचरेत् ।
स्वदेशे वा विदेशे वा तं विद्वान्न विचालयेत् ॥

**अध्यधीनो** दासादिः । अन्यदपि कुटुम्बकृतं कुटुम्बिना दातव्यमृणं दर्शयति **कात्यायनः** ( ५४२-५४३ )

कुटुम्बार्थमशक्ते तु गृहीतं व्याधिते तथा ।
उपप्लवनिमित्तं च विद्यादापत्कृतं तु तत् ॥
कन्यावैवाहिकं चैव प्रेतकार्येषु यत्कृतम् ।
एतत्सर्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः ॥

**अशक्ते** कुटुम्बपोषणासमर्थे कुटुम्बिनीति शेषः । **प्रभोः** कुटुम्बिनः । एतद्व्यतिरिक्तं पुत्रादिकृतमृणमदेयमित्याह **याज्ञवल्क्यः** ( २. ४६ )

न योषित्पतिपुत्राभ्यां न पुत्रेण कृतं पिता ।
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ॥

पुत्रकृतमपि किंचिद्देयमित्याह **कात्यायनः** ( ५४४ )

ऋणं पुत्रकृतं यत्तन्न देयमिति धर्मतः ।
देयं प्रतिश्रुतं यत्स्याद्यच्च स्यादनुमोदितम् ॥

**प्रतिश्रुत**मनुज्ञातम् । **अनुमोदित**मृणकरणानन्तरमङ्गीकृतम् । पुत्रेण स्वापदुद्धरणार्थं यत्कृतं तदपि देयमित्याह **नारदः** ( ऋ. ११ )

पितुरेव नियोगाद्वा कुटुम्बभरणाय वा ।
कृतं वा यदृणं कृच्छ्रे दद्यात्पुत्रस्य तत्पिता ॥

अन्यस्यापि पुत्रकृतर्णस्य स्नेहदेयत्वमाह **बृहस्पतिः**

ऋणं पुत्रकृतं पित्रा संशोध्यमनुमोदितम् ।
सुतस्नेहेन वा दद्यान्नान्यथा दातुमर्हति ॥

**स्नेहेन** न धर्मत इत्यर्थः । भार्ययाप्यापदुद्धरणार्थं यत्कृतं तदृणं देयम् ।

न च भार्याकृतमृणं कथंचित्पत्युराभवेत्[1] ।
आपत्कृतादृते पुंसां कुटुम्बार्थो हि विस्तरः ॥ (कात्या. ५६९)

**आभवेद्** देयं भवेदित्यर्थः । पत्युर्भार्याकृतर्णदाननिषेध आभीरादिव्यतिरिक्तविषयः । तथा च **याज्ञवल्क्यः** ( २.४८ )

गोपशौण्डिकशैलूषरजकव्याधयोषिताम् ।
ऋणं दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रया ॥

**शैलूषो** नटः । **वृत्तिर्जी**वनम् । गोपादिग्रहणं भार्यायत्तजीवनानां तैलिकादीनामप्युपलक्षणम् । न योषित्पतिपुत्राभ्यामित्यस्यापवादमाह **कात्यायनः** ( ५४६ )

भर्त्रा पुत्रेण वा सार्धं केवलं वात्मना कृतम् ।
ऋणमेवंविधं देयं नान्यथा तत्कृतं स्त्रिया ॥

**भर्त्रा पुत्रेण सार्धं** गृहीतमृणं तयोरभावे देयं स्वयं गृहीतं तु तयोर्भावेऽपि देयमित्यर्थः । **याज्ञवल्क्यो**ऽपि ( २. ४९ )

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम् ।
स्वयंकृतं वा यदृणं नान्यत्स्त्री दातुमर्हति ॥

**प्रतिपन्न**महं दास्यामीत्यङ्गीकृतम् । अप्रतिपन्नमपि तद्रिक्थग्रहणे दातव्यम् । तथा च **कात्यायनः** ( ५४७ )

मर्तुकामेन या भर्त्रा उक्ता देयमृणं त्वया ।
अप्रपन्नाऽपि सा दाप्या धनं दद्यात्स्थितं स्त्रिया ( याम् ? ) ॥

मातृकृतमृणं पुत्रेण दातव्यम् । तथा च **विष्णुः** ( विष्णुधर्मसूत्र ६. ३५-३६ )—पैतृकमविभक्तमातृकं च विभक्ताश्च दायानुरूपमंशम्—इति । दद्युरित्यनुषङ्गः । मातुर्दौष्ठ्येऽपि निर्धनायास्तस्या ऋणं पुत्रेण दातव्यमित्याह **नारदः** ( ऋ. २० )

पुत्रिणी तु समुत्सृज्य पुत्रं स्त्री यान्यमाश्रयेत् ।
तस्या ऋणं हरेत्सर्वं निःस्वायाः पुत्र एव तु ॥

---

१ 'कथं चित्पुराभवेत्' इति अ.

अन्यं भर्तारमिति शेषः। तस्या एव सधनत्वे विशेषमाह **कात्यायनः** ( ५७४ )

बालपुत्राधिकार्था वा भर्तारं यान्यमाश्रिता।
आश्रितस्तदृणं दद्याद्बालपुत्राविधिः स्मृतः॥

अविभक्तधनैः कुटुम्बपोषणार्थं यदृणं कृतं तत्तद्दानाधिकारिणि कुटुम्बिन्यसंनिहिते तद्रिक्थहरैः सर्वैर्दातव्यम्। तथा च **याज्ञवल्क्यः** ( २.४५ )

अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत्।
दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि॥

**नारदो**ऽपि ( ऋ. ३ )

पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम्।
मात्रा वा कुटुम्बार्थे दद्युस्तत्सर्वरिक्थिनः॥

अविभक्तधनानां सर्वेषामभावे यस्तिष्ठति तेनैव सर्वमृणं दातव्यम्। तथा च **विष्णुः** ( विष्णुधर्मसूत्र ६.३४ )—अविभक्तैः कुटुम्बार्थं कृतमृणं यस्तिष्ठेत्स दद्यात्—इति। एतच्च ऋणप्रतिदानमुत्तमर्णस्याभावे तद्रिक्थग्रहणाधिकारिषु पुत्रादिषु कर्तव्यं तेषामभावे[1] तत्सगोत्रेषु तेषामभावे तद्बन्धुषु मातुलादिषु कर्तव्यम्। तथा च **नारदः** ( ऋ. ११२ )

ब्राह्मणस्य तु यद्देयं सान्वयस्य न चास्ति सः।
निवर्तयेत्सकुल्येषु तदभावेऽस्य बन्धुषु॥

**ब्राह्मण**ग्रहणमुत्तमर्णोपलक्षणम्[2]। **अन्वयः** पुत्रसन्ततिर्दुहितृसन्ततिश्च। तेषामप्यभावे यत्कर्तव्यं तदाह **स** एव ( नारद, ऋ. ११३ )

यदा तु न सकुल्याः स्युर्न च सम्बन्धिबान्धवाः।
तदा दद्याद् द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेत्॥

**प्रजापतिर**पि

बन्ध्वभावे तु विप्रेभ्यो देयं क्षेप्यं जलेऽपि वा।
जले क्षिप्तं तथाग्नौ च धनं स्यात्पारलौकिकम्॥

---

१ 'तेषामभावे तत्सगोत्रेषु' इति नास्ति अ–आदर्शे. २ 'उत्तमवर्णोपलक्षणम्' इति क.

**अग्नौ** हुतमिति शेषः। न तु क्षिप्तमित्यस्यानुषङ्गः। अत एवोक्तं **स्मृतिसंग्रहे**

द्रव्यं यत्त्वधमर्णस्थं कचिद् ब्राह्मणगं भवेत्।
सुतादिब्राह्मणान्तानां रिक्थभाजामसम्भवे॥
पलाशस्य पलाशेन जुहुयान्मध्यमेन तु।
यत्कुसीदमिति[1] प्रास्येदथ वार्येव तद्धनम्॥ इति।

मन्त्रस्य होमेनैव सम्बन्धो न जलप्रक्षेपेण **गोभिलकात्**। मध्यमपर्णेन जुहुयाद्यत्कुसीदमिति गोभिलेन (गोभिलगृह्य ४. ४. २६) होमसम्बन्धेनैव स्मृतत्वात्। अयं विधिर्निक्षेपादिद्रव्येपि स्वाम्यभावे ज्ञातव्यः समानन्यायत्वात्। इति श्रीकोदण्डपरशुरामेति······व्यवहारविवेकोद्द्योते ऋणादानाख्यव्यवहारपदनिरूपणम्॥ १६॥

अथ निक्षेपाख्यव्यवहारपदनिरूपणम्। तस्य स्वरूपं दर्शयति **नारदः** (निक्षेप १)

स्वद्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः।
निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः॥

स्वद्रव्यं विश्वासात्पुरुषान्तरे स्थापितं निक्षेपः। अयमेवागणितद्रव्यस्थापने उपनिधिरित्युच्यते। तथा चोक्तं **तेनैव**

असंख्यातमविज्ञातं समुद्रं यन्निधीयते।
तं जानीयादुपनिधिं निक्षेपं गणितं विदुः॥

**अविज्ञात**शब्दार्थो विवृतो **बृहस्पति**ना

अनाख्यातं व्यवहितमसंख्यातमदर्शितम्।
मुद्राङ्कितं च यद्दत्तं तदौपनिधिकं स्मृतम्॥

**व्यवहितं** करण्डकादिस्थितमित्यर्थः। अत एव **याज्ञवल्क्यः** (२. ६५)

वासनस्थमविज्ञातं हस्तेऽन्यस्य यदर्प्यते।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत्॥

---

1 हुत्वेति शेषः इति ब.

**वासनं** द्रव्याधारभूतं करण्डकादि । हस्तग्रहणमुपलक्षणम् । अत एवोक्तं **नारदेन** ( निक्षेप ५ )

निक्षिप्यते परगृहे तदौपनिधिकं स्मृतम् ।

अयमेव ग्राहकस्यासमक्षं समर्पितो न्यास इत्युच्यते । अत एव **बृहस्पतिः**

राजचौरारातिभयाद् दायादानां च वञ्चनात् ।
स्थाप्यतेऽन्यगृहे द्रव्यं न्यासः स परिकीर्तितः ॥

एवं च गणितं ग्राहकस्य समक्षं स्थापितं निक्षेपः । अगणितं मुद्राङ्कितं समक्षस्थापितमुपनिधिः । गृहस्वामिनोऽसमक्षं गणितमगणितं वा तस्मिन्नागत एवैतद्दातव्यमित्युक्त्वान्यस्य तत्पुत्रादेर्हस्ते दत्तं न्यास इत्येतेषां भेदः । निक्षेपादेः पुनर्द्वैविध्यमाह **नारदः** ( निक्षेप ६ )

स पुनर्द्विविधः प्रोक्तः साक्षिमानितरस्तथा ।
प्रतिदानं तथैवास्य प्रत्ययः स्याद्विपर्यये ॥

**विपर्यये** विसंवादे । **प्रत्ययो** दिव्यम् । निक्षेपादिस्थापनप्रकारमाह **मनुः** ( ८. १७९ )

कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि ।
महापक्षे धनिन्यार्ये निक्षेपं निक्षिपेद्बुधः ॥

**महापक्षे** बहुतरबन्धुयुक्ते । निक्षेपग्रहणमुपलक्षणम् । **बृहस्पतिः**

स्थानं गृहं गृहस्थं च तद्वर्णं विविधान्गुणान् ।
सत्यं शौचं बन्धुजनं परीक्ष्य स्थापयेन्निधिम् ॥

**निधिरु**पनिधिः । एतदप्युपलक्षणम् । ग्राहकेण निक्षेपादिकं सम्यग्रक्षणीयमित्याह **बृहस्पतिः**

ससाक्षिकं रहोदत्तं द्विविधं समुदाहृतम् ।
पुत्रवत्परिपाल्यं तद्विनश्यत्यनवेक्षया ॥

रक्षणारक्षणयोः फलदोषौ दर्शितौ **तेनैव**

ददतो यद्भवेत्पुण्यं हेमकुप्याम्बरादिकम् ।
तत्स्यात्पालयतो न्यासं यथैव शरणागतम् ॥

भर्तृद्रोहे यथा नार्याः पुंसः पुत्रसुहृद्वधे ।
दोषो भवेत्तथा न्यासे भक्षितोपेक्षिते नृणाम् ॥
न्यासद्रव्यं न गृह्णीयात्तन्नाशस्त्वयशस्करः ।
गृहीतं पालयेद्यत्नात्सकृद्याचितमर्पयेत् ॥

न्यासग्रहणमुपलक्षणम् । ग्राहकेण यथा गृहीतं तथैव प्रत्यर्पणीयमित्याह **स** एव

स्थापितं येन विधिना येन यच्च यथाविधम् ।
तथैव तस्य दातव्यं न देयं प्रत्यनन्तरे ॥

**प्रत्यनन्तरः** स्थापकव्यतिरिक्तः स्थापितद्रव्यस्वामी[1] तत्पुत्रादिरिति । स्थापकेनापि यथा स्थापितं तथैव ग्राह्यमित्याह **मनुः**( ८. १८० )

यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः ।
स तथैव ग्रहीतव्यो यथा दायस्तथा ग्रहः ॥

**दायो** दानं स्थापनमिति यावत् । कस्माच्चिद्भयान्निक्षेपादिस्थापने तद्भयावस्थितिकाले न ग्राहकेण प्रतिदातव्यमित्याह **कात्यायनः** ( ६०१ )

ग्राह्यस्तूपनिधिः काले कालहीनं तु वर्जयेत् ।
कालहीनं ददद्दण्डं द्विगुणं च प्रदाप्यते ॥

भयापायेऽपि याचितं दातव्यं सकृद्याचितमर्पयेदिति बृहस्पतिनाभिधानात् । याचितस्यादाने यत्कर्तव्यं तदाह **नारदः**

याच्यमानस्तु यो दातुर्निक्षेपं न प्रयच्छति ।
दण्ड्यः स राज्ञो भवति नष्टे दाप्यश्च तत्समम् ॥

**नष्टे** दैवतो राजतो[2] वेति शेषः । **याज्ञवल्क्योऽ**पि ( २. ६६ )

भ्रेषश्चेन्मार्गितेऽदत्ते दाप्यो दण्डं च तत्समम् । इति ।

**मार्गिते** याचिते **अदत्ते** सति यदि **भ्रेषो** दैवराजादिकृतो नाशो भवति तथापि तद्द्रव्यमूल्यपरिकल्पनेन धनिने ग्राहको दाप्यो राज्ञे च तत्समं दण्डमित्यर्थः । **मनु**रपि ( ८. १९१ )

---

१ 'स्थापितद्रव्यस्य पुत्रादिः' इति अ; 'स्थापितद्रव्यस्य मानता पुत्रादिः' क. २ अत आरभ्य 'यदि भ्रेषो दैव०' इत्यन्तो भागो गलितः अ–आदर्शे.

यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ।
तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम् ॥ इति ।

**चौरवच्छास्यौ** चोरवद्दण्ड्यौ । उपेक्षातिदोषेण निक्षेपादिनाशे यत्कर्तव्यं तदाह **कात्यायनः** ( ५९४ )

यस्य दोषेण यत्किंचिद्विनश्येत म्रियेत वा ।
तद्द्रव्यं सोदयं दाप्यो दैवराजकृताद्विना ॥

**स** एव ( कात्या. ५९६ )

न्यासादिकं परद्रव्यं प्रभक्षितमुपेक्षितम् ।
अज्ञाननाशितं चैव येन दाप्यः स एव तत् ॥

**बृहस्पतिः**

भेदेनोपेक्षया न्यासं ग्रहीता यदि नाशयेत् ।
याच्यमानो न दद्याद्वा दाप्यं तत्सोदयं भवेत् ॥

अत्र **भेदेनोपेक्षये**ति कथनं स्वीयद्रव्येण सहोपेक्षया नाशे न सवृद्धिकदानमिति बोधनार्थम् । अत एव **व्यासः**

भक्षिते सोदयं दाप्यः समं दाप्य उपेक्षिते ।
किंचिदूनं प्रदाप्यः स्याद् द्रव्यमज्ञाननाशितम् ॥

**किंचिदूनं** चतुर्थांशन्यूनमिति **विज्ञानेश्वराचार्याः** । यः स्थापितधनेन भोगादिकं करोति तं प्रत्याह **याज्ञवल्क्यः** ( २.६७ )

आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयम् ।

**आजीवन्** भोगवृद्ध्यर्थं प्रयोगादिनोपजीवन् । **स्वेच्छया** स्वाम्यननुज्ञया । **नारदो**ऽपि ( निक्षेप ८ )

यत्रार्थं साधयेत्तेन निक्षेप्तुरननुज्ञया ।
तत्रापि दण्ड्यः स भवेत्तं च सोदयमावहेत् ॥

दण्डः साधितद्रव्यानुसारेण । निक्षेपवृद्धिश्च **कात्यायनेन** ( ५०६ ) दर्शिता

निक्षेपं वृद्धिशेषं च क्रयविक्रयमेव च ।
याच्यमानं न चेद् दद्याद्वर्धते पञ्चकं शतम् ॥ इति ।

निक्षेपापहर्तारं प्रत्याह **विष्णुः** ( विष्णुधर्मसूत्र ५. १६४ )—निक्षेपापहारी वृद्धिसहितं धनं धनिकस्य दाप्यः । अस्य[1] दण्डमप्याह **मनुः** ( ८.१९२ )

निक्षेपस्यापहर्तारं तत्समं दापयेद् दमम् ।
तथोपनिधिहर्तारं विशेषेणैव पार्थिवः ॥

निक्षेपापह्नवे यत्कर्तव्यं तदाह **व्यासः**

निक्षेपं निह्नुते यस्तु नरो बन्धुबलान्वितः ।
साक्षिभिर्वार्थदिव्येन विभाव्य प्रतिदाप्यते ॥

अस्य दण्डमाह **बृहस्पतिः**

गृहीत्वापह्नुते यत्र साक्षिभिः शपथेन वा ।
विभाव्य दापयेन्न्यासं तत्समं विनयं तथा ॥

ससाक्षिके निक्षेपादौ स्थापकस्य दौष्ट्ये साक्षिभ्यो यथास्थितमर्थमवगत्य राज्ञा स दण्डनीय इत्याह **मनुः** ( ८. १९४ )

निक्षेपो यः कृतो येन यावांश्च कुलसंनिधौ
तावानेव स विज्ञेयो विब्रुवन्दण्डमर्हति ॥

**कुलं** साक्षिवृन्दम् । असाक्षिके तु **बृहस्पतिराह**

रहोदत्ते निधौ यत्र विसंवादः प्रजायते ।
विभावकं तत्र दिव्यमुभयोरपि च स्मृतम् ॥

**उभयोर्**मध्ये एकस्येत्यर्थः । दैवराजोपघाते ग्राहकस्य न दोष इत्याह **बृहस्पतिः**

दैवराजोपघातेन यदि तन्नाशमाप्नुयात् ।
ग्रहीतृद्रव्यसहितं तत्र दोषो न विद्यते ॥

**ग्रहीतृद्रव्यसहित**मित्युपेक्षाद्यभावनिश्चयार्थमुक्तम् । तेन कथंचिन्निक्षेपमात्रस्य नाशे प्रमाणान्तरेणोपेक्षाद्यभावनिश्चये न ग्राहकस्य दोष इत्यवसेयम् । **याज्ञवल्क्यो**ऽपि ( २. ६६ )

---

१ 'अस्य' इति नास्ति क–आदर्शे.

न दाप्योपहृतं तत्तु राजदैविकतस्करैः ।

**दैविकं** च किंचिद्दर्शितं **मनुना** ( ८. १८९ )

चौरैर्हृतं जलेनोढमग्निना दग्धमेव च ।
न दद्याद्यदि तस्मात्स्वं न संहरति किंचन ॥

**तस्मात्** निक्षेपाद् यद्यल्पमपि धनं **न संहरति** न गृह्णाति तर्हि न दद्यादित्यर्थः । यद्यत्र स्थापितस्य राजचौरोपप्लवादिना नाशः सम्भाव्यत इति ज्ञात्वा कश्चित्स्थापयति तदा तत्र स्थापितस्य येन केनापि हेतुना नाशे ग्रहीता न दाप्य इत्याह **कात्यायनः** ( ५९९ )

ज्ञात्वा द्रव्यवियोगं तु दाता यत्र विनिक्षिपेत् ।
सर्वोपायविनाशेऽपि ग्रहीता नैव दाप्यते ॥

स्थापयितुर्मरणे प्रत्यनन्तरे पुत्रादौ तद्देयम् । अत एव **मनुः** ( ८. १८६ )

स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे ।
न स राज्ञाभियोक्तव्यो न निक्षेप्तुस्तु बन्धुभिः ॥

**स्वयमेव** याचनमन्तरेणेत्यर्थः । याचनमन्तरेण दानं भयादिकालापाये ज्ञातव्यमितरथा दोषापत्तेः । प्रत्यनन्तराणां पुत्रादीनां बहुत्वे तेषां सर्वेषां सन्निधौ दातव्यमिति सूचनार्थं **न निक्षेप्तृबन्धुभिरभियोक्तव्य** इत्युक्तम् । यदि ग्राहकः स्वयमेव न ददाति तदा प्रत्यनन्तरेण यत्कार्यं तदाह स एव ( मनुः ८. १८७ )

अच्छलेनैव चान्विष्येत्तमर्थं प्रीतिपूर्वकम् ।
विचार्य तस्य वा वृत्तं साम्नैव परिसाधयेत् ॥

**अन्विष्येत्** अवधारयेत् । तत्र तस्य वृत्तं विचार्य साम्नैव वा परिसाधयेदित्यनेन तस्य दुर्वृत्तत्वे ऋणादानप्रकरणोक्तेन भयदर्शनाद्युपायान्तरेण साधयेदिति सूचितम् । उक्तं विधिं याचितादिष्वतिदिशति **याज्ञवल्क्यः** ( २. ६७ )

याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः ।

**याचितं** विवाहादौ शोभार्थमन्यस्माद्याचित्वा समानीतं वस्त्रालङ्कारादि । **अन्वाहित**मिदममुकेन मयि स्थापितं त्वया तस्मै दातव्यमित्युक्त्वा ग्राहकेण पुरुषान्तरहस्ते स्थापितम् । यद्यपि न्यासनिक्षेपयोर्विधिरुपदिष्टस्तथापि याज्ञवल्क्येनोपनिधावेवोपदिष्टो नान्यत्रेत्युचितोऽतिदेशः । **बृहस्पति**रपि

अन्वाहिते याचितके शिल्पिन्यासे सबन्धके ।
एष एवोदितो धर्मस्तथा च शरणागते ॥

**शिल्पिन्यासे** कुण्डलादिकरणाय स्वर्णकारादिहस्तन्यस्तसुवर्णादौ । **नारदो**ऽपि ( निक्षेप १४ )

एष एव विधिर्दृष्टो याचितान्वाहितादिषु ।
शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च ॥

**शिल्पिषु** शिल्पिन्यासे । **प्रतिन्यासे** मिथः कार्यापेक्षया त्वदीयमेतन्मया स्थाप्यते मदीयमेतत्त्वया स्थापनीयमिति स्थापिते । नारदेन निक्षेप एव विध्युपदेशादुपनिधिन्यासयोस्तदतिदेशः । अतिदेशाद्याचितस्य शिल्पिन्यासस्य दैवराजकृते नाशे स्वर्णकाराद्यस्तं न दाप्या इति प्राप्तौ क्वचिदपवादमाह **कात्यायनः** ( ६०३ )

यश्च संस्क्रियते न्यासो दिवसैः परिनिष्ठितैः ।
तदूर्ध्वं स्थापयंञ्[1] छिल्पी दाप्यो दैवाद्धृतेऽपि तम् ॥

जीर्णस्य वस्त्रादेर्नैर्मल्याद्यर्थं रजकादिहस्ते समर्पितस्य अवघातादिना नाशे अवघातादेर्नैर्मल्याद्यर्थत्वेन शिल्पिदोषाभावान्न तत्र शिल्पी दाप्यः । नूतनादौ तु शिल्पिन्यासे पटुतरावघातादिना नाशस्य शिल्पिदोषकृतत्वात्तन्मूल्यं दाप्यः । तदेतदभिप्रेत्योक्तं **तेनैव** ( कात्या. ६०४ )

न्यासदोषाद्विनाशः स्याच्छिल्पिनं तं न दापयेत् ।
दापयेच्छिल्पिदोषात्तत्संस्कारार्थं यदर्पितम् ॥

नेजकहस्ते प्रक्षालनार्थं दत्ते वस्त्रे तेन नाशिते तन्मूल्यं कियद् ग्राह्यमित्यपेक्षायामाह **नारदः** ( क्रीता० ८–९ )

---

१ 'दापयेत्' इति ब.

मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः ।
द्विः पादस्त्रिस्तृतीयांशश्चतुर्धौतेऽर्धमेव च ॥
अर्धक्षयात्तु परतः पादांशापचयः क्रमात् ।

सकृद्धौतस्य नाशेऽष्टमांशन्यूनं तन्मूल्यं ग्राह्यं द्विर्धौते चतुर्थांशन्यूनम् । एवमुत्तरत्रापि योज्यम् । शिल्पिनः शिल्पिन्यासोपभोगादौ दण्ड्यतामाह **याज्ञवल्क्यः** ( २. २३८ )

वसानस्त्रीन्पणान् दण्ड्यो नेजकस्तु परांशुकम् ।
विक्रयावक्रयाधानयाचितेषु पणान्दश ॥

**नेजको** वस्त्रप्रक्षालकः । **अवक्रयः** कस्माचिद्भाटकं गृहीत्वा तस्योपभोगार्थं कालक्लृप्तिं विधाय समर्पणम् । **आधानं** बन्धकीकरणम् । **याचितं** स्वसुहृद्भ्यो याचितत्वेन दानम् । रजकेन वस्त्राणां प्रक्षालनं पाषाणे न कार्यं किंतु श्लक्ष्णे शाल्मले फलके न च तेषां व्यत्यासः कार्यो न च रात्रौ तानि गृहे स्थापनीयानि । तथा च **मनुः** ( ८. ३९६ )

शाल्मले फलके श्लक्ष्णे निज्याद्वासांसि नेजकः ।
न च वासांसि वासोभिर्निर्हरेन्न च वासयेत् ।

वस्त्राद्यर्थं कुविन्दादिहस्ते समर्पितं यत्तन्त्वादिकं खण्डपटाद्यवस्थायां नष्टं परिपूर्णदशायां वा कुविन्दादिना समर्प्यमाणं स्वामिना न गृहीतं पश्चान्नष्टं तत्र विषये विशेषमाह **स** एव ( कात्या. ६०५ )

स्वल्पेनापि च यत्कर्म नष्टं चेद्भृतकस्य तत् ।
पर्याप्तं दित्सतस्तस्य विनश्येत्तदगृह्णतः ॥

**यत्कर्म** वस्त्रनिर्माणादि **स्वल्पेनापि** प्रान्तवानादिनापि विकलं **नष्टं चेद्भृतकस्य** शिल्पिन एव च तन्नष्टं पुनर्वेतनग्रहणमन्तरेणैव वानादिक्रियां कुर्यादित्यर्थः । यदि स्वामी तन्त्वादिकं नार्पयति तदा पुनर्वानाद्यभावेऽपि शिल्पिने दत्तां भृतिं स न लभते । **पर्याप्तं** परिपूर्णं वस्त्रादिकं **दित्सतस्तस्य** भृतकस्य हस्तादीयमान**मगृह्णतः** स्वामिनस्तत्पर्याप्तं नश्यतीत्यर्थः । एवं चात्र भृतको नष्टं न दाप्य इति पर्यवसि-

तोऽर्थः । कल्कादिनिर्माणार्थं सुवर्णकारादिहस्ते दत्तानि यानि सुवर्णादीनि तेषु सुवर्णं यत्परिमाणकं दत्तं तत्परिमाणक एव सुवर्णविकारः शिल्पिनो ग्राह्यः । रजतादिविकारास्तु किंचिन्न्यूना ग्राह्याः । कम्बलादयस्तु ऊर्णाद्यपेक्षया किंचिदधिका ग्राह्याः । यद्येवं शिल्पी न ददाति तदा राज्ञैव दाप्यो दण्डनीयश्च । तदेतत्सर्वमभिप्रेत्य सुवर्णे साम्यमितरत्र वृद्धिक्षययोरियत्तां च दर्शयति **याज्ञवल्क्यः** ( २.१७८-१८० )

अग्नौ सुवर्णमक्षीणं रजते द्विपलं शते ।
अष्टौ त्रपुणि सीसे च ताम्रे पञ्च दशायसि ॥
शते दशपला वृद्धिरौर्णकार्पाससौत्रिके ।
मध्ये पञ्चपला वृद्धिः सूक्ष्मे तु त्रिपला मता ॥
कार्मिके रोमबन्धे च त्रिंशद्भागः क्षयो मतः ।
न क्षयो न च वृद्धिश्च कौशेये वल्कलेषु च ॥

**अग्नौ** प्रताप्यमानमिति शेषः । शतपले रजते प्रताप्यमाने पलद्वयम् । त्रपुणि सीसे च पलाष्टकम् । ताम्रे पलपञ्चकं लोहे पलदशकं क्षीयत इत्यर्थः । कांस्यस्य त्रपुताम्रप्रभवत्वात्तदनुसारेण क्षयः कल्पनीय इति पृथङ् नोक्तः । स्थूलेपूर्णाकार्पाससूत्रेषु शतपलेषु दशपलकम् । अनतिसूक्ष्मेषु पञ्चकं सूक्ष्मेषु पलत्रयं वर्धत इत्यर्थः । एतदप्रक्षालितवस्त्रविषयमिति **विज्ञानेश्वराचार्याः** । **कार्मिकं** चित्रेण कर्मणा निर्मितं यत्र निर्मिते पटे स्वस्तिकादिकं चित्रसूत्रैः क्रियते तदित्यर्थः । यत्र प्रावारादौ[1] रोमाणि बध्यन्ते स **रोमबन्धः** । अनयोः सूत्रापेक्षया त्रिंशांशस्य क्षय इत्यर्थः । याचितकविषये विशेषमाह **स** एव ( कात्या. ६०६ )

यदि तत्कार्यमुद्दिश्य कालं परिनियम्य वा ।
याचितोऽर्धकृते तस्मिन्नप्राप्ते न तु दाप्यते ॥

यद्दीर्घकालनिष्पाद्यं **कार्यं तदुद्दिश्य** संवत्सरपर्यन्तं दीयतामित्येवं **कालं परिनियम्य** याचिते कार्यमध्ये परिनियमितकालमध्ये **वा** प्रति-

---

१ 'यत्र प्रमाणादौ' इति **अ-क.**

याच्यमानो याचितकं न ददाति यदि तदा सोदयं न दाप्यः किं तु कार्ये कृते परिनियमितकालात्यये याचितकमात्रं दद्यादित्यर्थः। यदि कार्यानन्तरमुक्तकालात्यये वा न ददाति तदा दैवादिना नाशे तन्मूल्यं दातव्यमित्याह **स एव** (कात्या. ६०७)

प्राप्तकाले कृते कार्ये न दद्याद्याचितोऽपि तत्[1]।
तस्मिन्नष्टे हृते वापि ग्रहीता मूल्यमावहेत्[2]॥

क्वचित्परिनियतकालमध्ये कार्यमध्येऽपि याचितकदानमाह **स एव** (कात्या. ६०९)

अथ कार्यविपत्तिस्तु तस्यैव स्वामिनो भवेत्।
अप्राप्तेऽपि[3] स काले तु दाप्यस्त्वर्धकृतेऽपि तत्॥

यदि याचितकाप्रतिदाने तत्स्वामिकार्यनाशस्तदा दद्यादित्यर्थः। याचितकादाने यत्कर्तव्यं तदाह **स एव** (कात्या. ६१०)

यो याचितकमादाय न दद्यात्प्रतियाचितः।
स निगृह्य बलाद्दाप्यो दण्ड्यश्च न ददाति यः॥

स **बलान्निगृह्य दाप्यो** दानोन्मुखीकर्तव्यः। एवमपि **यो न ददाति स दण्ड्यश्चे**त्यर्थः॥ इति श्रीकोदण्डपरशुरामेति……व्यवहारविवेकोद्योते निक्षेपाख्यव्यवहारपदनिरूपणम्॥ १७॥

अथास्वामिविक्रयाख्यव्यवहारपदनिरूपणम्। तस्य स्वरूपं दर्शयति **नारदः** (अस्वामि० १)

निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वापहृत्य वा।
विक्रीयतेऽसमक्षं यत्स ज्ञेयोऽस्वामिविक्रयः॥

**निक्षिप्त**ग्रहणं[4] याचितादीनामप्युपलक्षणम्। **असमक्षं** स्वामिन इति शेषः। अत एव **व्यासः**

याचितान्वाहितन्यासं हृत्वा वान्यस्य यद्धनम्।
विक्रीयते स्वाम्यभावे स ज्ञेयोऽस्वामिविक्रयः॥

---

१ 'याचितकं यदि न ददाति' इति **ब.** २ 'सन्' इति **ब.** ३ 'अप्राप्ते वै स' इति **अ-क.** ४ 'निक्षिप्तग्रहणं…ज्ञेयोऽस्वाविमिक्रयः' इत्येष भागो नास्ति **ब**–आदर्शे.

**स्वाम्यभावे** स्वाम्यसंनिधाने । अत्र विक्रयग्रहणं दानबन्धकयोर-प्युपलक्षणम् । अत एव तयोरपि निवर्त्यत्वमाह **कात्यायनः** ( ६१२ )

अस्वामि विक्रयं दानमाधिं वा विनिवर्तयेत् ।

**अस्वामि** इति पृथक्पदम् । **अस्वामि** स्वामिसंनिधानरहितम् । लिङ्गव्यत्ययश्छान्दसः । अथवा[1] **अस्वामिविक्रयं** अस्वामिना कृतं विक्रयम् । अस्मिन्पक्षे दानाध्योरपि तत्साहचर्यादस्वामिकृतत्वं द्रष्टव्यम् । अत एव **यमः**

अस्वामिना कृतो यस्तु दायो विक्रय एव वा ।
अकृतः स तु विज्ञेयो व्यवहारेषु नित्यशः ॥

**दायो** दानम् । अस्वामिनं दर्शयति **बृहस्पतिः**

निक्षेपान्वाहितन्यासहृतयाचितकबन्धकम् ।
उपांशु येन विक्रीतमस्वामी सोऽभिधीयते ॥

निक्षेपादिग्रहणं प्रनष्टाधिगतादिरूपस्यापि परद्रव्यस्योपलक्षणम् । अत एव **मनुः** ( ८. १९७ )

विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसंमतः । इति ।

**उपांशु** अप्रकाशम् । एतच्चोपलक्षणम् । यतः प्रकटतया निक्षेपादिकं परद्रव्यं येन विक्रीतं सोऽप्यस्वामी । अस्वामिना विक्रीतं यत्समीपे दृष्टं तत्सकाशात्स्वामिना ग्राह्यम् । तथा च **नारदः** ( अस्वामि. २ )

द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी तदाप्नुयात् ।

**याज्ञवल्क्योऽ**पि ( २. १६८ )

स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते ।
हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः ॥

**अप्रकाशिते** गोपिते क्रये **क्रेतुर्दोषो** भवति । **हीनात्** तद्धना-गमोपायरहितात् क्रये **रहसि** एकान्ते वा क्रये **हीनमूल्ये** अल्पमूल्येन वा क्रये **वेलाहीने** रात्र्यादिकृते वा क्रये क्रेता तस्करवद् दण्ड्य इत्यर्थः ।

---

१ 'अथ वा ... द्रष्टव्यम्' इति वाक्यं नास्ति ब-आदर्शे.

स्वामिना तद्धनस्य ग्रहणं राजानं ज्ञापयित्वैव कर्तव्यमितरथा तस्करप्रच्छादकत्वेन स दण्ड्य इत्याह **स** एव ( या. २. १७२ )

हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात् ।
अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान् ।

स्वामिना क्रेतुः समीपे स्वद्रव्यसत्त्वमवधार्य राजानं ज्ञापयित्वा राजपुरुषैः स ग्राहयितव्यः । राज्ञो राजपुरुषाणां च दूरादवस्थितौ तु विज्ञापनकालात्प्राक् पलायनादिशङ्कायां स्वयमेव गृहीत्वा स समर्पणीय इत्याह **स** एव ( या. २. १६९ )

नष्टापहृतमासाद्य हर्तारं ग्राहयेन्नरम् ।
देशकालातिपत्तौ च गृहीत्वा स्वयमर्पयेत् ॥

हर्तृशब्देनात्र क्रेता विवक्षित इति **विज्ञानेश्वराचार्याः** । क्रेतुर्दोषोऽप्रकाशित इत्यादिना याज्ञवल्क्येनोक्तमर्थं **विष्णु**रप्याह ( विष्णुधर्मसूत्र ५.१५९-१६१ )—अज्ञानतः प्रकाशं यः परद्रव्यं क्रीणीयात्तत्रास्यादोषः स्वामी द्रव्यमवाप्नुयाद्यद्यप्रकाशं हीनमूल्यं वा क्रीणीयात्तदा क्रेता विक्रेता वा चोरवच्छास्यः—इति । **अज्ञानतः** विक्रेतुरप्रकाशविक्रयाद्यभावादस्वामित्वमज्ञात्वा । अप्रकाशक्रयादौ तु तथाविधविक्रयस्य विक्रेत्रस्वामिबोधकत्वात्तज्ज्ञानमस्तीति दुष्टत्वात् क्रेतापि दण्ड्य इत्यर्थः । **नारदो**ऽपि ( अस्वामि० २ )

प्रकाशतः क्रयः शुद्धः क्रेतुः स्तेयं रहः क्रयात् ।

**बृहस्पति**रपि

येन क्रीतं तु मूल्येन प्राग्राज्ञे विनिवेदितम् ।
न तत्र विद्यते दोषः स्तेनः स्यादुपविक्रयात् ॥

अल्पमूल्येनापि क्रीयमाणं क्रयात्प्राक् प्रकटीकृतं न दोषापादकमित्यर्थः । **उपविक्रय**शब्दार्थं स्वयमेवाह

अन्तर्गृहे बहिर्ग्रामान्निशायामसतो जनात् ।
हीनमूल्यं च यत् क्रीतं ज्ञेयोऽसावुपविक्रयः ॥

**असतो जनात्** चण्डालादिजनात्। असद्ग्रहणं दासादीनामुपलक्षणम्। अत एव **नारदः** ( अस्वामि. ३ )

अस्वाम्यनुमताद् दासादसतश्च जनाद्रहः।
हीनमूल्यमवेलायां क्रीणंस्तद्दोषभाग्भवेत्॥

**अस्वाम्यनुमतात्** स्वाम्यनुमतिरहितात्। **दास**ग्रहणमस्वतन्त्राणां बालादीनामुपलक्षणम्। नष्टधनस्वामिना क्रेतारं राजसभां प्रापय्य तद्धने स्वस्वत्वप्रापकं दायप्रतिग्रहादिकं साक्षिभाषणेन साधनीयम्। इतरथा स दण्ड्यः। तथा च **कात्यायनः** ( ६१३ )

अभियोक्ता धनं कुर्यात्प्रथमं ज्ञातिभिः स्वकम्।

**ज्ञातिभिः** साक्षिभूतैरिति शेषः। **स** एव ( कात्या. ६२० )

यदि स्वं नैव कुरुते ज्ञातिभिर्नाष्टिको धनम्।
प्रसङ्गविनिवृत्त्यर्थं चौरवद्दण्डमर्हति॥

**नाष्टिको** नष्टधनस्वामी। प्रसङ्गो स्वत्वसन्देहः। **याज्ञवल्क्यो**ऽपि ( २. १७१ )

आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा।
पञ्चबन्धो दमस्तस्य राज्ञे तेनाविभाविते॥

**पञ्चबन्धः** नष्टद्रव्यस्य पञ्चमांशसमानो दण्डः। **व्यासो**ऽपि

वादी चेन्मार्गितं द्रव्यं साक्षिभिर्न विभावयेत्।
दाप्यः स्याद् द्विगुणं दण्डं क्रेता तद् द्रव्यमर्हति॥ इति।

**साक्षिभि**रित्युपादानमस्वामिविक्रयविवादे। स्वत्वसाधने प्रमाणान्तरनिवृत्त्यर्थम्। अत्र दण्डभेदोऽपराधाल्पत्वमहत्त्वानुसारेण व्यवस्थापनीयः। स्वत्वहेतवस्त्वनुमाननिरूपणे दर्शिताः। नाष्टिकेन स्वत्वसाधनानन्तरं स्वत्वनिवृत्तिहेतुभूतदानविक्रयाद्यभावोऽपि साधनीयः। तथा च **कात्यायनः** ( ६१४ )

नाष्टिकस्तु प्रकुर्वीत तद्धनं ज्ञातिभिः स्वकम्।
अदत्तत्यक्तविक्रीतं कृत्वा स्वं लभते धनम्॥

**दत्तं** कस्मैचित्संप्रदानभूताय विध्युक्तप्रकारेण दत्तम् । **त्यक्तं** पारितोषिकादिरूपेण दत्तम् । राजपुरुषैरानीतेन क्रेत्रा यतः क्रीतं स दर्शनीय इत्याह **बृहस्पतिः**

पूर्वस्वामी तु तद् द्रव्यं यदागत्य विचारयेत् ।
तत्र मूलं दर्शनीयं क्रेतुः शुद्धिस्ततो भवेत् ॥

**मूलं** विक्रेता । **शुद्धिः**रभियोज्यत्वनिवृत्तिः । अत एव **व्यासः**

मूले समाहृते क्रेता नाभियोज्यः कथंचन ।
मूलेन सह वादस्तु नाष्टिकस्य विधीयते ॥

**समाहृते** अस्मान्मया क्रीतमिति निर्दिष्टे । **याज्ञवल्क्योऽपि** ( २. १७० )

विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ।
क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी ॥

अत्र **स्वामी द्रव्य**मित्यभिधानं विक्रेता नाष्टिकेन सह यदि विवादं न कुर्याद्यदि वा कृते विवादे पराजयी स्यात्तदा नाष्टिकस्य स्वामित्वमवधारितमिति नाष्टिकादिभ्यो विक्रीतद्रव्यादीनि दातव्यानि नान्यथेति सूचनार्थम् । अत एव **बृहस्पतिः**

विक्रेता दर्शितो यत्र हीयते व्यवहारतः ।
क्रेत्रे राज्ञे मूल्यदण्डौ प्रदद्यात्स्वामिने धनम् ॥

यदि विक्रेता देशान्तरे तिष्ठति तदा तदानयनार्थं मार्गानुरूपः कालो देय इत्याह **कात्यायनः** ( ६१५ )

मूलानयनकालश्च तत्र देयोऽध्वसंख्यया ।

यदा तु कालविलम्बेनापि न मूलं दर्शयितुं शक्तस्तदा क्रयं साक्षिभिः साधयेत् । तथा चोक्तं **तेनैव** ( कात्या. ६१८ )

असमाहार्यमूलस्तु क्रयमेव विशोधयेत् ।
विशोधिते क्रये राज्ञा वक्तव्यः स न किंचन ॥

**क्रये विशोधिते** साक्षिभाषणेन प्रकाशिते सति **राज्ञा न किंचन वक्तव्यो** न दण्ड्य इत्यर्थः । यत्तु **तेनैव** ( कात्या. ६१३ )

अभियोक्ता धनं कुर्यात्प्रथमं ज्ञातिभिः स्वकम् ।
पश्चादात्मविशुद्ध्यर्थं क्रयं क्रेता स्वबन्धुभिः ॥ इति

अभियोक्त्रा स्वत्वे साधिते पश्चात्क्रेत्रा क्रयसाधनं कर्तव्यमित्युक्तं तदसमाहार्यमूलस्त्वित्यस्मादेव वचनान्मूलदर्शनाभावे वेदितव्यम् । क्रेत्रा क्रये साधितेऽपि क्रीतं द्रव्यं नाष्टिको गृह्णीयात् । तथा च **मनुः** (८. २०२)

अथ मूलमनाहार्यं प्रकाशक्रयशोधितम् ।
अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥

**अनाहार्यं** अनानीय । प्रकाशक्रयशोधितं धनं नाष्टिको लभते क्रेता त्वदण्ड्यो भूत्वा राज्ञाऽवरोधान्मुच्यत इत्यर्थः । यत्तु

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।
दिवा गृहीतं यत्क्रेत्रा स शुद्धो लभते धनम् ॥ इति

**मरीचिवचनं** यच्च

विक्रयाद्यो धनं किंचिद्गृह्णीयात्कुलसन्निधौ ।
क्रयेण स विशुद्धं हि न्यायतो लभते धनम् ॥ इति

**मनु**वचनं (८. २०१) तन्नाष्टिकस्वत्वसाधनाभावविषयम् । क्रयसाधनं साक्षिणैव कर्तव्यमित्याह **कात्यायनः** (६१६)

प्रकाशं च स्वयं कुर्यात्साधुभिर्ज्ञातिभिः स्वकैः ।
न तत्रान्या क्रिया प्रोक्ता दैविकी न च मानुषी ॥

क्रेत्रा मूलोपस्थापनक्रयसाधनयोरकरणे राज्ञा यत्कर्तव्यं तदाह **स एव** (कात्या. ६१९)

अनुपस्थापयन्मूलं क्रयं वाप्यविशोधयन् ।
यथाभियोगं धनिने धनं दाप्यो दमं च सः ॥

क्रेता[1] मूलोपस्थापनं प्रतिज्ञाय तदकृत्वा क्रयं साधयिष्यामीत्यभिधानेन क्रयसाधनमङ्गीकुर्यादित्याह **स एव** (कात्या. ६१७)

---

१ 'क्रेत्रा' इति अ-क.

यदा मूलमुपन्यस्य पुनर्वादी क्रयं वदेत् ।
आहरेन्मूलमेवासौ न क्रयेण प्रयोजनम् ॥

यदा तु नाष्टिकस्य तु स्फुटस्वत्वसाधकं प्रमाणं नास्ति क्रेतुश्च क्रयसाधकं प्रमाणं नास्ति तदा तयोः साधुत्वाद्यपेक्षया विप्रतिपत्तिविषयं धनं साम्येन न्यूनाधिकभावेन वा विभज्य एतावत्तवैतावत्तवेति निर्णयं कुर्यादित्याह **बृहस्पतिः**

प्रमाणहीनवादे तु पुरुषापेक्षया नृपः ।
समन्यूनाधिकत्वेन स्वयं कुर्याद्विनिर्णयम् ॥

**प्रमाणहीनवादे** त्वित्येतदप्यस्वामिविक्रयाख्ये विवादे साक्षिव्यतिरिक्तप्रमाणाभावस्य ज्ञापकं दिव्याङ्गीकरणे प्रमाणहीनताया असम्भवात् । कचित्सप्रमाणकेऽपि विवादे क्रेतृनाष्टिकयोः साम्येन विभज्य तद्धनस्य ग्रहणमाह **स** एव ( कात्या. ६२१–६२२ )

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।
अविज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा मृतः ॥
स्वामी दत्त्वार्धमूल्यं तु प्रगृह्णीत स्वकं धनम् ।

**वणिग्वीथीपरिगतं** वणिग्वीथ्यां प्राप्तम् । अनेन रहःक्रयाभावो दर्शितः । **विज्ञातं राजपूरुषै**रित्यप्रकाशक्रियाभावो दर्शितः । **अविज्ञाताश्रयात्** अविज्ञातस्थानकात् । यद्रहःक्रयादिरहितं सदविज्ञाताश्रयात्क्रीतं मृतविक्रेतृकं वा तदर्धमूल्यं दत्त्वा ग्राह्यमित्यर्थः । उभयोरर्धहानौ कारणमाह **स** एव ( कात्या. ६२२–२३ )

अर्धं द्वयोरपि हृतं तत्र स्याद् व्यवहारतः ॥
अविज्ञातक्रयो दोषस्तथा चापरिपालनम् ।
एतद् द्वयं समाख्यातं द्रव्यहानिकरं बुधैः ॥

**हृतं** नाशितं **व्यवहारतः** स्वापराधात् । **अविज्ञातक्रयः** अविज्ञातस्थानकात् क्रयः । **अपरिपालन**मरक्षणमुपेक्षेति यावत् । **मरीचि**रपि

अविज्ञातनिवेशत्वाद्यत्र मूल्यं न लभ्यते ।
हानिस्तत्र समा कल्प्या क्रेतृनाष्टिकयोर्द्वयोः ॥

यथा अस्वामिनो विक्रेतुर्दण्ड्यत्वं तथाऽस्वामिनः स्वाम्यनुमतिमन्तरेणोपभोक्तुरपि दण्ड्यत्वमाह **नारदः**

उद्दिष्टमेव भोक्तव्यं स्त्रीपशुर्वसुधापि वा ।
[1]अनर्पितं तु यो भुङ्क्ते भुक्तभोगं प्रदापयेत् ॥
अनुद्दिष्टं तु यद् द्रव्यं वासःक्षेत्रगृहादिकम् ।
स्वबलेनैव भुञ्जानश्चौरवद्दण्डमर्हति ॥
अनड्वाहं तथा धेनुं नावं वाह्यं तथैव च ।
अनिर्दिष्टं तु भुञ्जानो दद्यात्पणचतुष्टयम् ॥
दासी नौका तथा धुर्यो बन्धकं नोपभुज्यते ।
उपभोक्ता तु यद् द्रव्यं पण्येनैव विशोधयेत् ॥
दिवसे द्विपणं दासीं धेनुमष्टपणं तथा ।
त्रयोदश त्वनड्वाहमश्वं भूमिं च षोडश ॥
नौकामश्वांश्च धेनुं च लाङ्गलं कार्मिकस्य च ।
बलात्कारेण यो भुङ्क्ते दाप्यश्चाष्टगुणं दिने ॥
उलूखले पणार्धं तु मुसलस्य पणद्वयम् ।
शूर्पस्य च पणार्धं तु जैमिनिर्मुनिरब्रवीत् ॥

**पण्येन** पणसमूहेन । अत्रैको धेनुशब्दो गामाचष्टेऽपरो दोग्ध्रीं महिष्यादिकाम् । **कार्मिकस्य** कर्मो[2]पजीविनः ॥

यदविज्ञातस्वामिकमपहृतं नष्टं वा कथंचिद्राजपुरुषैः प्राप्तं राज्ञे समर्प्यते तत्स्वामी वर्षमध्ये समागतः स्वत्वसाधनं कृत्वा राज्ञः सकाशाद् गृह्णीयादित्याह **याज्ञवल्क्यः** ( २. १७३ )

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्वाक् संवत्सरात् स्वामी हरेत परतो नृपः ॥ इति ।

---

१ 'अनर्पितं तु यो···वाह्यं तथैव च' इत्येष भागो नास्ति ब–आदर्शे. २ अत आरभ्य सम्भूयसमुत्थानप्रकरणे वर्तमानः 'दर्शपूर्णमासादियागविषयमिति. स्मृतिचन्द्रिकाकारः' इत्यन्तो भागो गलितो ब–आदर्शे.

यत्तु अब्दत्रयमध्ये समागतः स्वामी गृह्णीयादित्यर्थप्रतिपादकं

प्रणष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत् ।
अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत् ॥ इति

**मनु**वचनं ( ८.३० ) तच्छ्रुतवृत्तसम्पन्नब्राह्मणविषयम् । राजपुरुषापहृतं द्रव्यं राज्ञा योऽस्य स्वामी स समागत्य गृह्णात्विति बहुजनसमक्षमुद्घोष्य स्थापनीयमित्याह **गौतमः** ( गौ. धर्मसूत्र १०.३६–३७ )– प्रणष्टस्वामिकमधिगम्य राज्ञे प्रब्रूयुर्विख्याप्य संवत्सरं राज्ञा रक्ष्यम्–इति । धनस्वामी तद्धनं गृह्णन् राज्ञे रक्षणनिमित्तं भृतित्वेन तृतीयद्वितीयप्रथमवर्षेषु क्रमेण तद्धनाद् द्वादशांशदशांशषडंशान्दद्यादित्याह **मनुः** (८.३३)

आददीताथ षड्भागं प्रणष्टाधिगतान्नृपः ।
दशमं द्वादशं वापि सतां धर्ममनुस्मरन् ॥ इति ।

**षड्भागः** षष्ठो भागः । वृत्तौ संख्याशब्दानां पूरणार्थत्वमिष्यते इति वचनात् । द्रव्यविशेषस्यापवादमाह **याज्ञवल्क्यः** ( २. १७४ )

पणानेकशफे दद्याच्चतुरः पञ्च मानुषे ।
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥

**एकशफे** अश्वादौ । **पादः** पणचतुर्थांशः । **अजे** छागे पादं दद्यादवौ मेषे च पादं दद्यादित्यर्थः । इति श्रीकोदण्डपरशुरामेति···व्यवहारविवेकोद्द्योतेऽस्वामिविक्रयाख्यव्यवहारपदनिरूपणम् ॥ १८ ॥

अथ सम्भूयसमुत्थानाख्यव्यवहारपदनिरूपणम् । तत्र तत्स्वरूपमाह **नारदः** ( सम्भूय० १ )

वणिक्प्रभृतयो यत्र कर्म सम्भूय कुर्वते ।
तत्सम्भूयसमुत्थानं व्यवहारपदं स्मृतम् ॥

**प्रभृति**शब्दादृत्विक्कर्षकशिल्पिनर्तकचौराणां ग्रहणम् । सह वणिज्यादिकर्मकरणे यादृशा अधिकारिणस्तान्दर्शयति **बृहस्पतिः**

कुलीनदक्षानलसैः प्राज्ञैर्नाणकवेदिभिः ।
आयव्ययज्ञैः शुचिभिः शूरैः कुर्यात्सह क्रियाम् ॥

**क्रियां** वाणिज्यक्रतुकृषिशिल्पसङ्गीतस्तेयरूपाम् । नाणकज्ञानवतां वणिज्यायामधिकारः क्रतौ प्राज्ञानां कुलीनानां शुचीनां चाधिकारः कृषौ चायव्ययज्ञानां शिल्पक्रियायां सङ्गीतक्रियायां च प्राज्ञानां स्तेयक्रियायां शूराणामधिकारः । दक्षत्वानलसत्वे सर्वाधिकारिविशेषणे । दक्षानलस-ग्रहणं सभाग्यव्याध्यपीडितानामप्युपलक्षणम् । नाणकवेदिग्रहणं मूलधन-वतामप्युपलक्षणम् । अत एव (वा?) दक्षालसान्प्रतिषेधता **तेन** मन्द-भाग्यादयोऽपि प्रतिषिद्धाः ।

अशक्तालसरोगार्तमन्दभाग्यनिराश्रयाः ।
वाणिज्याद्याः सहैतैस्तु न कर्तव्या बुधैः क्रियाः ॥

**निराश्रयाः** मूलधनरहिताः । मूलधनांशानुसारेण लाभादयः परि-कल्पनीया इत्याह **नारदः**

समोऽतिरिक्तो हीनो वा तत्रांशो यस्य यादृशः ।
क्षयव्ययौ तथा वृद्धिस्तत्र तस्य तथाविधाः ॥

**बृहस्पति**रपि

प्रयोगं कुर्वते ये तु हेमधान्यरसादिना ।
समन्यूनाधिकैरंशैर्लाभस्तेषां तथाविधः ॥
समो न्यूनोऽधिको वांशो येन क्षिप्तस्तथैव सः ।
व्ययं दद्यात्कर्म कुर्याल्लाभं गृह्णीत चैव हि ॥

गुणप्रधानभावपर्यालोचनया अस्यैको भागोऽस्य भागद्वयमिति यदि सर्वैः समयः कृतस्तदा तदनुसारेण क्षतिलाभौ कल्पनीयावित्याह **याज्ञ-वल्क्यः** (२. २५९)

समवायेन वणिजां लाभार्थं कर्म कुर्वताम् ।
लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ ॥

सम्भूयकारिभिर्यत्कर्तव्यं तदाह **नारदः** (सम्भूय० ४)

भाण्डपिण्डव्ययोद्धारभारसारान्ववेक्षणम् ।
कुर्युस्तेऽव्यभिचारेण समये स्वे व्यवस्थिताः ॥

---

१ 'सभाग्य···नाणकवेदिग्रहणम्' इति भागो नास्ति क–आदर्शे.

**व्यासो**ऽपि

समक्षमसमक्षं वाऽवञ्चयन्तः परस्परम् ।
नानापण्यानुसारास्ते प्रकुर्युः क्रयविक्रयौ ॥
अगोपयन्तो भाण्डानि दद्युः शुल्कं च तेऽध्वनि ।
अन्यथा द्विगुणं दाप्याः शुल्कस्थानाद् बहिःस्थिताः ॥

एकस्यापि सर्वस्यानुमतौ कार्यत्वमाह **बृहस्पतिः**

बहूनां संमतो यस्तु दद्यादेको धनं नरः ।
करणं कारयेद्वापि सर्वैरेव कृतं भवेत् ॥

**करणं** लेख्यादिकम् । एतेषां मिथो विवादे निर्णयोपायमाह **स** एव

परीक्षकाः साक्षिणश्च त एवोक्ताः परस्परम् ।
सन्दिग्धेऽर्थे वञ्चनायां न चेद्विद्वेषसंयुताः ॥

विद्वेषसंयुतत्वे शपथैर्निर्णयः कर्तव्य इत्याह **स** एव

यः कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये ।
शपथैः सोऽपि शोध्यः स्यात्सर्ववादेऽप्ययं विधिः ॥

**सर्ववादे**ऽपि वञ्चनव्यतिरिक्तवादेऽपि । वञ्चकत्वनिश्चये वञ्चको लाभमदत्त्वा दूरीकर्तव्य इत्याह **याज्ञवल्क्यः** (२. २६५)

जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत् ।

**जिह्मं** वञ्चकम् । यस्तु सम्भूयकारिषु भाण्डावेक्षणादि स्वीयं कार्यं कर्तुमसमर्थः स स्वकार्यमन्येन केनचिन्नियुक्तेन पुरुषेण कारयेदित्य**शक्तोऽन्येन कारये**दित्यस्यार्थः । यदि त्वेतेषु कश्चिदितरप्रतिषिद्धकरणेन तदननुज्ञातकरणेन वा अवधानराहित्येन वा किंचिन्नाशयति तदा स तत्पण्यं दद्यात् । यस्तु तेषां मध्ये चोरराजादिकृताद्भयात्पण्यं रक्षति रक्षितस्य पण्यस्य दशमांशं तस्मै दत्त्वावशिष्टं सर्वैर्ग्राह्यम् । तथा च **याज्ञवल्क्यः** (२.२६०)

प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च नाशितम् ।
स तद्दद्याद्विप्लवाच्च रक्षिता दशमांशभाक् ॥

**अनादिष्ट**मननुज्ञातम् । **बृहस्पति**रपि

अनिर्दिष्टो वार्यमाणः प्रमादाद्यश्च नाशयेत् ।
तेनैव तद्भवेद्देयं सर्वेषां समवायिनाम् ॥
राजदैवभयाद्यस्तु स्वशक्त्या परिपालयेत् ।
तस्यांशं दशमं दत्त्वा गृह्णीयुस्तेंऽशतोऽपरम् ॥

यः सम्भूयकारिष्वधर्मर्णादिभ्यः प्रतियाचनादिना साधारणं द्रव्यं साधयत्सु तैः सह न साधयति तस्मै लाभो न देय इत्याह **बृहस्पतिः**

समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत् ।
न याचते च यः कश्चिल्लाभात्स परिहीयते ॥

याचनग्रहणं येन यत्कर्म स्वांशानुरूपं कर्तव्यं तस्याप्युपलक्षणम् । ततश्च तत्कर्माकरणेऽपि लाभहानिर्भवतीति ज्ञातव्यमित्युक्तं **स्मृतिचन्द्रिकायाम्** । दैवराजकृतायां हानौ सर्वेषामप्यंशानुसारेण सा परिकल्पनीया । तथा चोक्तं **तेनैव**

क्षयहानिर्यदा तत्र दैवराजकृता भवेत् ।
सर्वेषामेव सा प्रोक्ता कल्पनीया यथांशतः ॥

**क्षयहानिः** क्षयरूपा हानिः तद्रूपचयार्थो (तदुपचयार्थो ?) यो व्ययस्तद्रूपा । सम्भूयकारिभिर्ऋत्विग्भिर्यत्कर्तव्यं तदाह **मनुः**

ऋत्विजः समवेतास्तु यथा सत्रे निमन्त्रिताः ।
कुर्युर्यथार्हं तत्कर्म गृह्णीयुर्दक्षिणास्तथा ॥

सत्रशब्देनात्र यज्ञमात्रं गृह्यते न तु बहुयजमानकः सत्राख्यो यागविशेषः । तत्र यजमानानामेव होत्रादिकर्मकारित्वेन दक्षिणार्हाणामृत्विजामभावात् । ऋत्विग्भिर्दक्षिणा विभज्य ग्राह्येत्याह **स** एव (मनु ८.२११)

सम्भूय स्वानि कर्माणि कुर्वद्भिरिह मानवैः ।
अनेन क्रमयोगेन कर्तव्यांशप्रकल्पना ॥

**स्वानि कर्माणि** याजमानव्यतिरिक्तानि हौत्रादीनि कर्माणि । एतत्तत्तदंशपरिकल्पनविधानं तस्य द्वादशशतं दक्षिणेति क्रतुसम्बन्धमात्रेण विहितायां दक्षिणायां न तु ऋत्विग्विशेषसम्बन्धित्वेन विहितायाम् ।

अश्वं दद्यान्निविदां शंसे इत्यादितत्प्रतिपादकश्रुतिविरोधापत्तेः । तेन यदृत्विगुल्लेखेन च दक्षिणा विहिता स एव तां गृह्णीयात् । अत एवोक्तं **मनुबृहस्पतिभ्यां** ( मनु ८.२०९ )

रथं हरेदथाध्वर्युर्ब्रह्माधाने च वाजिनम् ।
होता निविद्वरं चाश्वमुद्गाता चाप्यनः क्रये ॥

**निविद्वरं** निविच्छंसनलब्धं वरम् । **उद्गातृ**शब्देनात्रोद्गातृगणमध्यस्थः सुब्रह्मण्यो गृह्यते । **अनः** शकटम् । **क्रये** सोमक्रये । अंशप्रकल्पनाप्रकारमाहतु**र्मनुबृहस्पती** ( मनु ८. २१० )

सर्वेषामर्धिनो मुख्यास्तदर्धेनार्धिनोऽपरे ।
तृतीयिनस्तृतीयांशाश्चतुर्थांशास्तु पादिनः ॥

**सर्वेषां** षोडशानामृत्विजां मध्ये **मुख्याः** गणस्थाद्या होतृब्रह्माध्वर्यूद्गातारोऽर्धिन उक्तदक्षिणायाः किंचिन्न्यूनमर्धं गृह्णीयुः समग्रार्धग्रहणे तु वक्ष्यमाणभागकल्पनाविरोधापत्तेः । **अपरे** द्वितीया मैत्रावरुणब्राह्मणाच्छंसिप्रतिप्रस्थातृप्रस्तोतारस्तदर्धे मुख्यभागस्यार्धेनार्धिनोऽर्धग्राहिणः । **तृतीयिनो**ऽच्छावाकाग्नीध्रनेष्टृप्रतिहर्तारो मुख्यभागतृतीयांशभाजः । **पादिनो**ऽन्त्या ग्रावस्तोतृपोतृन्नेतृसुब्रह्मण्याख्या मुख्यभागस्य चतुर्थांशग्राहिण इत्यर्थः । मुख्यानां चतुर्णां परस्परं विभागसाम्येन । एवं द्वितीयानां तृतीयानां चतुर्थानां च । तदेतत्सर्वमभिप्रेत्योक्तं **बोधायनकारिकायामपि**

पञ्चविंशतिधा कृत्वा वर्गीया दक्षिणाः क्रमात् ।
द्वादशैवाथ षट्कं च चतस्रस्तिस्र एव च ॥

द्वादशाधिकगोशतरूपाया दक्षिणायाः प्रथमतश्चत्वारो भागाः कर्तव्याः । तत्रैको[1] भागो होतृवर्गस्यापरो ब्रह्मवर्गस्यापरोऽध्वर्युवर्गस्यापर उद्गातृवर्गस्य । पुनरेकैकस्य भागस्य पञ्चविंशतिर्भागाः कर्तव्याः । तेष्वाद्यानां होत्रादीनां द्वादशभागा द्वितीयानां षट् तृतीयानां चत्वारश्चतुर्थानां त्रय इत्यर्थः । **कात्यायनसूत्रे**ऽपि ( १०.२.२४–२५ ) गोशतं दक्षिणेति

१ 'तत्रैको भागः···पञ्चविंशतिर्भागाः कर्तव्याः' इति वाक्यद्वयं नास्ति **क**–आदर्शे.

पक्षमाश्रित्यायमेव विकल्पनाप्रकार उक्तः—द्वादश द्वादशाद्येभ्यः षट् षट् द्वितीयेभ्यश्चतस्रश्चतस्रश्च तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्यः—इति । पशुबन्धादौ विषमविभागो नोक्त इति तत्र साम्येन दक्षिणाविभागः समं स्यादश्रुतित्वात्—इति न्यायात् (जै. १०.३.५३) । यद्यृत्विजा कर्मैकदेश एव कृतस्तदा सम्भूयकारिभिरवशिष्टं कर्मान्येन कारयित्वोभाभ्यां कृतकर्मांशानुसारेण दक्षिणा देयेत्याह **मनुः** (८.२०६)

ऋत्विग्यदि वृतो यज्ञे स्वकर्म परिहापयेत् ।
तस्य कर्मानुरूप्येण देयोंशः सहकर्तृभिः ॥

यत्तु दक्षिणादानानन्तरमृत्विक्कर्मैकदेशं त्यजति तदावशिष्टं तद्गणनिविष्टानां मध्ये संनिहितेनान्येन कारयेदित्याह **स** एव (मनु ८.२०७)

दक्षिणासु च दत्तासु स्वकर्म परिहापयेत् ।
कृत्स्नमेव लभेतांशमन्येनैव च कारयेत् ॥

कर्ममध्ये ऋत्विङ्मरणे यत्कर्तव्यं तदाह **नारदः** (सम्भूय० ८)

ऋत्विजां व्यसनेप्येवमन्यस्तत्कर्म निस्तरेत् ।
लभेत दक्षिणाभागं स तस्मात्संप्रकल्पितम् ।

**अन्येन** तद्गणनिविष्टेषु प्रत्यासन्नेन । यत्तु **बृहस्पति**वचनं

एवं क्रियाप्रवृत्तानां यदा कश्चिद्विपद्यते ।
तद्बन्धुना क्रिया कार्या सर्वैर्वा सहकारिभिः ॥ इति,

यच्च **शङ्खलिखित**वचनं—अथ चेदनुप्राप्ते सवने ऋत्विङ् म्रियेत तत्र किं कार्यमिति जिज्ञासा तस्य सगोत्रोऽथ शिष्यो वा तत्कार्यमनुपूरयेत् अथ चेदबान्धवस्ततोऽन्यमृत्विजं वृणुयात्—इति तदवान्तरगणरहितार्त्विक्कर्तृकदर्शपूर्णमासादियागविषयमिति **स्मृतिचन्द्रिकाकारः** । न च दर्शपूर्णमासादिषु याज्ञिकप्रयुक्तसवनशब्दार्थाभावादनुप्राप्ते सवने इत्यादिवचनस्य दर्शपूर्णमासादिविषयत्वं नोपपद्यत इति शङ्क्यं, दान्तस्त्रिषवणस्नायीति (या. ३. ४८) वाक्यवदत्रापि कालवाचिनः सवनशब्दस्य प्रयुक्तत्वात् । सम्भूयकारिभिः कर्षकैः कृषिः कीदृशैः सम्भूय कर्तव्येत्यपेक्षायामाह **बृहस्पतिः**

वाह्यकर्षकबीजाद्यैः क्षेत्रोपकरणेन च ।
ये समानास्तु तैः सार्धं कृषिः कार्या विजानता ॥

**वाह्या** लाङ्गलादिवाहका बलीवर्दाः । आदिशब्देन कृषिसाधनानामन्येषां ग्रहणम् । बलीवर्देषु वर्जनीयान्दर्शयति स एव

कृशातिवृद्धं क्षुद्रं च रोगिणं प्रपलायिनम् ।
काणं खञ्जं च नादद्याद्वाह्यं प्राज्ञः कृषीवलः ॥

क्षेत्रेष्वपि वर्ज्यं दर्शितं तेनैव

पर्वते नगराभ्यासे तथा राजपथस्य च ।
ऊषरं मूषकव्याप्तं क्षेत्रं यत्नेन वर्जयेत् ॥

**पर्वते** पर्वतसमीपे । **कल्पतरौ** तु विवीते इति पठित्वा विवीतशब्देन यवसाद्यर्थेन रक्षितो भूप्रदेश इति व्याख्यातम् । राजपथस्य समीपे इति शेषः । लाभाद्यंशपरिकल्पनं तु सम्भूयवाणिज्यकारिणां सम्भूयकर्षणकारिणां च समानम् । कश्चिदत्रैकस्य हानिमाह स एव

वाह्यबीजात्ययाद्यस्य क्षेत्रहानिः प्रजायते ।
तेनैव सा प्रदातव्या सर्वेषां कृषिजीविनाम् ॥

सम्भूयकारिणामिति शेषः । शिल्पिस्वरूपं दर्शयंस्तेषां सम्भूयकारिणां लाभविभागेंशपरिकल्पनाप्रकारमाह स एव

हिरण्यकुप्यसूत्राणां काष्ठपाषाणचर्मणाम् ।
संस्कर्ता तत्कलाभिज्ञः शिल्पी प्रोक्तो मनीषिभिः ॥
हेमकारादयो यत्र शिल्पं सम्भूय कुर्वते ।
कर्मानुरूपं निर्वेशं लभेरंस्ते यथांशतः ॥

**निर्वेशो** भृतिः । **यथांशतः** इत्यस्यार्थः स्पष्टीकृतः **कात्यायनेन**
( ६३२ )

शिष्यकाभिज्ञकुशला आचार्याश्चेति शिल्पिनः ।
एकद्वित्रिचतुर्भागान्हरेयुस्ते यथोत्तरम् ॥

कश्चिन्मुख्ये भागद्वयमाह **बृहस्पतिः**

हर्म्यं देवगृहं वापि चार्मिकोपस्कराणि च ।
सम्भूय कुर्वतां तेषां प्रमुखो द्व्यंशमर्हति ॥

नर्तकेष्वपि मुख्यस्यांशद्वयभागित्वमतिदिशन् विशेषान्तरमप्याह **स** एव

नर्तकानामेष एव धर्मः सद्भिरुदाहृतः ।
तालज्ञो लभतेऽध्यर्धं गायनास्तु समांशिनः ॥

**अध्यर्ध**मर्धाधिकमेकमंशम् । चोराणां सम्भूयकारिणां लाभविभाग[1]-परिकल्पनाप्रकारमाह **कात्यायनः** (६३३-३४)

परराष्ट्राद्धनं यत्स्याच्चौरैः स्वाम्याज्ञया हृतम् ।
राज्ञे दशांशमुद्धृत्य विभजेरन्यथाविधि ॥
चौराणां मुख्यभूतस्तु चतुरोंऽशांस्ततो हरेत् ।
शूरोंऽशांस्त्रीन्समर्थो द्वौ शेषास्त्वेकैकमेव च ॥

यत्तु राज्ञे षष्ठो भागो दातव्य इत्येतदर्थप्रतिपादकं

स्वाम्याज्ञया तु यच्चौरैः परदेशात्समाहृतम् ।
राज्ञे दत्त्वा तु षड्भागं भजेयुस्ते यथांशतः ॥
चतुरोंऽशान्भजेन्मुख्यः शूरस्त्र्यंशमवाप्नुयात् ।
समर्थस्तु हरेद् द्व्यंशं शेषास्त्वन्ये समांशिनः ॥ इति

**बृहस्पति**वचनं तत्प्रबलतरप्रत्यर्थिराजपरिपालितदुर्गमदेशचोरितधननविषयम् । एतेषु चौरेषु कस्यचिच्चौर्यनिमित्ते बन्धने यत्कर्तव्यं तदाह **कात्यायनः** (६३५)

तेषां चेत्प्रसृतानां[2] यो ग्रहणं समवाप्नुयात् ।
तन्मोक्षणार्थं यद्दत्तं वहेयुस्ते यथांशतः ॥

[3]ऋत्विग्व्यतिरिक्तानां सम्भूयकारिणामिपतंश (? मियमंश) परिकल्पना समयाभावे वेदितव्या । समयकरणे तु समयानुसारेणैवांशपरिकल्पना । तथा च **स** एव (काया. ६३७)

---

१ 'लाभविभागेंऽशपरिकल्पना' इति **ब.** २ 'प्रसृतानां च' इति **अ-क.** ३ इत आरभ्य 'ताम्बूलादिभोगाभाव'-इत्यन्तो भागो गलितो **ब**-आदर्शे.

वणिजां कर्षकाणां च चौराणां शिल्पिनां तथा ।
अनियम्यांशकर्तॄणां सर्वेषामेष निर्णयः ॥

**अनियम्य** अस्यैको भागोऽस्य भागद्वयमित्येवमादिरूपं समयमकृत्वेत्यर्थः ॥ इति श्रीकोदण्डपरशुरामे····व्यवहारविवेकोद्द्योते सम्भूयसमुत्थानाख्यव्यवहारपदनिरूपणम् ॥ १९ ॥

अथ दत्ताप्रदानाख्यव्यवहारपदनिरूपणम् । तत्र तस्य स्वरूपं दर्शयति **नारदः** ( दत्ताप्रदानिक १ )

दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम व्यवहारपदं हि तत् ॥

**असम्य**गशास्त्रीयमार्गाश्रयणेन । अदेयादिभेदेन दानप्रकारस्य चातुर्विध्यमाह **स** एव ( नारद, दत्ता० २ )

अदेयमथ देयं च दत्तं चादत्तमेव च ।
व्यवहारे स विज्ञेयो दानमार्गश्चतुर्विधः ॥

अदेयानि दर्शयति **नारदः** ( दत्ता. ४–५ )

अन्वाहितं याचितकमाधिः साधारणं च यत् ।
निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति ॥
आपत्स्वपि हि कष्टासु वर्तमानेन देहिना ।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ॥

**साधारणं** बहुस्वामिकं रथ्यादिकं न त्वविभक्तस्वामिकं सुवर्णादिकं तस्याविभक्तसर्वानुमतौ दातुं शक्यत्वात् । **बृहस्पति**रपि

सामान्यं पुत्रदारादि सर्वस्वं न्यासयाचितम् ।
प्रतिश्रुतमथान्यस्य न देयं त्वष्टधा स्मृतम् ॥

**सामान्यं** साधारणम् । **प्रतिश्रुतं** वाचा दत्तम् । अत्र यत्पुत्रस्यादेयत्वमुक्तं तदेकपुत्रविषयं तद्दाने सन्ततिविच्छेदापत्तेः । अत एवाह **वसिष्ठः** ( वसिष्ठधर्मसूत्र १५. १–४ )–शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतो न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषाम्–इति । मात्रापि

पत्यनुज्ञातया देय इत्याह **स** एव ( वसिष्ठधर्मसूत्र १५. ५ )—न तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्तुः—इति । स्त्रीधनमप्यदेयमित्याह **दक्षः** ( ३. १९–२० )

सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम् ।
अन्वाहितं च निक्षेपः सर्वस्वं चान्वये सति ॥
आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः ।
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः ॥

अदेयदातृप्रतिग्राहिणोर्दण्डमाह **मनुः**

अदेयं यस्तु गृह्णाति यश्चादेयं प्रयच्छति ।
तावुभौ चोरवच्छास्यौ दाप्यौ चोत्तमसाहसम् ॥ इति ।

अदेयग्रहणमदत्तस्याप्युपलक्षणम् । अत एव **नारदः** ( दत्ता. १२ )

गृह्णात्यदत्तं यो मोहाद्यश्चादत्तं प्रयच्छति ।
दण्डनीयावुभावेतौ धर्मज्ञेन महीक्षिता ॥ इति ।

देयमाह **याज्ञवल्क्यः** ( २. १७५ )

स्वकुटुम्बाविरोधेन[1] देयं दारसुतादृते ।

**कुटुम्बाविरोधेन** कुटुम्बानुपरोधेन । कुटुम्बभरणावशिष्टं स्वं देयमित्यर्थः । **नारदो**ऽपि ( दत्ता. ६ )

कुटुम्बभरणाद् द्रव्यं यत्किंचिदतिरिच्यते ।
तद्देयमुपहृत्यान्यद्[2] ददद्दोषमवाप्नुयात् ॥

**अन्यदुपहृत्य** भरणीयं कुटुम्बमुपरुध्य । कुटुम्बस्योपहतिर्भोजनाच्छादनराहित्यनिमित्ता न तु ताम्बूलादिभोगाभावनिमित्ता । अत एव **बृहस्पतिः**

कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते ।

**भक्तं** भोजनं **वसन**माच्छादनम् । भक्तवसनाद्यदतिरिच्यते तद्देयमित्यन्वयः । कुटुम्बपर्याप्ते गृहक्षेत्राद्यन्तरे सति गृहक्षेत्रादिकमपि देयमित्याह **स** एव

---

१ 'स्वं कुटुम्बाविरोधेन' इति क. २ 'तद्देयमनुहपत्यान्यद्' इति क.

सप्तागमाद्गृहक्षेत्राद्यत्क्षेत्रं प्रदीयते ।
पित्र्यं वाथ स्वयंप्राप्तं तद्दातव्यं विवक्षितम् ॥

**सप्तागमा**त्पूर्वोक्तसप्तविधागमयुक्तात । **क्षेत्र**ग्रहणमुपलक्षणम् । **पित्र्यं** वंशपरम्पराप्राप्तम् । **स्वयंप्राप्तं** स्वयमर्जितम् । पित्र्यस्वयंप्राप्तयोरुपादानं क्रीतादीनामप्युपलक्षणम् । पित्र्यं वा स्वयंप्राप्तं वा यद्गृहक्षेत्रादिकं प्रदीयते तत् सप्तागमान्विताद्गृहक्षेत्रादुद्धृत्य दातव्यमिति शास्त्रे निरूपितमित्यर्थः । अत्र सप्तागमाद्गृहक्षेत्रादित्यभिधानं कुटुम्बपर्याप्ते सागमके गृहक्षेत्राद्यन्तरे सत्येव गृहक्षेत्रादिदानं नान्यथेत्येवमर्थम् ।

यत्तु

सर्वस्वं गृहवर्जं तु कुटुम्बभरणादिकम् ।
यद् द्रव्यं तत्स्वकं देयमदेयं स्यादतोऽन्यथा ॥ इति

**कात्यायन**वचनं (६४०) तद्गृहाद्यन्तराभावविषयम् । स्वयंप्राप्तादिषु विशेषान्तरमाह **स** एव

स्वेच्छादेयं स्वयंप्राप्तं बन्धाचारेण बन्धकम् ।
वैवाहिके क्रमायाते सर्वदानं न विद्यते ॥
सौदायिकं क्रमायातं शौर्यप्राप्तं च यद्भवेत् ।
स्त्रीज्ञातिस्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयात् ॥ इति ।

**स्वयंप्राप्तं स्वेच्छादेयं** भ्रात्राद्यनुज्ञामन्तरेणापि देयम् । **बन्धकं बन्धाचारे**णाधिरूपेण देयम्[1] । विवाहप्राप्तं वंशपरम्पराप्राप्तं न समग्रं दातव्यं किं त्वेकदेशस्यैव तत्र दानम् । **सौदायिकं** वैवाहिकं यस्याः परिणयने लब्धं तया स्त्रियानुज्ञातमेव दातव्यम् । वंशपरम्पराप्राप्तमविभक्तधनैर्भ्रातृभिरनुज्ञातमेव दातव्यम् । सेवकेन युद्धप्राप्तं स्वामिनानुज्ञातमेव देयमित्यस्य वाक्यकदम्बकस्यार्थः । यत्त्वाधेरदेयत्वं प्रागुक्तं तदाधिरूपेतररूपेणेति न विरोधः[2] । क्रमागतस्थावरदाने विभक्तधनभ्रात्राद्यनुमतिरपेक्षितेत्युक्तमर्थं हेत्वभिधानेन द्रढयति स एव

---

१ 'बन्धाचारेणापि देयम्' इति अ. २ 'रूपेणेति मताद्विरोधः' अ-क.

विभक्ता अविभक्ता वा सपिण्डाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये ॥

**आधमन**माधीकरणम् । विभक्ता अपि स्थावरे समाः किमुताविभक्ता इति कैमुतिकन्यायप्रदर्शनार्थं विभक्तग्रहणं न तु विभक्तानां तत्र स्वामित्वमस्तीति प्रतिपादनार्थम् । विभागस्य वैयर्थ्यापत्तेः । स्वार्जितमपि स्थावरं दासादिकं च पुत्रेषु प्राप्तव्यवहारेषु तदनुमत्यैव दातव्यम् । तथा च **व्यासः**

स्थावरं द्विपदं चैव यद्यपि स्वयमार्जितम् ।
असम्भूय सुतान्सर्वान्न दानं न च विक्रयः ॥
ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः ।
वृत्तिं च तेऽभिकाङ्क्षन्ति न दानं न च विक्रयम् ॥

**ये जाता येऽप्यजाता** इति श्लोकः पूर्वश्लोकोक्तस्यार्थस्य कैमुतिकन्यायप्रदर्शनेन दृढीकरणार्थः । आपत्काले कुटुम्बपोषणार्थमावश्यकपितृश्राद्धाधार्य[1]कन्याविवाहादिधर्मकार्यार्थं पुत्रभ्रात्राद्यनुमतिरहितोऽपि क्रमागतस्थावरदानादिकं कुर्यात् । तथा च **नारदः**

एकोऽपि स्थावरे कुर्याद्दानाधमनविक्रयम् ।
आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः ॥ इति ।

तुभ्यमिदं दास्यामीति यद्यस्मै प्रतिश्रुतं तत्तस्मै[2] अवश्यं दातव्यमित्याह **याज्ञवल्क्यः** ( २. १७६ )

देयं प्रतिश्रुतं चैव दत्त्वा नापहरेत्पुनः । इति ।

यः प्रतिश्रुतं न प्रयच्छति दत्तं चापहरति तस्य दोषमाह **हारीतः**

प्रतिश्रुतार्थादानेन दत्तस्याच्छेदनेन च ।
विविधान्नरकान्याति तिर्यग्योनौ च जायते ॥

---

१ 'पितृश्रद्धापथ्यकन्याविवाहा०' इति अ, 'पितृश्राद्धायर्थ्यकन्याविवाहा०' इति क.
२ 'तत्तस्मादवश्यं' इति अ-क.

वाचैव यत्प्रतिज्ञातं कर्मणा नोपपादितम् ।
ऋणं तद्धर्मसंयुक्तमिह लोके परत्र च ॥

प्रतिश्रुतमददद्राज्ञा तद्दाप्यो दण्ड्यश्चेत्याह **कात्यायनः** ( ६४२ )

स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम् ।
न दद्यादृणवद् दाप्यः प्राप्नुयात्पूर्वसाहसम् ॥

**मत्स्यपुराणे** ( २२७. ८ ) तु सुवर्णं दण्ड्य इत्युक्तं

प्रतिश्रुत्याप्रदातारं सुवर्णं दण्डयेन्नृपः । इति ।

अनयोर्दण्डयोरपराधतारतम्येन व्यवस्था । प्रतिश्रुतमपि स्वधर्मपरित्यागिने न देयमित्याह **गौतमः** ( गौतमधर्मसूत्र ५. २१ )—प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्—इति ।

दत्तं सप्तविधमदत्तं षोडशविधमित्याह **नारदः** ( दत्ता. ३ )

दत्तं सप्तविधं प्रोक्तमदत्तं षोडशात्मकम् ।

तत्र दत्तभेदान्दर्शयति **स** एव ( नारद, दत्ता. ८ )

पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः ।
स्त्रीशुल्कानुग्रहार्थं च दत्तं दानविदो विदुः ॥

**पण्यमूल्यं** क्रीतद्रव्यस्य मूल्यम् । **भृतिर्**वेतनम् । **तुष्ट्या** सपरितोषेण बन्दिप्रभृतिभ्यो दत्तमिति शेषः । **स्नेहात्** प्रीत्या दुहित्रादिभ्यो दत्तम् । **प्रत्युपकारतः** कृतोपकाराय प्रत्युपकारेण दत्तम् । **स्त्रीशुल्कं** विवाहार्थं कन्याबन्धुभ्यो यद्दत्तम् । **अनुग्रहार्थं** परोपकारार्थं धर्मार्थं दत्तमिति यावत् । एतत्सप्तविधं दत्तम् । दानानन्तरमनपहर्तव्यमित्यर्थः । अदत्तानि दर्शितानि **तेनैव** ( नारद, दत्ता. ९—११ )

अदत्तं तु भयक्रोधशोकवेगरुगन्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥
बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवर्जितम् ।
कर्ता ममायं कर्मेति प्रतिलाभेच्छया च यत् ॥

अपात्रे पात्रमित्युक्ते कार्ये वाधर्मसंज्ञिते ।
यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतम् ॥

**रुक्** उपतापः । भयादिकृतो य उपतापस्तदन्वितैरित्यन्वयः । **अपवर्जितं** दत्तम् । बालादिभिरपवर्जितमित्यन्वयः । भयोपतप्तेन बन्दिग्राहिभ्यो दत्तं क्रोधोपतप्तेन क्रोधविषयभूतानामविभक्तधनानां पुत्रभ्रात्रादीनां व्ययार्थमितरेभ्यो दत्तं पुत्रादिवियोगजनितशोकवेगोपतप्तेन दत्तम् । **उत्कोचेन** राजपुरुषेभ्यो दत्तम् । **परीहासे**नोपहासेन दत्तम्[1] । **व्यत्यासेन** एकः स्वद्रव्यमन्यस्मै ददाति अन्योऽपि तस्मै ददातीति दानव्यत्यासेन दत्तम् । **छलयोगतः** शतदानमभिसन्धाय सहस्रमिति परिभाष्य दत्तम् । प्रच्छन्नतया गूहितुं परप्रतारणार्थं दत्तं **वाक्छल**[2]**योग**दत्तम् । **बालेन** अप्राप्तव्यवहारेण दत्तं **मूढेन** कर्तव्याकर्तव्यविवेकशून्येन दत्तम् । **अस्वतन्त्रेण** पुत्रदासादिना दत्तम् । **आर्तेन** रोगाभिभूतेन दत्तम् । **मत्तेन** धत्तूरादिभक्षणादिना मत्तेन दत्तम् । **उन्मत्तेन** वातपित्ताद्यतिरेककृतोन्मादग्रस्तेन दत्तम् । **अयं मम कर्म करिष्यतीति प्रतिलाभेच्छया** प्रतिलाभमकुर्वाणाय दत्तम् । **अपात्राय** अयोग्याय योग्योऽहमित्युक्तिमात्रेण दत्तम् । यज्ञादि सत्कर्म करिष्यामीत्यभिधाय धनं गृहीत्वा द्यूतादिकेऽसत्कर्मणि विनियुञ्जानाय दत्तम् । इत्येवं षोडशविधमपि प्रत्याहर्तव्यत्वाददत्तं स्मृतमित्यर्थः । एवंविधानां प्रत्याहर्तव्यमुक्तं **कात्यायनेन** ( ६४७–६४९ )

कामक्रोधास्वतन्त्रार्तक्लीबोन्मत्तप्रमोहितैः ।
व्यत्यासपरिहाराय यद् दत्तं तत्पुनर्हरेत् ॥
या तु कार्यस्य सिध्यर्थमुत्कोचा स्यात्प्रतिश्रुता ।
तस्मिन्नपि प्रसिद्धेऽर्थे न देया स्यात्कथंचन ॥
अथ प्रागेव दत्ता स्यात्प्रतिदाप्यस्ततो बलात् ।
दण्डं चैकादशगुणमाहुर्गार्गीयमानवाः ॥

---

१ 'परीहासेनोपहासेन दत्तम्' इति नास्ति अ–क–आदर्शयोः. २ 'परप्रतारणार्थवाक्छलयोगदत्तम्' इति अ–क.

उत्कोचायाः स्वरूपं दर्शितं **तेनैव** ( कात्या. ६५०-६५१ )

स्तेयसाहसिकोद्वृत्तपारदारिकशंसनात् ।
दर्शनाद् वृत्तनष्टस्य तथासत्यप्रवर्तनात् ॥
प्राप्तमेतैस्तु यत्किञ्चिदुत्कोचाख्यं तदुच्यते ।

त्वया मह्यमियतो द्रव्यस्यादानेऽहं त्वत्कृतं स्तेयादिकं प्रकाशयिष्यामीति **वृत्तनष्टाय** क्रूराय कारागाराधिकारिणे निवेद्य निरोधयिष्यामीति वा कथनेन भयमुत्पाद्यासत्यमपि त्वत्कार्यार्थं वक्ष्यामीत्यभिधानेन लोभमुत्पाद्य वा यत्प्राप्तं तदुत्कोचाख्यमित्यर्थः । अत्रोत्कोचदातुर्दण्डाभावकथनपूर्वकमुत्कोचदापकग्रहीत्रोर्दण्डमाह **स** एव ( कात्या. ६५१ )

न दाता तत्र दण्ड्यः स्यान्मध्यस्थश्चैव दोषभाक् । इति ।

**मध्यस्थः** उत्कोचदापकः । चकारादुत्कोचग्राहकश्च । **बृहस्पति**-रपि किञ्चित्प्रत्याहर्तव्यं दर्शयति

प्रतिलाभेच्छया दत्तमपात्रे पात्रशङ्कया ।
कार्ये चाधर्मसंयुक्ते स्वामी तत्पुनराप्नुयात् ॥

सोपाधिकं यद् दत्तं तदपि प्रत्याहर्तव्यमित्याह **मनुः** ( ८.१६५ )

योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यस्य वाप्युपधिं[1] पश्येत् तत्सर्वं विनिवर्तयेत् ॥

**योगः** उपाधिः । येनागमिनोपाधिविशेषेणाधिविक्रयदानप्रतिग्रहाः कृतास्तदुपाधिविगमे ते सर्वेपि निवर्तनीया इत्यर्थः । आर्तदत्तस्यादत्तत्वं यदुक्तं तद्धर्मकार्यव्यतिरिक्तविषयं ज्ञातव्यम् । अत एव **कात्यायनः** ( ६५४ )

स्वस्थेनार्तेन वा दत्तं श्रावितं धर्मकारणात् ।
अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥

इति कोदण्डपरशुरामे……व्यवहारविवेकोद्योते दत्ताप्रदानाख्यव्यवहारपदनिरूपणम् ॥ २० ॥

---

1 'यस्य चाप्यवधिम्' इति अ.

अथ **नारदो**क्तस्याभ्युपेत्याशुश्रूषाख्यव्यवहारपदस्य निरूपणम्। तत्र तत्स्वरूपं दर्शयति **नारदः** (अभ्यु. १)

अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते।
अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते॥

**शुश्रूषा** आज्ञाकारित्वम्। शुश्रूषकः पञ्चविधः शिष्योऽन्तेवासी भृतकोऽधिकर्मकृद्दास इति। तेषु दासव्यतिरिक्ताश्चत्वारः कर्मकरा इत्युच्यन्ते। ते शुभकर्मकृतः। दासा गृहजातादिभेदेन पञ्चदशभेदास्ते त्वशुभकर्मकारिणः। तदेतत्सर्वमाह **स** एव (नारद, अभ्यु. २-७)

शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः।
चतुर्विधः कर्मकरस्तेषां दासास्त्रिपञ्चकाः॥
शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत्।
एते कर्मकरा ज्ञेया दासास्तु गृहजादयः॥
सामान्यमस्वतन्त्रत्वं तेषामाहुर्मनीषिणः।
जातिकर्मकृतस्तूक्तो विशेषो वृत्तितस्तथा॥
कर्मापि द्विविधं ज्ञेयमशुभं शुभमेव च।
अशुभं दासकर्मोक्तं शुभं कर्मकृतां स्मृतम्॥
गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम्।
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम्॥
इष्टतः स्वामिनश्चाङ्गैरुपस्थानमथान्ततः।
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम्॥

**तेषा**मिति निर्धारणे षष्ठी। **त्रिपञ्चकाः** पञ्चदश। **शिष्यो** वेदविद्यार्थी। **अन्तेवासी** शिल्पविद्यार्थी। वेतनं गृहीत्वा यः कर्म करोति स **भृतकः**। **अधिकर्मकृत्** कर्म कुर्वतामधिष्ठाता। **वृत्तितः** जीवनोपायतः। **अवस्करः** संमार्जितधूलिराशिस्थानम्। **शोधनशब्दस्य** गृहद्वारादिभिश्चतुर्भिः सम्बन्धः। **उज्झनं** त्यागः। **अन्ततः स्वामिनः इष्टतः** स्वाम्याज्ञया मूत्रपुरीषादिस्थले निर्माजनार्थ**मङ्गैरुपस्थानं**

हस्ताद्यर्पणम् । शिष्यान्तेवासिदासानां जात्यादिकृतो विशेषो भवति । तत्र शिष्याणां ब्राह्मणक्षत्रियवैश्यान्यतमत्वमेव तेषामेव वेदग्रहणेऽधिकारादिति जातिकृतो विशेषः स्पष्टः । कर्मकृतं तु विशेषं दर्शयति **बृहस्पतिः**

विद्या त्रयी समाख्याता ऋग्यजुःसामलक्षणा ।
तदर्थं गुरुशुश्रूषां प्रकुर्याच्छास्त्रचोदिताम् ॥

**नारदो**ऽपि (अभ्यु. ८, १५)

आ विद्याग्रहणाच्छिष्यः शुश्रूषेत्प्रयतो गुरुम् ।
तद्वृत्तिर्गुरुदारेषु गुरुपुत्रे तथैव च ॥ इति ।
समावृत्तश्च गुरवे प्रदाय गुरु[१]दक्षिणाम् ।
प्रतीयात्स्वगृहानेषा शिष्यवृत्तिरुदाहृता ॥

**वृत्ति**रत्र धर्मः । शिष्याणां कर्मान्तर**माचारविवेकोद्द्योते** निरूपितमिति नेह प्रपञ्च्यते । वृत्तिकृतं विशेषं दर्शयति **मनुः** (२.४८-४९)

प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् ।
प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि ॥
भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः ।
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥ इति ।

अन्तेवासिनां जातिकर्मकृतं विशेषं दर्शयति **बृहस्पतिः**

विज्ञानमुच्यते शिल्पं हेमकुप्यादिसंस्कृतिः ।
[२]नृत्यादिकं च तत्प्राप्तुं कुर्यात्कर्म गुरोर्गृहे ॥

**आदि**शब्देन कुम्भनिर्माणादीनि कुलालादिकर्माणि गृह्यन्ते । कटकमुकुटनिर्माणादिविषयं विज्ञानं शिल्पमुच्यते तत्प्राप्त्यर्थं गुरोर्गृहे कटकनिर्माणादिकं कर्म कुर्यादित्यर्थः । एतेनान्तेवासिनां स्वर्णकारादिजातिकृतः कटकनिर्माणादिकर्मकृतश्च विशेष इत्युक्तम् । कर्मकृतं वृत्तिकृतं च विशेषं तेषां दर्शयति **नारदः** (अभ्यु. १६-१७)

---

१ 'शुचिदक्षिणाम्' इति अ-क. २ 'भृत्यादिकं' इति अ-क.

स्वशिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया ।
आचार्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम् ॥
आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् ।
न चान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत् ॥

**अन्ते** समीपे । **अन्यत्** शिल्पव्यतिरिक्तं कर्म । एतेन कटकादिनिर्माणकृतफलसमर्पणमेव तस्य शुश्रूषेति दर्शितम् । **स्वगृहे दत्तभोजनमिति** वृत्तिर्दर्शिता । आचार्येण शिल्पशिक्षाव्यतिरिक्तं कर्म यद्यन्तेवासी कार्यते तदा दण्डमाह **कात्यायनः** ( ७१३ )

यस्तु न ग्राहयेच्छिल्पं कर्माण्यन्यानि कारयेत् ।
प्राप्नुयात्साहसं पूर्वं तस्माच्छिष्यो निवर्तते ॥

**शिष्यो**ऽत्रान्तेवासी । अन्तेवासिनैतावन्तं कालं त्वद्गृहे शिल्पशिक्षार्थं स्थास्यामीति यावान्कालः परिभाषितस्तावन्तं कालं **लब्धविद्येनापि** गुरोर्गृहे स्थातव्यम् । तथा च **नारदः** ( अभ्यु. १९ )

शिक्षितोऽपि कृतं कालमन्तेवासी समापयेत् ।
तत्र कर्म च यत्कुर्यादाचार्यस्यैव तत्फलम् ॥

**याज्ञवल्क्यो**ऽपि ( २.१८४ )

कृतशिल्पोऽपि निवसेत्कृतकालं गुरोर्गृहे ।
अन्तेवासी गुरुप्राप्तभोजनस्तत्फलप्रदः ॥

अन्तेवासिनो दौःस्थ्ये दण्डमाह **नारदः** ( अभ्यु. १८ )

शिक्षयन्तमदुष्टं च यस्त्वाचार्यं परित्यजेत् ।
बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति ॥

**वासयितव्यः** स्थापनीय आचार्यसमीप इति शेषः । **वधो**ऽत्र ताडनं न मारणं तस्याल्पापराधत्वात् । शिल्पप्राप्त्यनन्तरकर्तव्यमाह **स एव** ( नारद, अभ्यु. २० )

गृहीतशिल्पः समये कृत्वाचार्यं प्रदक्षिणम् ।
शक्तितश्चानुमान्यैनमन्तेवासी निवर्तते ॥

भृतकाधिकर्मकृतोस्तु न जात्यादिकृतो विशेषः। भृतिभेदाद्भृतकभेदानाह **बृहस्पतिः**

योभुङ्क्ते परदासीं तु स ज्ञेयो वनिताभृतः।
कर्म तत्स्वामिनः कुर्याद्यथान्योऽर्थभृतो नरः॥
बहुधार्थभृतः प्रोक्तस्तथा भागभृतोऽपरः।

यः परदास्युपभोगेन तत्स्वामिनः कर्म करोति स **वनिताभृतः**। यो धनग्रहणेन कर्म करोति **सोऽर्थभृतः**। [1]यः परिकल्पितांशग्रहणेन कर्म करोति स **भागभृतः**। भागभृतस्य द्वैविध्यमाह **स एव**

द्विप्रकारो भागभृतः कृषिगोजीविनां स्मृतः।
जातसस्यात्तथा क्षीरात्स लभेत न संशयः॥

**कृषिगोजीविनामिति** निर्धारणे षष्ठी। कर्षको जातसस्याद्गोपालः क्षीराद्भागं लभेतेत्यर्थः। भृतकानामुत्तममध्यमाधमभावेन पुनस्त्रैविध्यमाह **स एव**

हीनमध्योत्तमत्वं च सर्वेषामेव चोदितम्।
आयुधी तूत्तमः प्रोक्तो मध्यमस्तु कृषीवलः॥
भारवाहोऽधमः प्रोक्तस्तथा च गृहकर्मकृत्।

**कृषीवलः** कर्षकः। एतेषां शक्तिभक्त्य[2]नुसारेण भृतिः परिकल्पनीयेत्याह **नारदः** (अभ्यु. २२)

भृतकस्त्रिविधो ज्ञेय उत्तमो मध्यमोऽधमः।
शक्तिभक्[3]त्यनुरूपा स्यादेषां कर्माश्रया भृतिः॥

भृतककर्तव्यमाह **बृहस्पतिः**

दिनमासार्धषण्मासत्रिमासश्च भृतस्तथा।
कर्म कुर्यात्प्रतिज्ञातं लभते परिभाषितम्॥

एतावन्तं कालमहमेतत्कर्म करिष्यामीति प्रतिज्ञातं कर्म तावन्तं कालं

---

१ 'यः परिकल्पितांश ··· द्विप्रकारो भागभृतः' इति भागो नास्ति अ-आदर्शे.
२ 'शक्तिभक्तानुसारेण' इति ब-क. ३ 'भक्तानुरूपा' इति ब.

कुर्यात् । एवं च परिकल्पिते (तां ?) भृतिं लभत इत्यर्थः । अधिकर्मकृतः स्वरूपं दर्शयति **नारदः** (अभ्यु. २४)

सर्वेष्वधिकृतो यः स्यात्कुटुम्बस्य तथोपरि ।
सोऽधिकर्मकृतो ज्ञेयः स च कौटुम्बिकः स्मृतः ॥

**सर्वेषु** भृतकेष्व**धिकृतो**ऽधिष्ठातृत्वेन कृतस्**तथा कुटुम्बस्योपरि** अधिकृत इत्यनुषङ्गः । सर्वभृतकेषु अधिष्ठातृत्वेन नियुक्तो यः सोऽधिकर्मकृतो ज्ञेयः । कुटुम्बरक्षणाय व्ययकारित्वेन स्थापितो यः स तु कौटुम्बिक इत्यर्थः । दासशब्दव्युत्पत्तिप्रदर्शनव्याजेन दासस्वरूपं दर्शयति **कात्यायनः** (७१५)

स्वतन्त्रस्यात्मनो दानाद् दासत्वं दारवद्भृगुः ।

यथा पत्युः सम्भोगार्थं स्वशरीरसमर्पणाद्भार्याया दारत्वं तथा स्वतन्त्रस्यात्मनोऽत्यन्तपराधीनीकरणरूपाद् दानाद् दासत्वमिति **भृगुरा**हेत्यर्थः । एतेनात्यन्तपराधीनाः शुश्रूषका दासा इति तेषां स्वरूपं दर्शितम् । दासानां जातिकृतविशेषं दर्शयति **स** एव (कात्या. ७१५)

त्रिषु वर्णेषु विज्ञेयं दास्यं विप्रस्य न क्वचित् ।

तेष्वपि दासत्वमानुलोम्येनैव कर्तव्यमित्याह **स** एव (कात्या. ७१६)

वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ।
राजन्यवैश्यशूद्राणां त्यजतां हि स्वतन्त्रताम्[2] ॥

एतच्च स्वधर्मत्यागिव्यतिरिक्तविषयम् । तथा च **नारदः** (अभ्यु. ३९)

वर्णानां प्रातिलोम्येन दासत्वं न विधीयते ।
स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता ॥

एतच्च प्रव्रज्यावसितो हीनवर्णस्यापि दासो भवतीत्यभिधानं क्षत्रियवैश्यप्रव्रज्यावसितविषयं न तु ब्राह्मणप्रव्रज्यावसितविषयं तस्य निर्वास्यत्वाभिधानेन दासत्वाभावात् । निर्वास्यत्वं च तस्योक्तं **कात्यायनेन** (७२१)

---

१ 'परिकल्पितो' इति **ब-क.** २ 'स्वतन्त्रता' इति **अ-क.**

प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः ।
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रविड्भृगुः ॥

**कारयेद्**राजेति शेषः । क्षत्रं च विट् च क्षत्रविट् । सर्वो द्वन्द्वो विभाषयैकवद्भवतीति[1] वचनादेकवद्भावः । निर्वासनं च श्वपदेनाङ्कयित्वा कर्तव्यमित्याहतुर्**दक्षनारदौ**

पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
श्वपदेनाङ्कयित्वा तु राजा शीघ्रं प्रवासयेत् ॥

न चैवं सति

राज्ञ एव तु दासः स्यात्प्रव्रज्यावसितो नरः ।
न तस्य प्रतिमोक्षोऽस्ति न विशुद्धिः कथंचन ॥

इति **नारदेन** (अभ्यु. ३५) प्रव्रज्यावसितो राज्ञ एव दासो नान्यस्येत्यभिधानात्स्वधर्मत्यागिनोऽन्यत्रेति यत्तेनैवोक्तं तन्निर्विषयं स्यादिति वाच्यं, राजशब्देनात्र प्रजापालकस्य ग्रहणात्प्रजापालकत्वं च राजाधिकृते वैश्यादावपि सम्भवाद्यः क्षत्रियः प्रव्रज्यावसितः स हीनवर्णस्यापि प्रजापालस्य वैश्यस्य दासो भवतीति प्रतिपादनार्थत्वात् । दारवद्दासतेति नारदवचनेन यथा सवर्णा[2] हीनवर्णा वा भार्या तथा सवर्णो हीनवर्णो वा दासो भवतीति प्रतिपादनात् । ब्राह्मणस्य[3] ब्राह्मणो दासो भवतीति प्राप्तौ तदपवदति कात्यायनः (७१७)

सवर्णोऽपि तु विप्रं तु दासत्वं नैव कारयेत् ।

ब्राह्मणः स्वेच्छयाविष्टो ब्राह्मणसेवां कुर्वन्नपि अशुभं कर्म न कुर्यादित्याह **स** एव (कात्या. ७१९)

शीलाध्ययनसम्पन्ने तदूनं कर्म कामतः ।
तत्रापि नाशुभं किञ्चित्प्रकुर्वीत द्विजोत्तमः ॥

यस्मात्परोपकारः कर्तव्य इति विधिस्तस्मात्कारणादूनं हीनमपि भार-

---

१ 'विभाष्यैकवद्भवतीति' अ-क; 'विभाषैकवद्भवतीति' ब. २ 'सवर्णा…तथा' इति नास्ति क-आदर्शे. ३ 'ब्राह्मणस्य…ब्राह्मणः स्वेच्छयाविष्टो' इति भागो नास्ति ब-आदर्शे.

वहनादिकं कर्म **कामतो** वेतनादानमन्तरेण स्वेच्छया परोपकारार्थं कुर्यादिति पूर्वार्धस्यार्थः । **तत्रापि** तेष्वपि हीनकर्मसु **यदशुभं** कर्म गृहद्वारशोधनादिकं तन्न कुर्यादित्यर्थः । अथवा **तदूनमि**त्येकं पदं **तदूनं** श्रुताध्ययनहीनम् । अस्मिन्पक्षे **कारये**दिति पूर्ववाक्यस्थितस्यानुषङ्गः । क्षत्रियवैश्ययोर्दासभावेन प्राप्तयोर्ब्राह्मणस्य स्वामिनो यत्कर्तव्यं तदाह **मनुः** ( ८. ४११ )

क्षत्रियं चैव वैश्यं च ब्राह्मणो वृत्तिकर्शितौ ।
विभृयादानृशंस्येन स्वानि कर्माणि कारयेत् ॥

**आनृशंस्येन** अक्रौर्येण । **वृत्तिकर्शिता**वित्यनेन क्षत्रियवैश्ययोर्वृत्त्यन्तरासम्भव एव दासत्वाङ्गीकारः कार्यो न तु गतिसम्भव इति सूचितम् । बलाद्दासीकरणे दण्डमाह **स** एव (मनु. ८. ४१२)

दास्यं तु कारयेल्लोभाद् ब्राह्मणः संस्कृतान् द्विजान् ।
अनिच्छतः प्राभवत्वा (त्या ?) द्राज्ञा दण्ड्यः शतानि षट् ॥

**प्राभवत्वात्** प्रभुत्वात् । साधारणादिभ्यः स्वार्थे अञ् वक्तव्य इति वचनादञ् । **द्विजाति**ग्रहणेन शूद्रस्य बलाद् दासीकरणे न दण्ड इति दर्शितम् । अत एवोक्तं **तेनैव** (मनु ८. ४१३)

शूद्रं तु कारयेद् दास्यं क्रीतमक्रीतमेव वा ।
दास्यायैव हि सृष्टो[१]ऽयं स्वयमेव स्वयंभुवा ॥

ब्राह्मण्यादिषु दासीकरणे दण्डमाह **कात्यायनः** (७२६–७२८)

आदद्याद् ब्राह्मणीं यस्तु विक्रीणीयात्तथैव च ।
राज्ञा तदकृतं कार्यं दण्ड्याः स्युः सर्व एव ते ॥
कामात्तु संश्रितां यस्तु कुर्याद्दासीं कुलस्त्रियम् ।
संक्रामयेत्तथान्यत्र दण्ड्यस्तच्चाकृतं भवेत् ॥
बालधात्रीमधात्रीं च दासीमिव भुनक्ति यः ।
परिचारकपत्नीं वा प्राप्नुयात्पूर्वसाहसम् ॥

---

१ 'सृष्टोसौ' इति ब.

**तत्कार्यमकृतं** निवर्तनीयमित्यर्थः । **ते राज्ञा दण्ड्याः** स्युरित्यन्वयः । **विष्णुः** (विष्णुधर्मसूत्र ५. १५१)—यस्तूत्तमं वर्णं दास्ये नियोजयति तस्योत्तमसाहसो दण्डः ।

कश्चिद्दासीविक्रयणे दण्डमाह **कात्यायनः** (७२९)

विक्रोशमानां यो भक्तां दासीं विक्रेतुमिच्छति ।
अनापदिस्थः शक्तः सन्प्राप्नुयाद् द्विशतं दमम् ॥

**द्विशतं** पणानामिति शेषः । **भक्ता**मित्यनेन दुष्टाया विक्रयणे न दण्ड इति दर्शितम् । दासभेदान् दर्शयति **नारदः** (अभ्यु. २६–२८)

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥
मोक्षितो महतश्चर्णाद् युद्धे प्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥
भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥

**गृहजातो** गृहदास्यां जातः । **क्रीतो** मूल्येन पूर्वस्वामिनो गृहीतः । **लब्धः** प्रतिग्रहादिना प्राप्तः । **दायादुपागतः** पित्रादिभ्यः पुत्रादिभी रिक्थत्वेन प्राप्तः । **अनाकालभृतो** दुर्भिक्षे दासीकरणाय पोषितः । **आहितः स्वामिना**ऽधमर्णेन बन्धकीकृतः । **ऋणान्मोक्षित**स्त्वस्मादृणाद्यद्यहं मुक्तः क्रियेयं[1] तदाहं त्वद्दासो भवामीत्यभिहितेन येनोत्तमर्णाय धनं दत्त्वा स्वकीयमृणमपाकृतं तस्य तदृणमोचनप्रत्युपकारतया स्वत एवाङ्गीकृतदासभावः । **युद्धे प्राप्तो** रणे विजित्य गृहीतः । **पणे जितो** यद्यस्मिन्विवादेऽहं त्वया पराजीयेय[2] तदाहं त्वद्दासो भवामीति परिभाष्य यो जितः । तवाहमित्युपगतः तवाहं दास इति स्वयं संप्रतिपद्यागतः । **प्रव्रज्यावसितः** प्रव्रज्यातश्च्युतः । **कृतः** एतावन्तं

---

१ 'क्रियेयं' इति अ–क. २ 'पराजीयेयं' इति अ–क.

कालमहं तव दास इत्यङ्गीकारितः । **भक्तदासो** यो भक्षितभक्त-मूल्यद्वारेण यावत्ते धनं ददामि तावदहं त्वद्दास इत्यङ्गीकृत्य प्राप्तः । **वडवाहृतः** वडवा गृहदासी तया हृतस्तल्लोभेन तां परिणीय तत्स्वाम्यनुमत्यर्थं तद्दासभावं प्राप्तः । **आत्मनो विक्रेता** यः स्वयमेव धनार्थमात्मानं विक्रीणीते । एवं **दासाः पञ्चदश**प्रकारा धर्मशास्त्रे स्मृता इत्यर्थः । तेषु आद्यानां गृहजातादीनां चतुर्णां दासत्वविमोकः स्वाम्यनुग्रहादेव भवति न प्रकारान्तरेणेत्याह **स** एव ( नारद, अभ्यु. २९, ३७ )

तत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते ।
प्रसादात्स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम् ॥
विक्रीणीते स्वतन्त्रः सन्य आत्मानं नराधमः ।
स जघन्यतमस्तेषां सोऽपि दास्यान्न मुच्यते ॥

स्वामिप्रसादादन्यत्रेति कथनाद्गृहजातादीनां सर्वेषां प्रव्रज्यावसितेतरेषां दासानां स्वामिप्रसादाद् दासत्वविमोको भवतीति दर्शितम् । गृहजातादीनामकालभृतादीनां च सर्वेषां स्वामिप्राणरक्षणाद् दासत्वविमोको भवतीत्याह **स** एव ( नारद, अभ्यु. ३० )

यो वैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात् ।
दासत्वात्स विमुच्येत पुत्रभागं लभेत च ॥

एषामिति निर्धारणे षष्ठी । एषां पञ्चदशानां दासानां मध्य इत्यर्थः । एतत्प्रव्रज्यावसितव्यतिरिक्तविषयम् । तस्य तु न कदाचिद् दासत्वविमोकः । तथा च **याज्ञवल्क्यः** ( २. १८३ )

प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकम् ।

**राज्ञः** प्रजापालस्य । अनाकालभृतादीनां प्रव्रज्यावसितात्मविक्रेतृव्य-तिरिक्तानां नवानां प्रतिनियतं दासत्वविमोकोपायमाह **नारदः** ( अभ्यु. ३१-३६ )

अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत् ।
आहितोऽपि धनं दत्त्वा स्वामी यद्येनमुद्धरेत् ॥

---

१ 'भक्षितभक्तिमूल्य०' इति अ-क.

ऋणं तु सोदयं दत्त्वा ऋणी दास्यात्प्रमुच्यते ।
तवाहमित्युपगतो युद्धे प्राप्तः पणे जितः ॥
प्रतिशीर्षप्रदानेन मुच्येरन्नल्पकर्मणा ।
कृतकालव्यपगमात्कृतो दासो विमुच्यते ॥
भक्तस्योत्क्षेपणात्सद्यो भक्तदासः प्रमुच्यते ।
निग्रहाद्वडवायास्तु मुच्यते वडवाभृतः ॥ इति ।

**गोयुगं** गोद्वयम् । **धनं** पूर्वगृहीतमृणम् । **सोदयमृणं दत्त्वा** स्वकीयमृणं येनोत्तमर्णाय यावद्धनं दत्त्वापाकृतं तस्मै तावद्धनं वृद्धिसहितं दत्त्वा **ऋणी** ऋणदासः । तवाहमित्युपगतस्य प्रतिशीर्षकदानेन स्वसमानदासान्तरदानेन दासत्वविमोकः । एवं युद्धे प्राप्तस्य पणे जितस्यापि । **कृतकालव्यपगमात्** परिभाषितकालातिक्रमणात् । **भक्तस्योत्क्षेपणात्** भक्षितमूल्यस्य समर्पणात् । वडवाया निग्रहात् गृहदास्यास्तेन सह सम्भोगस्य निरोधात् ॥ केषांचिददासत्वादनिग्राह्यत्वमाह **याज्ञवल्क्यः** (२. १८२)

बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते ।

**अपि**शब्दाद् दत्ताधीकृतयोर्ग्रहणम्[1] । बलाद्ये दासीकृताश्चौरैरपहृत्य ये विक्रीता दत्ता आधीकृता वा ते मोक्तव्या न तु दासत्वेन स्थापनीया इत्यर्थः । लोभाद्दासतया स्थापने राज्ञा ते मोचयितव्यास्तथा च **नारदः** (अभ्यु. ३८)

चौरापहृतविक्रीता ये च दासीकृता बलात् ।
राज्ञा मोचयितव्यास्ते दासत्वं तेषु नेष्यते ॥

चौरापहृताश्च ते विक्रीताश्चेति कर्मधारयः । यः कस्यचिद् दासः सन्नन्यस्य दासीभवितुमिच्छति स न ग्राह्य इत्यभिप्रेत्योक्तं **तेनैव** (नारद, अभ्यु. ४०)

---

1 'कृतयोर्न ग्रहणम्' इति अ.

तवाहमिति चात्मानं योऽस्वतन्त्रः प्रयच्छति ।
न स तं प्राप्नुयात्कामं पूर्वस्वामी लभेत तम् ॥

**तं कामं** काम्यमानमितरदासीभवनम् । तं दासं पूर्वस्वामी गृह्णीयादित्यर्थः । अत्र प्रकरणे दासशब्दस्य लिङ्गस्याविवक्षितत्वादेतत्सर्वं दास्यामपि योजनीयम् । दासीत्वविमोके प्रकारान्तरमप्याह **कात्यायनः** (७२३)

स्वां दासीं यस्तु सङ्गच्छेत्प्रसूता च भवेत्ततः ।
अवेक्ष्य बीजं कार्या स्याददासी सान्वया तु सा ॥

**बीजं** स्वकृतगर्भाधानम् । **अवेक्ष्य** निश्चित्य । ससन्ताना सा दास्यदासीत्वेन कार्या स्यादित्यर्थः । दासत्वविमोचनप्रकारमाह **नारदः** (अभ्यु. ४२–४३)

स्वं दासमिच्छेद्यः कर्तुमदासं प्रीतमानसः ।
स्कन्धादादाय तस्यासौ भिन्द्यात्कुम्भं सहाम्भसा ॥
साक्षताभिः सपुष्पाभिर्मूर्धन्यद्भिरवाकिरेत् ।
अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमथोत्सृजेत् ॥

तत्रापि दासशब्देन दास्या अपि ग्रहणं लिङ्गस्याविवक्षितत्वात् । अनेन प्रकारेण दासत्वविमोके कृते यत्सिध्यति तदाह **स** एव

ततः प्रभृति वक्तव्यः स्वाम्यनुग्रहपालितः ।
भोज्यान्नोऽप्यप्रतिग्राह्यो भवत्यभिमतः सताम् ॥

**वक्तव्यः** सम्भाषणार्हः । अदास्या अपि दासेन परिणीताया दासीत्वमाह **कात्यायनः** (७२५)

दासेनोढा त्वदासी या सापि दासीत्वमाप्नुयात् ।
यस्माद्भर्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभुर्यतः ॥

दासधनस्यापि तत्स्वामिधनमुक्तं **तेनैव** (कात्या. ७२४)

दासस्य तु धनं यत्स्यात्स्वामी तस्य प्रभुः स्मृतः इति ।

इति श्रीकोदण्डपरशुरामे······व्यवहारविवेकोद्द्योते अभ्युपेत्याशुश्रूषाव्यवहारपदनिरूपणम् ॥ २१ ॥

अथ[1] वेतनानपाकर्माख्यव्यवहारपदनिरूपणम्। तत्र तस्य स्वरूपं दर्शयति **नारदः** (वेत. १)

भृतानां वेतनस्योक्तो दानादानविधिक्रमः।
वेतनस्यानपाकर्म तद्विवादपदं स्मृतम्॥

दानादानविधिक्रमो यत्रोक्त इति सम्बन्धः। वेतनदाने प्रकारमाह **स एव** (नारद, वेत. २)

भृताय वेतनं दद्यात्कर्मस्वामी यथाकृतम्।
आदौ मध्येऽवसाने वा कर्मणो यद्विनिश्चितम्॥

अयमर्थः। **कर्मस्वामी कर्मणो** योग्यत्वेन लोके **यन्निश्चितं वेतनं तद्यथाकृतं** परिभाषितमनतिक्रम्य आदिमध्यादिकालत्रयान्यतमकाले दद्यादिति। एतावद्वेतनं दास्यामीति परिभाषाया अभावे यत्कर्तव्यं तदाह **स एव** (नारद, वेत० ३)

भृतावनिश्चितायां तु दशभागमवाप्नुयुः।
लाभगोवीर्यसस्यानां वणिग्गोपकृषीवलाः॥

**दशभागं** दशमं भागम्। **गोवीर्यं** पाल्यमानगवादिभवं पयोदध्यादि। कर्मस्वामिना दशमभागस्यादाने राज्ञा स दापनीय इत्याह **याज्ञवल्क्यः** (२. १९४)

दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः।
अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षिता॥

एतच्च सस्यदशमभागदापनमल्पायाससाध्यप्रकृष्टक्षेत्रकर्षकविषयम्। तदितरविषये त्वाह **बृहस्पतिः**

त्रिभागं पञ्चभागं वा गृह्णीयात्सीरवाहकः।

अनयोः पक्षयोर्व्यवस्थोक्ता **तेनैव**

भक्ताच्छादभृतः सीराद्भागं गृह्णीत पञ्चमम्।
जातसस्यात्त्रिभागं तु प्रगृह्णीयादथाभृतः॥

---

१ 'अथ ⋯ ⋯ निरूपणम्'—इति नास्ति क-आदर्शे.

**भक्ताच्छादभृतः** अन्नवस्त्रदानेन पोषितः । **अभृत** एतदितरः । अथवा यत्रैतावद् दास्यामीति परिभाषाया अभावस्तत्र मध्यस्था यावतीं भृतिं निरूपयन्ति तावती दातव्या । तथा च **वृद्धमनुः**

समुद्रयानकुशला देशकालार्थदर्शिनः ।
नियच्छेयुर्भृतिं यां तु सा स्यात्प्रागकृता यदि ॥

क्वचित्परिभाषायां सत्यामपि वेतनस्य न्यूनाधिक्यभावेन दानमाह **याज्ञवल्क्यः** (२. १९५)

देशं कालं च योऽतीयाल्लाभं कुर्याच्च योऽन्यथा ।
तत्र स्यात्स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके ॥

यः स्वाम्यनुज्ञामन्तरेण विक्रयादियोग्यदेशं कालं च दर्पालस्यादिना विक्रयादिकमकुर्वन्नतिक्रामति लाभं वा बहुतरव्यययुक्ततयाल्पं करोति तस्मिन्भृतिदानं स्वामीच्छानुसारेण न तु समग्रायाः परिभाषिताया भृतेर्दानम् । यस्तु देशकालावस्थित्यभिज्ञतयाऽधिकं लाभं करोति तस्मै परिभाषिताया अपि भृतेरधिकं दातव्यमित्यर्थः । अनेक[1]निष्पाद्ये कर्मणि भृतिदानप्रकार उक्तस्तेनैव (या. २. १९६)

यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम् ।
उभयोरप्यसाध्यं चेत्साध्ये कुर्याद्यथाश्रुतम् ॥

**उभयोरपी**त्यपिशब्दाद्बहूनां ग्रहणम् । यस्मिन् कूपादौ कृते तत्कर्तॄणामेतावद् दास्यामीति वेतने परिभाषिते द्विबहुभिरारब्धं तत्कर्म यदि व्याध्यादिवशात्तैर्न परिसमापितं तदा तेषु यो यावत्कर्म करोति तस्मै तत्कर्मानुसारेण मध्यस्थनिरूपितं वेतनं देयं न तु साम्येन दानं न च परिसमाप्त्यभावाददानम् । यदि तैः परिसमापितं तदा यथापरिभाषितं देयम् । न तु प्रत्येकं कृत्स्नं वेतनं दातव्यं न च कर्मानुसारेण परिकल्प्य दातव्यमित्यर्थः । यस्तु भृतिं गृहीत्वा शक्तोऽपि दर्पादिनाङ्गीकृतं कर्म न करोति स गृहीतां भृतिं द्विगुणीकृत्य स्वामिने दद्याद्राज्ञे दण्डं चेत्याह **बृहस्पतिः**

---

१ 'अनेकभृतकनिष्पाद्ये' इति ब.

गृहीतवेतनः कर्म न करोति यदा भृतः ।
समर्थश्च दमं दाप्यो द्विगुणं तच्च वेतनम् ॥

**याज्ञवल्क्यो**ऽपि ( २. १९३ )

गृहीतवेतनः कर्म त्यजन्द्विगुणमावहेत् ।

अगृहीतवेतनेनाङ्गीकृतस्य कर्मणोऽकरणे यद्वेतनं परिभाषितं तत्समं धनं स्वामिने दातव्यं न तु राज्ञे दण्डो देय इत्यर्थः । एवं च वेतनग्रहणे बृहस्पतिना गृहीतं तच्च वेतनमिति गृहीतस्य वेतनस्य द्विगुणीकृत्य समर्पणाभिधानाद् भृतकस्य स्वापराधकृतं वेतनसमधनदानं वेतनाग्रहणेऽपि याज्ञवल्क्येनागृहीते सममित्यभिधानात्परिभाषितवेतनसमधनदानम् । विशेषस्त्वेकत्र राजदण्डोऽपरत्र तदभाव इति । अयं **स्मृतिचन्द्रिकाकारादीनामभिमतः** पक्षः । **विज्ञानेश्वराचार्या**स्तु वेतनस्य ग्रहणे तद्द्विगुणधनदानं तदग्रहणे तु तत्समधनदानं न तु द्विगुणधनदानमित्याहुः । अगृहीतवेतनस्य प्रतिश्रुत्य कर्माकरणे भृतिं दत्त्वा बलात् स कर्म कारयितव्य इति पक्षान्तरमाह **नारदः** ( वेत० ५ )

कर्माकुर्वन्प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात् ।
भृतिं गृहीत्वाऽकुर्वाणो द्विगुणां भृतिमाप्नुयात् ॥

**अत्रैव** विषये प्रारम्भानन्तरं बलात्कार्यमाणस्याप्यकरणे दण्ड्यत्वमप्याह **कात्यायनः** (६५७)

कर्मारम्भं तु यः कृत्वा सिद्धं नैव तु कारयेत् ।
बलात्कारयितव्योऽसावकुर्वन्दण्डमर्हति ॥

कियद् द्रव्यं दण्ड्य इत्यपेक्षायामाह **वृद्धमनुः**

प्रतिश्रुत्य न कुर्याद्यः स कार्यः स्याद्बलादपि ।
स चेन्न कुर्यात्तत्कर्म प्राप्नुयाद् द्विगुणं दमम् ॥

**प्रतिश्रुत्य** प्रारभ्येत्यर्थः । कात्यायनेन प्रारम्भ एव दण्डाभिधानात् । यस्तु **मनुना** (८. २१५)

भृतो नार्तो न यः कुर्याद् दर्पात्कर्म यथोदितम् ।
स दण्ड्यः कृष्णलानष्टौ न देयं चास्य वेतनम् ॥

इत्यल्पो दण्डोऽभिहितः सोऽर्धन्यूनकर्मकरणे ज्ञातव्यः । किञ्चिन्न्यून-कर्मकरणे तु न दण्डो नापि भृतिलाभः । तथा चोक्तं **मनुनैव** (८. २१७)

यथोक्तमार्तः स्वस्थो वा यस्तत्कर्म न कारयेत् ।
न तस्य वेतनं देयमल्पोनस्यापि कर्मणः ॥

अत्र **कारयेदि**त्यनेन स्वस्थेनापि पुरुषान्तराङ्गीकृतकर्मकारणे[1] (करणे ?) न दोष इति दर्शितम् । आर्तस्तु यदि रोगापगमानन्तरं स्वाङ्गीकृतं कर्म करोति तदा सत्यपि विलम्बे तद्दोषाभावात् स भृतिं लभत इत्युक्तं **तेनैव** (मनु ८. २१६)

आर्तस्तु कुर्यात्स्वस्थः सन् यथा भाषितमादितः ।
सुदीर्घस्यापि कालस्य स लभेतैव वेतनम् ॥

**आदितः** आदौ **यथा भाषितं** यथा प्रतिज्ञातं तथा कुर्यादित्यर्थः । **सुदीर्घस्य कालस्य** अत्ययेऽपीति शेषः । यस्त्वेतावन्तं कालं कर्म करिष्यामीति परिभाष्य तत्कालापूर्तावेव कर्म त्यजति तस्य न भृतिलाभः स्वामिदोषात् त्यागे तु यावति काले कर्म कृतं तत्कालानुसारेण परिकल्पित-भृतिं लभत इत्याह **नारदः**

कालेऽपूर्णे त्यजन्कर्म भृतेर्नाशमवाप्नुयात् ।
स्वामिदोषादपक्रामन्यावत्कृतमवाप्नुयात् ॥

**स्वामिदोषो** निष्ठुरभाषणादिः । स्वामिदोषमन्तरेण परित्यागे दण्ड-मप्याह **विष्णुः** ( विष्णुधर्मसूत्र ५. १५२-१५३ )—भृतकश्चापूर्णे काले त्यजन्सकलमेव मूल्यं जह्याद्राज्ञे च पणशतं दद्यात्—इति । **मूल्यं** वेत-नम् । अपूर्णे काले स्वामिना भृतकस्य तदपराधमन्तरेण त्याजने परिक-ल्पितं समग्रं वेतनं दण्डश्च देय इत्याह **विष्णुः** ( विष्णुधर्मसूत्र

---

१ 'कर्मकारणे स दोष इति दर्शितम्' इति **ब**.

५. १५५-५६ )—स्वामी चेद्भृतकमपूर्णे काले जह्यात्तस्य सर्वमेव मूल्यं दद्यात्पणशतं च राजन्यन्यत्र भृतकदोषात्—इति । भृतकदोषात् स्वामिद्रव्यनाशे मूल्यद्वारेण तद् द्रव्यं स्वामिने देयमित्याह **स एव** ( विष्णुधर्मसूत्र ५. १५४)—तद्दोषेण यद्विनश्येत्तत् स्वामिने देयमन्यत्र दैवोपघातात्। दैवग्रहणं राजकृतस्याप्युपलक्षणम् । अत एव **नारदः** (वेत. ९)

भाण्डं व्यसनमागच्छेद्यदि वाहकदोषतः ।
दाप्यो यत्तत्र नष्टं स्याद् दैवराजकृतादृते ॥

**भाण्डं** वहनीयं द्रव्यम् । **व्यसनं** नाशम् । भाण्डग्रहणमत्र बलीवर्दादेरुपलक्षणम् । **वाहक**ग्रहणं कृषीवलादेरप्युपलक्षणम् । एतच्च प्रमादनाशितविषयम् । दौष्ट्येन स्वामिद्रव्यनाशने तु द्विगुणं दातव्यमित्याह **वृद्धमनुः**

प्रमादान्नाशितं दाप्यः समं द्विर्द्रोहनाशितम् ।
न तु दाप्योऽपहृतं चौरैर्दग्धमूढं जलेन वा ॥

**द्विर्दाप्यः** द्विगुणं दाप्यः । **ऊढं** नीतम् । यस्तु भृतको विवाहाद्यर्थसुमुहूर्ते प्रतिष्ठमानस्य भृत्यान्तरसम्पादनकालाभावे स्वाङ्गीकृतकर्माकरणरूपं प्रस्थानविघ्नं करोति स स्वामिने द्विगुणां भृतिं दाप्यः[१] । तथा च **याज्ञवल्क्यः** (२. १९७—१९८)

प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम् ।
प्रक्रान्ते सप्तमं भागं चतुर्थं पथि संत्यजन् ॥
भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि च ।

**प्रक्रान्ते** प्रस्थानकर्मणीति शेषः । स्वामी गमनारम्भानन्तरं यदि त्याजयति तदा पूर्वोक्तक्रमेण सप्तमभागादिकं भृत्याय दापनीय इति त्याजकोऽपि चेत्यस्यार्थः । स्वामिना त्याजने यच्चतुर्थभागदापनमुक्तं तदविक्रीत-

---

१ अस्मात्परं 'भृत्यान्तरसम्पादनकालसम्भवे परिकल्पिताया भृतेः सप्तमं भागं दाप्यः । गमने प्रारब्धे पथि कर्म संत्यजन् भृतेश्चतुर्थं भागं दाप्यः । अर्धपथे संत्यजन् सर्वां भृतिं दाप्यः' इत्यधिकं ब—आदर्शे.

भाण्डस्वामिविषयं विक्रीतभाण्डस्वामिना तु भृतेरर्धं दातव्यम् । अत एवाह **वृद्धमनुः**

पथि विक्रीय तद्भाण्डं वणिग्भृत्यं त्यजेद्यदि ।
अथ तस्यापि देयं स्याद्भृतेरर्धं लभेत सः ॥

पथि भाण्डस्य शौल्किकादिभिः प्रतिरोधे राजादिभिरपहारे वा कृते स्वामिना यद्दातव्यं तदाह **कात्यायनः** ( ६६१ )

यदा च पथि तद्भाण्डमासिध्येत ह्रियेत वा ।
यावानध्वा गतस्तेन प्राप्नुयात्तावतीं भृतिम् ॥

स्वामिना पथि व्याधितस्य भृत्यस्य परित्यागे दण्डमाह **स एव** ( कात्या. ६६० )

त्यजेत्पथि सहायं यः श्रान्तं रोगार्तमेव च ।
प्राप्नुयात्साहसं पूर्वं ग्रामे त्र्यहमपालयन् ॥

स्वाम्यनुज्ञातेन भृत्येनापराधे कृते स्वामिन एव सोऽपराधो भवतीत्याह **बृहस्पतिः**

प्रभुणा विनियुक्तः सन् भृतको विदधाति यः ।
तदर्थमशुभं कर्म स्वामी तत्रापराध्नुयात् ॥

कृतकर्मणे भृतकाय स्वामिना वेतनस्यादाने राज्ञा स तद् दाप्य इत्याह **स एव**

कृते कर्मणि यः स्वामी न दद्याद्वेतनं भृते ।
राज्ञा दापयितव्यः स्याद्वेतनं चानुरूपतः ॥ इति ।

यो यानादिना भाण्डनयनं कर्तुं मूल्येन परकीयं यानादिकं भाण्डप्रापणाद्यमुककार्यसिद्धिपर्यन्तमेतन्मदीयमिति परिक्रीय तत्र न याति स यानस्वामिने परिकल्पितस्य भाटकस्य चतुर्थांशं दाप्यः । यस्तु तन्नीत्वार्धपथे त्यजति तदा सर्वां भृतिं दाप्यः । तथा च **नारदः** ( वेत. ७ )

---

१ 'भाण्डप्रापणं यमुककार्य०' इति अ-क.

अनयन्भाटयित्वा तु भाण्डवान्यानवाहने ।
दाप्यो भृतिं चतुर्भागं सर्वामर्धंपथे त्यजन् ॥

**यानं** शकटादि **वाहन**मश्वादि । यस्तु यानादिकं भाटकेन गृहीत्वा भाण्डं वाहनरहितमेव देशान्तरं नयति भाटकं च न ददाति स भाटकमवश्यं दाप्य इत्याह **वृद्धमनुः**

यो भाटयित्वा शकटं नीत्वा चान्यत्र गच्छति ।
भाटं न दद्याद् दाप्यः स्यादनूढस्यापि भाटकम् ॥

**अनूढस्यापि** अकृतोपकारस्यापि । यदर्थं भाटकेन यानादिकं परिक्रीतं तत्कार्यसिद्धौ यदि तद्यानादिकं न प्रत्यर्पयति तदा तत्समर्पणपर्यन्तं भाटकं दाप्य इत्याह **कात्यायनः** (६६२–६६३)

हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः ।
नार्पयेत्कृतकृत्यः संस्तावद् दाप्यः सभाटकम् ॥
गृहवार्यापणादीनि गृहीत्वा भाटकेन यः ।
स्वामिने नार्पयेद्यावत्तावद् दाप्यः सभाटकम् ॥

**वारि**शब्देनात्र जलपात्रं गृह्यते । **स्वामिने नार्पयेत्** कृतकृत्यः सन्नित्यनुषङ्गः । भाटकेन गृहीतानां जलपात्रादीनां भङ्गे नाशे च विशेषमाह **नारदः** (वेत. २२)

स्तोमवाहीनि भाण्डानि पूर्णकालान्युपानयेत् ।
ग्रहीतुराभवेद्भग्नं नष्टं चान्यत्र संप्लवात् ॥

**स्तोमवाहीनि** भाटकगृहीतानि । तानि पूर्णपरिभाषितभाटककालानि तत्स्वामिनं प्रापयेदिति पूर्वार्धस्यार्थः । **भग्न**मेकदेशेन विकृतं **नष्टं** कार्त्स्न्येन विकृतम् । **संप्लवः** परस्परसङ्घर्षः । तद्व्यतिरिक्तप्रकारेण यद्भग्नं नष्टं च तद्भाटकग्रहीतुर्भवति संप्लवेन तु यन्नष्टं भग्नं वा तद्भाटकदात्रा पूर्ववत्कृत्वा मूल्यद्वारेण वा तत्स्वामिने देयमित्यर्थः ॥ परभूमौ स्वयं गृहं निर्माय भूमिस्वामिने भाटकं दत्त्वा यस्तत्र वसति तं प्रत्याह **स एव** (नारद, वेत. २०)

परभूमौ गृहं कृत्वा स्तोमं दत्त्वा वसेत्तु यः ।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम् ॥

**स्तोमो** भाटकम् । यो भाटकमदत्त्वा वसति तं प्रत्याह **स** एव (नारद, वेत. २१)

स्तोमाद्विना वसित्वा तु परभूमावनिश्चितः ।
निर्गच्छंस्तृणकाष्ठानि न गृह्णीयात्कथंचन ॥
यान्येव तृणकाष्ठानि त्विष्टका विनिवेशिताः ।
विनिर्गच्छंस्तु तत्सर्वं भूमिस्वामिनि वेदयेत् ॥

**अनिश्चितः** निर्गमनसमये तृणकाष्ठादिकं गृहीत्वा गन्तव्यमित्येवंरूपा वा तथा न गन्तव्यमित्येवंरूपा वा या परिभाषा तद्रहितः । **वेदयेत्** निवेदयेत् । परिभाषाकरणे तु यथापरिभाषितं कर्तव्यम् ।

वेश्यातदुपभोक्तृविषये[1] **स** एव (नारद, वेत. १८)

पण्यं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत्[2] ।
अनिच्छञ् शुल्कदातापि शुल्कहानिमवाप्नुयात् ॥

व्याध्यभिभवादिना तु शुल्कदातुः समीपमगच्छन्त्या[3] न दोष इत्याह **बृहस्पतिः**

व्याधिता सश्रमा व्यग्रा राजकार्यपरायणा ।
आमन्त्रिता च नागच्छेदवाच्या वडवा स्मृता ॥

**आमन्त्रिता** आहूता । **वडवा** दासी । एतच्च वेश्याया अप्युपलक्षणम् । उपभोक्तृविषये विशेषमाह **नारदः** (वेत० १८-१९)

अप्रयच्छंस्तथा शुल्कमनुभूय पुमान् स्त्रियम् ।
अक्रमेण तु सङ्गच्छेद् घातदन्तनखादिभिः ॥
अयोनौ यः समाक्रामेद्बहुभिर्वापि वासयेत् ।
शुल्कं सोऽष्टगुणं दाप्यो विनयं तावदेव तु ॥

---

१ 'तदुपभोक्तृविषये नारदः' इति ब. २ 'शुल्कं गृहीत्वा' इति ब. ३ 'समीपगमने न दोष' इति अ-क.

वेश्याया दत्तशुल्कं परित्यज्य पुरुषान्तरगमने दण्डादिकमुक्तं **मत्स्य-पुराणे** (२२७. १४५)

गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति ।
तां दमं दापयेद् दद्यादितरस्यापि भाटकम् ॥

**इतरस्य** दत्तशुल्कस्य । विशेषान्तरमप्युक्तं **तत्रैव** (मत्स्यपुराण २२७. १४६–१४८)

अन्यमुद्दिश्य यो वेश्यां नयेदन्यस्य कारणात् ।
तस्य दण्डो भवेद्राज्ञः सुवर्णस्य च माषकम् ॥
नीत्वा भोगं न यो दद्याद् दाप्यो द्विगुणवेतनम् ।
राज्ञश्च द्विगुणं दण्डं तथा धर्मो न हीयते ॥
बहूनां व्रजतामेकां सर्वे तद्द्विगुणं धनम् ।
तस्यै दद्युः पृथग्राज्ञे[1] दण्डं च द्विगुणं परम् ॥

वेश्याविवादे निर्णायकानाह **नारदः**

वेश्याः प्रधाना यास्तत्र कामुकास्तद्गृहोषिताः ।
तत्समुत्थेषु कार्येषु निर्णयं संशये विदुः ॥

इति श्रीकोदण्डपरशुरामे···व्यवहारविवेकोद्द्योते वेतनानपाकर्माख्य-व्यवहारपदनिरूपणम् ॥ २२ ॥

अथ संविद्व्यतिक्रमाख्यव्यवहारपदनिरूपणम् । तत्र तस्य स्वरूप-माह **नारदः** (सम. १)

पाषण्डनैगमादीनां स्थितिः समय उच्यते ।
समयस्यानपाकर्म तद्विवादपदं स्मृतम् ॥

**पाषण्डाः** वैदिकमार्गविरोधिनः क्षपणकादयः । **नैगमाः** सार्थिका वणिजः । नैगमा वेदप्रामाण्याभ्युपगन्तारः पाशुपतादय इति **विज्ञानेश्वराचार्याः** । **आदि**शब्देन त्रैविद्यब्राह्मणवृन्दादयः । तेषां **स्थितिः** पारिभाषिकधर्मवत्तया व्यवस्थापनं **समय** इत्युच्यते । तस्य समयस्य

---

1 'पृथग्राम्यदण्डं च' इति अ–क.

**यदनपाकर्म** अव्यतिक्रमः परिपालनरूपः **तत्समयस्यानपाकर्म विवादपदं स्मृतम**क्रियमाणमिति शेषः । अथवा अव्यतिक्रमाभिधायिना अनपाकर्मशब्देनात्र विषं भुंक्ष्वेतिवद्विपरीतलक्षणया व्यतिक्रमः प्रतिपाद्यते । तस्य समयस्य यो व्यतिक्रमः स विवादपदमित्यर्थः । एतदुपयोगिनं कञ्चिदर्थं दर्शयति **याज्ञवल्क्यः** (२. १८५)

राजा कृत्वा पुरे स्थानं ब्राह्मण्यं न्यस्य तत्र तु ।
त्रैविद्यं वृत्तिमद् ब्रूयात्स्वधर्मः पाल्यतामिति ॥

**ब्राह्मण्यं** ब्राह्मणसमूहम् । ब्राह्मणमाणववाडवाद्यत् (पा. ४. २. ४२)–इति **पाणिनि**स्मरणाद्यत् । विद्या वेदाः तिसृणां विद्यानां समाहारस्त्रिविद्यं त्रिविद्यं वेत्तीति त्रैविद्यम् । तदधीते तद्वेद (पा. ४. २. ५९)–इत्यण् । अत्राणो द्विगुनिमित्तत्वाभावान्न-द्विगोर्लुगनपत्ये[1] (पा. ४. १. ८८) इति लुक् । त्रैविद्यग्रहणमृग्यजुःसामाख्यवेदत्रयसाध्यस्य ज्योतिष्टोमादिप्रयोगस्य वेदत्रयाभिज्ञानामभावेऽनिर्वाहान्न केवलं बह्वृचा याजुषाः सामगा वा स्थापनीयाः किं तर्ह्यवश्यमेते त्रयोऽपि ज्योतिष्टोमादिश्रौतकर्मानुष्ठाननिर्वाहाय स्थापनीया इत्येवमर्थम् । **बृहस्पति**रपि

वेदविद्याविदो विप्राञ् श्रोत्रियानग्निहोत्रिणः ।
आहृत्य स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत् ॥

वृत्तिपरिकल्पनप्रकारमाह **स** एव

अनाच्छेद्यकरास्तेभ्यः प्रदद्याद्गृहभूमयः ।
मुक्तभाव्याश्च नृपतिर्लेखयित्वा स्वशासने ॥

**अनाच्छेद्यकराः** स्वेनाग्राह्यकराः । **मुक्तभाव्याः** भाव्यो भाविनृपतिभिर्ग्राह्यः करस्तद्रहिताः । स्थापितैर्ब्राह्मणैर्यत्कर्तव्यं तदाह **स** एव

नित्यं नैमित्तिकं काम्यं शान्तिकं पौष्टिकं तथा ।
पौराणां कर्म कुर्युस्ते सन्दिग्धे निर्णयं तथा ॥

**पौराणां** पुरवासिनाम् । **याज्ञवल्क्यो**ऽपि (२. १८६)

---

1 'निमित्तत्वाभावाद् द्विगो०' इति अ–क.

निजधर्माविरोधेन यस्तु सामयिको भवेत् ।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥

**निजधर्माविरोधेन** श्रौतस्मार्तधर्मानुपमर्देन **सामयिकः** समयप्राप्तो धर्मो गोप्रचारोदकरक्षणादेव गृहपालनादिरूपः सोऽपि यत्नेन परिपालनीयः। तथा स्वधर्मानुपमर्देन यो राज्ञा कृतो धर्मः यावन्तः पान्थाः समायान्ति तावन्तः सर्वेपि भोजनीया इत्येवमादिरूपः सोऽपि परिपालनीयः । यस्तु निजधर्मविरोधी सन्ध्यावन्दनादिकर्मकाले सर्वैरेव स्वव्यापारपरित्यागेन राजभवनं प्रत्यागन्तव्यं यो नायाति स दण्डनीय इत्येवमादिरूपः स न परिपालनीय इत्यर्थः । सामयिकस्य राजकृतस्य च परिपालनं श्रेण्यादिष्वतिदिशति **याज्ञवल्क्यः** (२. १९२)

श्रेणिनैगमपाषण्डिगणानामप्ययं विधिः ।
भेदं चैषां नृपो रक्षेत्पूर्वां वृत्तिं च पालयेत् ॥

**श्रेणयः** एकशिल्पोपजीविनः कुविन्दादयः । **गण**ग्रहणं पूगव्रातयोरप्युपलक्षणम् । एककर्मोपजीविनां हस्त्यश्वारोहादीनां समूहः पूगः । गणव्रातशब्दौ व्याख्यातौ **कात्यायनेन** (६७८)

नानायुधधरा व्राता समवेतास्तु कीर्तिताः ।
कुलानां हि समूहस्तु स गणः परिकीर्तितः ॥

एतेषां श्रेण्यादीनां **भेदं** धर्मव्यवस्थां **नृपो रक्षे**त्स **पूर्वां** पूर्वायातां वृत्तिं च पालयेदित्यर्थः । समयकरणस्य किञ्चिन्निमित्तं दर्शयति **बृहस्पतिः**

ग्रामे[1] श्रेणिगणानां च सङ्केतः समयक्रिया ।
बाधाकाले तु सा कार्या धर्मकार्ये कथंचन ॥ इति ।

ग्रामादीनां समयकरणमन्तरेण यद्युपद्रवो दुष्परिहरो धर्मकार्यं वा दुःसाध्यं तदा सङ्केतरूपा समयक्रिया कर्तव्येत्यर्थः । एतच्चोपलक्षणम् ।

---

1 'ग्रामश्रेणिगणानां च' इति ब.

तेनैतदभावेऽपि सर्वेषामिच्छातो भवति समयक्रिया । उपद्रवपरिहरणं समयिभिः सर्वैर्मिलित्वा कार्यं न त्वेकेन । तथा च **स** एव

> चाटचौरभये बाधाः सर्वसाधारणाः स्मृताः ।
> तत्रोपशमनं कार्यं सर्वैर्नैकेन केनचित् ॥

**चाटो** वृकः । एतच्चोपलक्षणम् । चाटचौरादिभ्यो भये सति तत्कृता बाधाः सर्वसाधारणाः स्मृता इत्यतो यः समयः कृतोऽवर्षणोपद्रवे प्रतिगृहं प्रतिक्षेत्रं चावग्रहनिवृत्त्यर्थं ग्रहयज्ञादिसिद्धय एतावद्देयमित्येवमादिरूपस्तदनुसारेणोपशमनं सर्वैः कार्यमित्यर्थः । धर्मकार्यमपि सर्वैः सम्भूय कार्यमित्याह **स** एव

> सभाप्रपादेवगृहतटाकारामसंस्कृतिः ।
> तथानाथदरिद्राणां संस्कारो यजनक्रिया ॥
> कुलायननिरोधं च कार्यमस्माभिरंशतः ।
> यत्रैतल्लिखितं पत्रे धर्म्या सा समयक्रिया ॥
> पालनीया समस्तैस्तैर्यः समर्थो विसंवदेत् ।
> सर्वस्वहरणं दण्डस्तस्य निर्वासनं पुरात् ॥

**सभा** मण्डपः । **आरामः** उपवनम् । सभादीनां **संस्कृति**स्तेषां जीर्णतायामुद्धारः । **संस्कार** उपनयनादिकः प्रेतदहनादिकश्च । **यजनक्रिया** सोमयागादिकर्तृभ्यो दानम् । **कुलायननिरोधः** कुलायने दुर्भिक्षादिपीडितयूथागमने निरोधो दुर्भिक्षाद्यपगमपर्यन्तं तस्य धारणम् । **कल्पतरौ** तु कुल्यानयनरोधं वेति पाठः । **कुल्यानयनरोधं** कुल्यायाः प्रवर्तनप्रतिबन्धौ । समुदायिभिरन्योन्यं समयानतिक्रमाय विश्वासमुत्पाद्य सामयिककार्याणि कर्तव्यानीत्याह **स** एव

> कोशेन लेख्यक्रियया मध्यस्थैर्वा परस्परम् ।
> विश्वासं प्रथमं कृत्वा कुर्युः कार्याण्यनन्तरम् ॥ इति ।

**कोशेन** देवतास्नानोदकपानेन । **लेख्यक्रियया** समयपत्रेण ।

**मध्यस्थैः** प्रतिभूभिः। राज्ञापि समयः परिपालनीय इत्याह **नारदः** (सम. २.)

पाषण्डनैगमश्रेणिपूगव्रातगणादिषु।
संरक्षेत्समयं राजा दुर्गे जनपदे तथा॥

**आदिशब्देन** ब्रह्मपुरीनिविष्टमहाजनपरिग्रहः। पाषण्डादिसमयः प्रसिद्धः। दुर्गे तु समयः धान्यादिकं गृहीत्वा देशान्तरं यास्यतो हस्ते न तद्विक्रेयमित्यादिकः समयः। जनपदे तु कचिद् विक्रेतुः सकाशाच्छुल्कग्रहणं कचित् क्रेतुरित्यादिकः समयः। पाषण्डादीनां सामयिको धर्मादिर्न निवर्तनीय इति पूर्वोक्तमर्थं विवृण्वन्नाह **स** एव (नारद, सम. ३)

यो धर्मः कर्म यच्चैषामुपस्थानविधिश्च यः।
यच्चैषां वृत्त्युपादानमनुमन्येत तत्तथा॥

**धर्म**श्चैत्यवन्दनादिः। **कर्म** प्रातः पर्युषितभिक्षाटनादि। **उपस्थानविधिः** समूहकार्यार्थपटहादिध्वनिश्रवणे सति मण्डपादौ मेलनम्। **वृत्त्युपादानं** जीवनार्थं तापसवेषग्रहणम्। राज्ञा निवर्तनीयं किञ्चिद्दर्शयति **स** एव (नारद, सम. ४)

प्रतिकूलं च यद्राज्ञः प्रकृत्यावमतं च यत्।
बाधकं च यदर्थानां तत्तेभ्यो विनिवर्तयेत्॥

**यद्राज्ञः प्रतिकूलं** शूद्रकर्तृकधर्मविवेचनादिकं **यच्च प्रकृत्या** स्वभावत **एवावमत**मवज्ञातं पाषण्डादिषु ताम्बूलभक्षणादिकं[1] **यच्चार्थानां बाधकं** धननाशकरं रसवादादिकं[2] **तत्तेभ्यो निवर्तयेत्** यथा ते न कुर्वन्ति तथा कुर्यादित्यर्थः। शूद्रकर्तृकधर्मविवेचनस्य प्रतिकूलत्वमुक्तं **स्मृत्यन्तरे**

यस्य राज्ञस्तु कुरुते शूद्रो धर्मविवेचनम्।
तस्य प्रक्षुभ्यते राष्ट्रं बलं कोशश्च नश्यति॥

**यस्य राज्ञो राष्ट्रे** इति शेषः। निवर्तनीयान्तरं दर्शयति **स** एव (नारद, सम. ७)

---

१ 'ताम्बूलादिकम्' इति अ. २ 'सवादादिकम्' इति अ; 'दसवादादिकम्' इति ब.

दोषवत्करणं यत्स्यादनाम्नायप्रकल्पितम् ।
प्रवृत्तमपि तद्राजा श्रेयस्कामो निवर्तयेत् ॥

लोभादिदोषवत्कारणकं श्रुतिस्मृतिविरुद्धं विधवादौ वेश्यात्वादिकं पाषण्डादिभिः प्रकल्पितं तद्बहुकालप्रवृत्तमपि राज्ञा निवर्तनीयमित्यर्थः । कलहादावेतेषां युद्धार्थं मिथः सङ्घीभवनमायुधधारणमन्योन्यमर्थहरणादिकं च राज्ञा न सोढव्यमित्याह स एव (नारद, सम. ५)

मिथः सङ्घातकरणमहिते शस्त्रधारणम् ।
परस्परोपतापं च तेषां राजा न मर्षयेत् ॥

समुदायिभिर्विचित्रबुद्धिभिरनेकैरैकमत्येन कार्यनिर्वाहस्य कर्तुमशक्यत्वात्तैर्द्वित्राः समुदायकार्यचिन्तकाः कर्तव्यास्तैर्यदुक्तं तच्च सर्वैः समुदायिभिरङ्गीकार्यमित्याह **बृहस्पतिः**

द्वौ त्रयः पञ्च वा कार्याः समूहहितवादिनः ।
कर्तव्यं वचनं तेषां ग्रामश्रेणिगणादिभिः ॥

कीदृशाः कार्यचिन्तकाः कार्याः कीदृशा नेत्यपेक्षायामाह स एव

विद्वेषिणो व्यसनिनः शालीनालसभीरवः ।
लुब्धातिवृद्धबालाश्च न कार्याः कार्यचिन्तकाः ॥
शुचयो वेदधर्मज्ञा दक्षा दान्ताः कुलोद्भवाः ।
सर्वकार्यप्रवीणाश्च कर्तव्याश्च महत्तमाः ॥

**शालीनाः** अधृष्टाः । **कार्यचिन्तकाः** समुदायकार्यसाधकबाधकविचारकाः । यः कार्यचिन्तकैरुक्तं न करोति तद्दण्डमाह **याज्ञवल्क्यः** (२. १८८)

कर्तव्यं वचनं सर्वैः समूहहितवादिनः ।
यस्तत्र विपरीतः स्याद् स दाप्यः प्रथमं दमम् ॥

**प्रथमं** पूर्वसाहसम् । कार्यचिन्तकोक्तं यदि युक्तिबाधितं तदा न वदतिक्रमे दण्ड इत्यभिप्रेत्याह **कात्यायनः** (६७१)

युक्तियुक्तं च यो हन्याद्वक्तुर्योऽनवकाशदः ।
अयुक्तं चैव यो ब्रूयात्स दाप्यः पूर्वसाहसम् ॥

अन्यमपि दण्ड्यं दर्शयति **बृहस्पतिः**

यस्तु साधारणं हिंस्यात् क्षिपेत् त्रैविद्यमेव वा ।
सन्धिक्रियां विहन्याच्च स निर्वास्यस्ततः पुरात् ॥

**साधारणं** समुदायग्राह्यं दण्डादिद्रव्यं **हिंस्यात्** दण्ड्यादेः साह्याय्यकरणान्नाशयेत् । **क्षिपेत्** तिरस्कुर्यात् । स एव

अरुन्तुदः सूचकश्च भेदकृत्साहसी तथा ।
श्रेणिपूगनृपद्विष्टः क्षिप्रं निर्वास्यते ततः ॥

**अरुन्तुदो** मर्मोद्घाटकः **सूचकः** पिशुनः । **भेदकृत्** समुदायिषु वैमत्यकृत् । **नारदः** (सम. ६)

पृथग्गणांस्तु ये भिन्द्युस्ते विनेया विशेषतः ।
आवहेयुर्भयं घोरं व्याधिवत्ते ह्युपेक्षिताः ॥

**गणान्** श्रेण्यादिरूपान्समुदायान् । **बृहस्पतिः**

तत्र भेदमुपेक्षां वा यः कश्चित्कुरुते नरः ।
चतुःसुवर्णं षण्निष्कास्तस्य दण्डो विधीयते ॥

**सुवर्णचतुष्टयनिष्कषट्कयोः** शक्त्यादितारतम्येन व्यवस्था । समुदायिदण्डे समुदायस्यैवाधिकारः । अत एवोक्तं **तेनैव**

कुलश्रेणिगणाध्यक्षाः पुरदुर्गनिवासिनः ।
वाग्धिग्दण्डं परित्यागं प्रकुर्युः पापकारिणाम् ॥
तैः कृतं यत्स्वधर्मेण निग्रहानुग्रहं नृणाम् ।
तद्राज्ञाप्यनुमन्तव्यं निसृष्टार्था हि ते स्मृताः ॥

**वाग्दण्डः** पापिष्ठोसीति भाषणम् । **धिग्दण्डो** धिक्त्वामिति भाषणम् । **परित्यागो**ऽसंव्यवहार्यत्वकरणं निर्वासनं वा । एतच्चार्थदण्डादेरप्युपलक्षणम् । **निग्रहानुग्रहमि**त्यन्ते पुनः सामान्येनाभिधानम् । **निसृष्टार्था** अनुज्ञातकार्याः । द्वेषादिवशात्समुदायेनैकस्य निग्रहे कृते राज्ञा ते सर्वे दण्डनीया इत्याह **स एव**

बाधां कुर्युर्यदैकस्य संभूता द्वेषसंयुताः ।
राज्ञा तु विनिवार्यास्ते शास्याश्चैवानुबन्धतः ॥

**अनुबन्धतः** निग्रहतारतम्यानुसारेण । यदि समूहोऽपराधिनं दण्डयितुमशक्तस्तदा राज्ञा स दण्डनीयः । अत एव **मनुः** (८. २१९-२२१)

यो ग्रामदेशसङ्घानां कृत्वा सत्येन संविदम् ।
विसंवदेन्नरो लोभात्तं राजा विप्रवासयेत् ॥
निगृह्य दापयेदेनं समयव्यभिचारिणम् ।
चतुःसुवर्णं षण्निष्कं शतमानं च राजतम् ॥
एवं दण्डविधिं कुर्याद्धार्मिकः पृथिवीपतिः ।
ग्रामजातिसमूहेषु समयव्यभिचारिणाम् ॥

एतेषां प्रवासनचतुःसुवर्णषण्निष्कशतमानरूपाणां चतुर्णां दण्डानां जातिविद्यागुणाद्यपेक्षया व्यवस्था कल्पनीया । कार्यचिन्तकानां समूहविरोधे तन्निवर्तनं राज्ञा कार्यमित्याह **बृहस्पतिः**

मुख्यैः सह समूहानां विसंवादो यदा भवेत् ।
तदा विचारयेद्राजा स्वमार्गे स्थापयेच्च तान् ॥

मुख्यानामपराधविशेषे दण्डविशेषमाह **याज्ञवल्क्यः** (२. १८७)

गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः ।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥

मुख्यदण्डनेऽपि समूहस्यैवाधिकारः समूहस्य तत्रासामर्थ्ये राज्ञः । अत एव **कात्यायनः** (६७२)

साहसी भेदकारी च गणद्रव्यविनाशकः ।
उच्छेद्याः सर्व एवैते विख्याप्यैव नृपे भृगुः ॥

नृपे विख्याप्य गणेनोच्छेद्या इत्यर्थः । समूहकार्यार्थमागताय मुख्याय राज्ञा समूहपूजार्थं यद्दत्तं तस्य तेन समूहायासमर्पणे दण्डमाह **याज्ञवल्क्यः** (२. १८९–१९०)

समूहकार्य आयातान्कृतकार्यान् विसर्जयेत् ।
सदानमानसत्कारैः पूजयित्वा महीपतिः ॥
समूहकार्यप्रहितो यल्लभेत तदर्पयेत् ।
एकादशगुणं दाप्यो यद्यसौ नार्पयेत्स्वयम् ॥

**यल्लभेत** समूहसंमाननार्थमिति शेषः । राजदत्तं सर्वेषां समुदायिनां साधारणमतो यथांशतो विभज्य ग्राह्यं निःस्वादिभ्यो वा देयमित्याह **बृहस्पतिः**

ततो लभ्येत यत्किञ्चित्सर्वेषामेव तत्समम् ।
षाण्मासिकं मासिकं वा विभक्तव्यं यथांशतः ॥
देयं वा निःस्ववृद्धान्धस्त्रीबालातुररोगिषु ।
सान्तानिकादिषु तथा धर्म एष सनातनः ॥

**षाण्मासिकं** एकस्य पुरुषस्यैकस्य कुटुम्बस्य वा मासषट्कनिर्वाहपर्याप्तम् । एवं मासिकम् । एतच्चोपलक्षणम् । अन्यदपि किञ्चित्सर्वेषां साधारणं दर्शयति **स** एव

यत्तैः प्राप्तं रक्षितं वा गणार्थे वा ऋणं कृतम् ।
राजप्रसादलब्धं वा सर्वेषामेव तत्समम् ॥

**यत्तैः** मुख्यैः सीमाविवादादावधिकं क्षेत्रारामादिकं धर्माधिकरणन्यायतः **प्राप्तं** यच्चान्यैरपह्रियमाणं **रक्षितं** गणकार्यार्थं यच्च कृतं यच्च राजप्रीतिलब्धं तत्सर्वसमुदायिनां समं भवतीत्यर्थः । गणकार्यार्थं कृतमपि किञ्चिदृणं न सर्वेषां साधारणमित्याह **कात्यायनः** ( ६७४ )

गणमुद्दिश्य यत्किञ्चित् कृत्वर्णं भक्षितं भवेत् ।
आत्मार्थं विनियुक्तं वा देयं तैरेव तद्भवेत् ॥

**तैर्मुख्यैः** । ये समुदायानुग्रहात्तदन्तर्भावं प्राप्ता ये च समुदायक्षोभादिना ततो बहिर्भावं प्राप्तास्तेषु कश्चिद्विशेषमाह **स** एव (कात्या. ६७५–६७६ )

गणिनां श्रेणिवर्गाणां गताः स्युर्येपि मध्यताम् ।
प्राक्तनस्य धनर्णस्य समांशाः सर्व एव ते ॥
तथैव भोज्यवैभाज्यदानधर्मक्रियासु च ।
समूहस्थोंशभागी स्यात्प्रगतस्त्वंशभाङ्न तु ॥

इति श्रीकोदण्डपरशुरामेति····व्यवहारविवेकोद्द्योते संविद्व्यतिक्रमाख्यव्यवहारपदनिरूपणम् ॥ २२ ॥

अथ क्रीतानुशयाख्यव्यवहारपदनिरूपणम् । तत्र तस्य स्वरूपं दर्शयति **नारदः** (क्रीता. १)

क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते ।
क्रीतानुशय इत्येतद्विवादपदमुच्यते ॥

**न बहु मन्यते** परामर्शपूर्वकमेतन्न गृहीतमिति मन्यत इत्यर्थः । क्रीतस्य परीक्ष्यतामाह **बृहस्पतिः**

परीक्षेत स्वयं क्रीतं[1]मन्येषां च प्रदर्शयेत् ।
परीक्षितं बहुमतं ग्रहीता न पुनस्त्यजेत् ॥

तत्र चर्मादीनां सद्यःपरीक्ष्यत्वमाह **व्यासः**

चर्मकाष्ठेष्टकासूत्रधान्यासवरसस्य च ।
वसुकुप्यहिरण्यानां सद्य एव परीक्षणम् ॥ इति ।

**वसु**शब्देनात्र रूप्यं गृह्यते । दोह्यादीनां परीक्षाकालभेदानाह **नारदः** ( क्रीता. ५—६ )

त्र्यहाद् दोह्यं परीक्षेत पञ्चाहाद् वाह्यमेव तु ।
मुक्तावज्रप्रवालानां सप्ताहं स्यात्परीक्षणम् ॥
द्विपदामर्धमासं तु पुंसां तद्द्विगुणं स्त्रियाः ।
दशाहः सर्वबीजानामेकाहाल्लोहवाससाम् ॥

अत्र त्र्यहादिगणनं क्रयदिनमारभ्येति ज्ञातव्यम् । **दोह्यं** गवादिकम् । **वाह्यम**श्वादिकम् । **मुक्ते**ति रत्नस्याप्युपलक्षणम् । **द्विपदां**

---

१ 'स्वरूपं क्रीतम्' इति अ.

**पुंसां** दासानामित्यर्थः । **तद्द्विगुणं** मासमित्यर्थः । **स्त्रियाः** दास्या इत्यर्थः । **सर्वबीजान्यत्र** वापनार्थं गृहीतधान्यादीनि विवक्षितानि । भक्षणाद्यर्थं गृहीतानां पूर्वोदाहृतव्यासवचनेन सद्यःपरीक्ष्यत्वाभिधानात् । **कात्यायनः**

भूमेर्दशाहोऽनुशयः क्रेतुर्विक्रेतुरेव च ।

**भूमेर्गृह**क्षेत्रादिरूपायाः । **अनुशयः** परावर्तनकयोग्यः कालः परीक्षाकाल इति यावत् । अस्मिंस्त्र्यहादिरूपे परीक्षाकाले क्रीतस्य दोषदर्शने विक्रेत्रे तत्प्रतिदेयम् । तथा चोक्तं त्र्यहाद्दोह्यमित्यादिपरीक्षाकालमभिधाय **बृहस्पति**ना

अतोऽर्वाक्पण्यदोषस्तु यदि सञ्जायते क्वचित् ।
विक्रेतुः प्रतिदेयं तत्क्रेता मूल्यमवाप्नुयात् ॥

**सञ्जायते** ज्ञायत[1] इत्यर्थः । परीक्षाकालातिक्रमे तु दोषदर्शनेऽपि न तत्प्रतिदेयमित्याह **कात्यायनः** ( ६८८ )

अविज्ञातं तु यत्क्रीतं दुष्टं पश्चाद्विभावितम् ।
क्रीतं तत्स्वामिने देयं पण्यं कालेऽन्यथा न तु ॥

**पश्चाद्दुष्टं विभावितं** दोषवत्तया निर्णीतमित्यर्थः । **काले** परीक्षाकाले । अत्राविज्ञातं तु यत्क्रीतमित्यनेन क्रयात्प्रागपरीक्ष्य यत्क्रीतं तदेव परीक्षाकाले दोषदर्शने निवर्तनीयं यत्तु परीक्ष्य गृहीतं तन्न निवर्तनीयमिति दर्शितम् । अत्रार्थे **नारदो**ऽपि ( क्रीता. १६, ४ )

क्रीत्वा नानुशयं कुर्याद् वणिक् पण्यविचक्षणः ।
क्षयं वृद्धिं विजानीयात्पण्यानामागमं तथा ॥
क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः ।
परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत्पुनः ॥

**अनुशयं** पश्चात्तापम् । **पण्याना**मश्वादीनामस्मिन्देशे मूल्यस्य हानिरस्मिन्देशे तदाधिक्यमिति **क्षयवृद्धी** । एतद्देशसम्भवमि**त्यागमं** च क्रयात्प्रागेव **विजानीया**दित्यर्थः । परीक्षाकाल एव दोषदर्शनमन्तरेण क्रीतस्य प्रत्यर्पणे विशेषमाह **कात्यायनः** ( ६८६-८७ )

---

1 'जायते इत्यर्थः' अ-क.

क्रीत्वा वानुशयात्पण्यं त्यजेद्दोषादृते नरः ।
अजुष्टमेव काले तु स मूल्याद्दशमं वहेत् ॥
क्रीत्वा गच्छन्ननुशयं क्रयी हस्तमुपागते ।
षड्भागं तस्य मूल्यस्य दत्त्वा क्रीतं त्यजेन्नरः ॥

**अजुष्ट**मनुपभुक्तम् । **काले** परीक्षाकाले । अत्र मूल्यदशमभागदानमुपभोगाविनश्वरभूम्यादिविषयं षड्भागदानमुपभोगविनश्वरबीजादिविषयमिति व्यवस्था । बीजादिव्यतिरिक्तोपभोगविनश्वरवस्तुविषये विशेषमाह **नारदः** ( क्रीता. २-३ )

क्रीत्वा मूल्येन यः पण्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम् ॥
द्वितीयेऽह्नि ददत् क्रेता मूल्यात्त्रिंशांशमावहेत् ।
द्विगुणं तत्तृतीयेऽह्नि परतः क्रेतुरेव तत् ॥

अत्र **मन्यते** इति कथनाद्वस्तुतो दोषाभाव उक्तः । क्रयकाले मूल्यवृद्धिक्षयरूपदोषदर्शनमन्तरेण क्रीतस्य विक्रीतस्य वा प्रत्यर्पणे पुनर्ग्रहणे वा दण्डमाह **याज्ञवल्क्यः** ( २. २५८ )

वृद्धिं क्षयं वा वणिजा पण्यानामविजानता ।
क्रीत्वा नानुशयः कार्यः कुर्वन् षड्भागदण्डभाक् ॥

**वृद्धिं** मूल्यवृद्धि**मविजानता** क्रेत्रा एवं मूल्यक्षयमविजानता विक्रेत्रेत्यर्थः । **वणिग्**ग्रहणं क्रेतृविक्रेतृमात्रोपलक्षणम् । **षड्भागो** मूल्यस्य षष्ठो भागः । अत्राविजानतेत्यभिधानात् क्रयोत्तरकालं मूल्यवृद्धिज्ञाने मूल्यक्षयज्ञाने वा यथास्त ( यथाशास्त्र ? ) मनुशयः कार्य इत्यवगम्यते । परीक्षाकालातिक्रमणे प्रत्यर्पणे दण्डमाह **मनुः** ( ८. २२२-२२३ )

क्रीत्वा विक्रीय वा किंचिद्यस्येहानुशयो भवेत् ।
सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत वा ॥

---

१ 'क्रीत्वानुशयवान्पण्यं' इति ब.

परेण तु दशाहस्य न दद्यान्नापि दापयेत् ।
आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षट् ॥

**अनुशयो**ऽत्र दोषदर्शनपूर्वकः पश्चात्तापः । **दशाह**ग्रहणं पूर्वोक्तस्य परीक्षाकालस्योपलक्षणम् । सदोषमपि यद्युपभोगेन विकारं प्रापितं तर्हि परीक्षाकालमध्येऽपि न प्रतिदेयम् । अत एव **नारदः** (क्रीता. ७)

परिभुक्तं तु यद्वासः कृष्णरूपं मलीमसम् ।
सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत्पुनः ॥

**वासो**ग्रहणमुपलक्षणम् । एतत्सर्वमपरिभाषितविषयम् । यत्र तु परि-भाषणमस्ति तत्र तदनुसारेणैव प्रतिदानतद्भावादिकं[1] ज्ञातव्यम् । इति श्रीकोदण्डपरशुरामे········व्यवहारविवेकोद्द्योते क्रीतानुशयाख्यव्यवहा-रपदनिरूपणम् ॥ २३ ॥

अथ विक्रीयासम्प्रदानाख्यं व्यवहारपदनिरूपणम् । तत्र तस्य स्वरूपं दर्शयति **नारदः** (विक्री. १)

विक्रीय पण्यं मूल्येन क्रेतुर्यन्न[2] प्रदीयते ।
विक्रीयासंप्रदानं तद्विवादपदमुच्यते ॥

विक्रेतव्यप्रकारभेदेन द्वैविध्यं षड्विधत्वं चाह **स** एव (नारद, विक्री. २-३)

लोकेऽस्मिन्द्विविधं पण्यं जङ्गमं स्थावरं तथा ।
षड्विधस्तस्य तु बुधैर्दानादानविधिक्रमः ॥
गणिमं तुलिमं मेयं क्रियया रूपतः श्रिया ।

**दानं** विक्रयः । **आदानं** क्रयः । गणयित्वा यस्य क्रयविक्रयौ तद्गणि-मम् । एवं तुलिमादिकम् । **गणिम**माम्रफलादिकं **तुलिमं** कुङ्कुमसुवर्ण-चन्दनादिकं **मेयं** व्रीह्यादिकम् । **क्रियया** वाहनदोहनादिरूपया युक्तमिति शेषः । **रूपतः** रूपेण युक्तं वस्तु । **श्रिया** दीप्त्या समन्वितं पुष्परा-

१ अस्मादारभ्य 'तदभावादिकं ज्ञातव्यम्' इत्यन्तो भागो नास्ति ब-आदर्शे.
२ 'यत्र' इति अ-क.

गादिकम् । गृहीतमूल्येन विक्रेत्रा याचमानाय क्रेत्रे विक्रीतस्याप्रदाने यत्कर्तव्यं तदाह **स** एव ( नारद, विक्री० ४ )

विक्रीय पण्यं मूल्येन क्रेतुर्यो न प्रयच्छति ।
स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलम् ॥

स्थावरं विक्रीतं क्षयसहितं दापनीयः । जङ्गमं तु क्रियाफलेन सहितमित्यर्थः । **क्षयो**ऽत्र विक्रयानन्तरं जात उपभोगः । **क्रियाफलं** दोहनादिक्रियाफलं क्षीरादिकम् । एतच्च विक्रयकालापेक्षयार्पणकाले मूल्याधिक्ये ज्ञातव्यम् । मूल्यहानौ त्वाह **स** एव ( नारद, विक्री० ५ )

अर्घश्चेदवहीयेत सोदयं पण्यमावहेत् ।

**कल्पतरौ** तु अर्वाक्चेदपचीयेत—इति पाठः । **अर्वाक्** विक्रीतस्य क्रेतृसमर्पणात्पूर्व**मपचीयेत** हीनमूल्यं भवेत् **सोदयं पण्यमावहेत्**। विक्रयणकाले यावन्मूल्यं गृहीतं तावता मूल्येनार्पणकाले मूल्यह्रासवशाद्यावदुपचयसहितं लभ्यते तावद् दद्यादित्यर्थः । यदा तु मूल्यसाम्यं तदा पण्योपचयरूपस्योदयस्यासंभवात्

निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च ।
याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ॥

इति वचनोक्तवृद्धिसहितं पण्यं दाप्यः ( कात्या. ५०६ ) । तथा च **याज्ञवल्क्यः** ( २. २५४ )

गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति ।
सोदयं तस्य दाप्योऽसौ दिग्लाभं वा दिगागते ॥

यस्तु देशान्तरात्क्रयणार्थमागत्य क्रीणाति तस्मै देशान्तरे तत्पण्यविक्रये यो लाभस्तेन सहितं तत्पण्यं दापनीय इति **दिग्लाभं वा दिगागते** इत्यस्यार्थः । न केवलमर्घसाम्य एवैतद्देशान्तरलाभसहितपण्यदापनं किं तर्हि मूल्यस्य वृद्धौ क्षयेऽपि । अत एव **नारदः** ( विक्री. ५ )

स्थायिनामेष नियमो दिग्लाभं दिग्विचारिणाम् ।

**स्थायिनां** विक्रेतृदेशस्थायिनाम् । **एष नियमः** स्थावरस्य क्षयं दाप्य

इत्यादिवचनोक्तो नियम इत्यर्थः। विक्रेतुर्दण्डमाह **विष्णुः** (विष्णुधर्मसूत्र ५. १२६–७)—गृहीतमूल्यं यः पण्यं क्रेतुर्न दद्यात्तस्यासौ सोदयं दाप्यो राज्ञा च पणशतं दण्ड्यः। एतच्चानुशयरहितदृप्तविक्रेतृविषयम्। यस्तु विक्रीयानुशयवशान्नार्पयति यश्च क्रीत्वानुशयवशाद्दत्तमूल्यं पण्यं न गृह्णाति तौ प्रत्याह **कात्यायनः** (६८३)

क्रीत्वा प्राप्तं न गृह्णीयाद्यो न दद्याददूषितम्।
स मूल्याद्दशभागं तु दत्त्वा स्वं द्रव्यमाप्नुयात्॥
अप्राप्तेऽर्थक्रियाकाले कृते नैव प्रदापयेत्।
एवं धर्मो दशाहात्तु परतोऽनुशयो न तु॥

**अदूषितं** जलादिनेति शेषः। **अर्थक्रियाकालो** दोह्यवाह्यादिरूपस्य पण्यस्य दोहनवाहनादिकालः। विक्रेत्रा क्रेतृयाचितेनासमर्पणे तस्य द्रव्यस्य राजदैवाद्युपघाते विक्रेतुरेव हानिर्न तु क्रेतुरित्याह **नारदः** (विक्री० ६)

उपहन्येत वा पण्यं दह्येतापह्रियेत वा।
विक्रेतुरेव सोऽनर्थो विक्रीयासंप्रयच्छतः॥

**याज्ञवल्क्योऽपि** (२. २५६)

राजदैवोपघातेन पण्ये दोषमुपागते।
हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः॥

अत्र **याचितस्येति** विशेषणाद्याचनाभावे न विक्रेतुर्हानिः। विक्रेत्रा दीयमानस्य पण्यस्य क्रेत्राऽनुशयवशादनुपादाने क्रेतुरेव हानिरित्याह **नारदः**[1] (विक्री० ९)

दीयमानं न गृह्णाति क्रीतं पण्यं च यः क्रयी।
स एवास्य भवेद्दोषो विक्रेतुर्योऽप्रयच्छतः॥

**याज्ञवल्क्योऽपि** (२. २५५)

हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत्।

---

१ 'नारदः' इति नास्ति अ–क—आदर्शयोः,

**क्रेतृदोषो** दीयमानस्याग्रहणम् । क्रेतुर्हानिर्दत्तस्य मूल्यस्याभाव इत्यर्थः । क्रयानन्तरं यत्र क्रेत्रा न याचितं विक्रेत्रा च न समर्पितं जातश्च राजादिकृत उपघातस्तत्रोभयोरपि याचनानर्पणशैथिल्येन सापराधत्वसाम्यात्समा हानिः कल्पनीयेत्युक्तं **स्मृतिचन्द्रिकायां देवणभट्टैः** । अनुशयवशाद्दीयमानस्याग्रहणे विक्रीतस्याप्यन्यत्र विक्रये विक्रेतुर्नापराध इत्याह **नारदः** ( विक्री० ९ )

दीयमानं न गृह्णाति क्रीत्वा पण्यं च यः क्रयी ।
विक्रीणानस्तदन्यत्र विक्रेता नापराध्नुयात् ॥

**याज्ञवल्क्योऽपि** ( २. २५५ )

विक्रीतमपि विक्रेयं पूर्वक्रेतर्यगृह्णति ।

यो दुष्टवस्त्वदुष्टमित्युक्त्वा विक्रीणीते यो वा कश्चिद् विक्रीतं तत् क्रेत्रनुशयमन्तरेणाप्यन्यत्र विक्रीणीते तं प्रत्याह **नारदः** ( विक्री० ७-८ )

निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति ।
मूल्यं तद्द्विगुणं दाप्यो विनयं तावदेव तु ॥
तथान्यहस्ते विक्रीय योऽन्यस्मै तत्प्रयच्छति ।
सोऽपि तद्द्विगुणं दाप्यो विनयं तावदेव तु ॥

**याज्ञवल्क्योऽपि** ( २. २५७ )

अन्यहस्ते च विक्रीतं दुष्टं वादुष्टवद्यदि ।
विक्रीणीते दमस्तत्र मूल्यात्तु द्विगुणो भवेत् ॥

एतद्दुष्टस्यादुष्टत्वेन विक्रये द्विगुणदापनं तावद्दण्डाभिधानं च बुद्धिपूर्वकविक्रयविषयम् । अत एव **बृहस्पतिः**

ज्ञात्वा सदोषं यः पण्यं विक्रीणीताविचक्षणः ।
तदेव द्विगुणं दाप्यस्तत्समं विनयं तथा ॥

अबुद्धिपूर्वकविक्रये तु परिवर्तनमात्रम् । क्वचिदन्यत्रापि क्रयपरावृत्तिमाह **स** एव ( कात्या. ६९२ )

मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेन वा ।
अस्वतन्त्रेण मूढेन त्याज्यं तस्य पुनर्भवेत् ॥

अयं सर्वोऽपि विधिर्दत्तमूल्ये पण्ये द्रष्टव्यः । यत्र पुनः क्रेत्रा मूल्यमदत्त्वा वाङ्मात्रेण क्रयः कृतः क्रयपरावृत्तिर्न कर्तव्येत्येवमादिरूपा परिभाषा वा न कृता तत्र प्रवृत्तौ निवृत्तौ[1] वा न कश्चिद्दोषः । तथा च **नारदः** ( विक्री० १० )

दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तितः ।
अदत्तेऽन्यत्र समयान्न विक्रेतुरतिक्रमः ॥

यत्र तु वाङ्मात्रक्रयोऽयं मा भूदित्येतदर्थं क्रेत्रा विक्रेतुर्हस्ते किञ्चिद्दीयते तत्र विक्रेतृदोषात्क्रयासिद्धौ विक्रेत्रा क्रेत्रे तद् द्रव्यं द्विगुणं दातव्यम् । तथा च **याज्ञवल्क्यः** ( २. ६१ )

सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिपादयेत् ।

**सत्यङ्कारः** सत्यापनं कृतस्य क्रयस्य सत्यताकरणमिति यावत् । क्लीबे सत्यापनं[2] सत्यंकारः सत्याकृतिः स्त्रियामित्य**मरसिंहे**नाभिधानात् । सत्यंकाराय **कृतं** समर्पितं सत्यंकारकृतमित्यर्थः । क्रेतृदोषात् क्रयासिद्धौ त्वाह **व्यासः**

सत्यंकारं च यो दत्त्वा यथाकालं न दृश्यते ।
पण्यं भवेन्निसृष्टं तद्दीयमानमगृह्णतः ॥

**निसृष्टं भवेत्** उत्सृष्टं भवेदित्यर्थः । न केवलमत्र पण्यमात्रोत्सर्गः किं तु दत्तसत्यंकारद्रव्यसहितस्योत्सर्गो ज्ञातव्यः । इतरथा दत्तसत्यंकारद्रव्यस्यापि वाङ्मात्रक्रयकर्तृतुल्यत्वेन तस्मै विक्रेतुः सत्यंकारद्रव्यग्राहकत्व[3]कृतमन्यत्र विक्रयणाद्यपराधनिमित्तकं सत्यंकारद्रव्यस्य द्वैगुण्येन प्रतिदानं न स्यात् ॥ इति श्रीकोदण्डपरशुरामे····व्यवहारविवेकोद्द्योते विक्रीयासंप्रदानाख्यव्यवहारपदनिरूपणम् ॥ २४ ॥

---

१ 'निवृत्तौ' इति नास्ति अ-आदर्शे. २ 'क्रीते सत्यापनम्' इति **अ-क.** ३ 'द्रव्याग्राहकत्व०' इति **अ.**

अथ स्वामिपालविवादाख्यव्यवहारपदनिरूपणम् ॥ तस्य प्रतिपादनं प्रतिजानीते **मनुः** (८. २२९)

पशुषु स्वामिनां चैव पालानां च व्यतिक्रमे ।
विवादं संप्रवक्ष्यामि यथावद्धर्मतत्त्वतः ॥

गवादिपशुपालस्य भृतिपरिमाणं दर्शयति **नारदः** (वेत० १०)

गवां शताद्वत्सतरी धेनुः स्याद् द्विशते भृतिः ।
प्रतिसंवत्सरं गोपे सन्दोहश्चाष्टमेऽहनि ॥

**वत्सतरी** अतीतवत्सतावस्था द्विवर्षा गौरिति यावत् । **धेनुर्दो**ग्ध्री सवत्सेति यावत् । **सन्दोहः** सर्वासां गवां दोहः । गवां शते पाल्यमाने वत्सतरी शतद्वये पाल्यमाने धेनुः गोपालाय भृतित्वेन प्रतिसंवत्सरं देया । अष्टमेऽहनि सन्दोहश्च देय इत्यर्थः । सन्दोहो धेन्वा सह समुच्चीयते न वत्सतर्या । अत एव **बृहस्पतिः**

तथा धेनुभृतः क्षीरं लभेताह्न्यष्टमेऽखिलम् ।

**धेनुभृतः** धेन्वा भृतः द्विशतपालक इत्यर्थः । **कल्पतरुकारेण** धेनुभृतो[1] गोप इति व्याख्यातं तेन तन्मते वत्सतर्यापि सन्दोहस्य समुच्चय इति गम्यते । गोग्रहणं महिष्यादीनामप्युपलक्षणम् । एतदनुसारेण न्यूनाधिकसंख्याकगवादिपालने भृतीयत्ता परिकल्पनीया । एतच्च भृतीयत्ताभिधानं परिभाषितभृतिविशेषाभावविषयम् । सति तु परिभाषणे तदनतिक्रमेण देयम् । प्रकारान्तरेण भृतिपरिमाणमाह **मनुः** (८. २३१)

गवां क्षीरभृतो यस्तु स दुह्याद्दशतो वराम् ।
गोस्वाम्यनुमते भृत्यः सा स्यात्पालेऽभृते भृतिः ॥

**दशतः** दशानां दोग्ध्रीणां मध्ये **वरामुत्कृष्टां** तत्क्षीरभृतो **भृत्यः** गोपो दशद्रोग्ध्रीपालनकृत् भृत्यर्थं **दुह्यात्** । **सैषा भृतिः** प्राग्द्रव्यान्तरेणा**भृते** सति भवति । यस्तु द्रव्यान्तरेण भृतस्तत्र तदेव भृतिरित्यर्थः । एतदनुसारेण न्यूनाधिकसंख्याकगवादिपरिपालने भृतिः परिकल्पनीया । स्वामिनः पशुपालस्य प्रतिदिनं यत्कृत्यं तदाह **नारदः** ( वेत० ११ )

---

१ 'धेनुभृतो…एतदनुसारेण' इत्येष भागो नास्ति ब—आदर्शे.

उपानयेद्वा गोपालः प्रत्यहं रजनीक्षये ।
चीर्णाः पीताश्च ता गावः सायाह्ने प्रत्युपानयेत् ॥

**चीर्णाः** तृणादिकं भक्षितवतीः । **पीता** पीतवतीरित्यर्थः । गोग्रहणं पशुमात्रस्योपलक्षणम् । अत एव **याज्ञवल्क्यः** ( २. १६४ )

यथार्पितान्पशून्गोपः सायं प्रत्यर्पयेत्तथा ।

यावन्तः प्रातः स्वामिना समर्पितास्तावन्तः पशुपालेन तस्मै प्रत्यर्पणीया इत्यर्थः । पशुपालदोषेण गवादेर्मरणादौ तेन स दातव्य इत्याह **स एव** ( या. २.१६४ )

प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः ।

**नष्टाः** हृताः । प्रमादनाशश्च स्पष्टीकृतो **मनुना** ( ८. २३२ )

दष्टं नष्टं च कृमिभिः श्वहतं विषमे मृतम् ।
हीनं पुरुषकारेण प्रदद्यात्पाल एव तु ॥

**श्वहतं** शुना हतम् । **विषमे** दुर्गमप्रदेशे । **पुरुषकारः** पुरुषप्रयत्नः । यत्पुरुषकारेण हीनं सन्नाशादिकं प्राप्तं तद्दातव्यमित्यर्थः । पुरुषकारश्च दर्शितो **बृहस्पतिना**

कृमिचोरव्याघ्रभयाद् दरीश्वभ्राच्च पालयेत् ।
व्यायच्छेच्छक्तितः क्रोशेत्स्वामिने वा निवेदयेत् ॥

**व्यायच्छेत्** व्यसननिरासाय प्रयतेतेत्यर्थः । पुरुषकाराकरणे दण्ड्यत्वमप्याह **नारदः** ( वेत० १२–१३ )

स्याच्चेद्गोव्यसनं गोपो व्यायच्छेत्तत्र शक्तितः ।
अशक्तस्तूर्णमागम्य स्वामिने तन्निवेदयेत् ॥
अव्यायच्छन्नविक्रोशन् स्वामिने चानिवेदयन् ।
वोढुमर्हति गोपस्तं विनयं चैव राजनि ॥

**तं** गवादिकम् । नष्टगवादिदानं च मूल्यद्वारेण ज्ञातव्यम् । अत

१ अत आरभ्य ब–आदर्शे द्वित्राणि पत्राणि 'ग्रामान्तरालरूपं कल्पनीयम्' इत्यतः प्राग्गलितानीति भाति.

एव **विष्णुः** ( विष्णुधर्मसूत्र ५. १३७–१३८ )–दिवा पशूनां वृकाद्युपघाते पाले त्वनायति पालकदोषो विनष्टपशुमूल्यं स्वामिने दद्यात्–इति । **अनायति** अनागच्छति । दण्डे द्रव्यप्रमाणमाह **याज्ञवल्क्यः** (२. १६५)

पालदोषविनाशे तु पाले दण्डो विधीयते ।
अर्धत्रयोदशपणः स्वामिने द्रव्यमेव च ॥

**अर्धत्रयोदशपणः** अर्धरहितत्रयोदशपणः सार्धद्वादशपण इत्यर्थः । क्तास्तृतीयापूर्वपदाः समानाधिकरणेन समस्यन्त उत्तरपदलोपश्चेति **वार्तिककार**वचनादुत्तरपदलोपी कर्मधारयः । यत्तु कैश्चिदर्धाधिकत्रयोदशपणो दण्ड इत्युक्तं तदनादृत्यं सार्धद्विमात्रादिषु **महाभाष्यका**रादीनामर्धत्रिमात्रादिशब्दप्रयोगस्य दर्शनात् । क्वचित्पशुपालस्य दोषाभावमाह **मनुः** ( ८. २३३ )

विघुष्य तु हृतं चौरैर्न पालो दातुमर्हति ।
यदि देशे च काले च स्वामिनः स्वस्य शंसति ॥

**विघुष्य** शृङ्गकाहलवेण्वादिभिर्घोषं कृत्वा । **देशे** स्वाम्यवस्थानदेशे **काले** अपहरणकालाव्यवहितकाले । **स** एव ( मनु ८. २३५–३६ )

अजाविके तु संरुद्धे वृकैः पाले त्वनायति ।
यां प्रसह्य वृको हन्यात्पाले तत्किल्बिषं भवेत् ॥
तासां चेदवरुद्धानां चरन्तीनां मिथो वने ।
यामुत्प्लुत्य वृको हन्यान्न पालस्तत्र किल्बिषी ॥

सुगमस्थलस्थितानां पशुव्यक्तीनां वृकाद्युपघाते पुरुषप्रयत्नाकरणे पशुपालो दोषवानित्याद्यश्लोकस्यार्थः । दुर्गमस्थलस्थितानां तूपघाते पुरुषप्रयत्नस्य कर्तुमशक्यत्वान्न दोषवानिति द्वितीयश्लोकस्यार्थः । **व्यासो**ऽपि

पालग्राहे ग्रामघाते तथा राष्ट्रस्य विभ्रमे ।
यत्प्रनष्टं हृतं वा स्यान्न पालस्तत्र किल्बिषी ॥

गृहीतवेतनस्य पशुपालस्य दुर्गमे वने पशूंस्त्यक्त्वोपेक्षया गृहेऽवस्थाने तु दण्ड उक्तो **ब्रह्मपुराणे**

गृहीतमूल्यो गोपालस्तांस्त्यक्त्वा निर्जने वने ।
ग्रामचारी नृपैर्वध्यः शलाकी च वनेचरः ॥

**शलाकी** नापित इति व्याख्यातं **कल्पतरौ** । क्वचित्स्वामिनोऽपि दण्ड्यत्वमुक्तं **तत्रैव**

गोपालहस्तसक्ता गौस्तद्दोषान्म्रियते यदि ।
तदा स एव दण्ड्यस्तु शुल्कं दाप्यस्तु गोपतेः ॥
यदा रोगादिदोषेण म्रियते गौर्गृहे क्वचित् ।
तदा स गोपतिर्दण्ड्यो दत्त्वा गोपालवेतनम् ॥

**रोगादिदोषेण** स्वामिनोपेक्षया चिकित्साया अकरणे इति शेषः । गोग्रहणमत्र सर्वत्र पशुमात्रस्योपलक्षणं ज्ञातव्यम् । अत एव गोपालेऽभिहितं विधिं सर्वेषु पशुपालेष्वतिदिशति **नारदः** ( वेत० १७ )

अनेन सर्वपालानां विवादः समुदाहृतः । इति ।

दैवात्पशूनां मरणे तत्पालस्य निर्दोषत्वोपायमाह **स** एव ( वेत० १७ )

मृतेषु च विशुद्धिः स्याद्वालशृङ्गादिदर्शनात् ।

मृतेषु च हिरिति ( बहिरिति ? ) शेषः । **आदि**शब्देन कर्णादीनामुपसंग्रहः । अत एव **मनुः** ( ८. २३४ )

कर्णौ चर्म च बालांश्च बस्तिं स्नायुं च रोचनाम् ।
पशुस्वामिषु दद्यात्तु मृतेष्वङ्काभिदर्शने ॥

क्वचिदङ्कादि दर्शयेदिति पाठः । **अङ्कः** शृङ्गकर्णादिरूपं चिह्नम् । **आदि**शब्देन साक्षिणामुपादानम् । मृतेषु पशुषु अङ्कादिकं स्वामिने दर्शयेद्रोचनादिकं सप्रयोजनं तत्तस्मै दद्याच्चेत्यर्थः । ग्रामादिषु गवादिप्रचरणार्थमकृष्टः कश्चिद्भागः परिकल्पनीय इत्याह **याज्ञवल्क्यः** ( २. १६६ )

ग्रामेच्छया गोप्रचारो भूमिराजवशेन वा ।

**ग्रामेच्छया** ग्रामीणजनेच्छया **भूमिवशेन** भूम्यल्पत्वमहत्त्वापेक्षया । **राजवशेन** राजेच्छया वा **गोप्रचारो** गवादीनां गमनागमनसौकर्यार्थं परिकल्पनीय इत्यर्थः । गवां स्थानासनसौकयार्थं ग्राममभितोऽपरं स्थानमकृष्टं क्षेत्रग्रामान्तरालरूपं कल्पनीयमित्याह **स** एव (या.२.१६७)

धनुःशतं परीणाहो ग्रामक्षेत्रान्तरं भवेत् ।
द्विशतं खर्वटस्य स्यान्नगरस्य चतुःशतम् ॥

**परीणाह**शब्देनात्र सर्वासु दिक्ष्वनुप्तसस्यं स्थलं गृह्यते । एतादृशं धनुःशतपरिमितं ग्रामक्षेत्रयोरन्तरं कार्यम् । खर्वटस्य शतद्वयपरिमितं नगरस्य शतचतुष्टयपरिमितमित्यर्थः । खर्वटोऽनेककारुकृषीवलयुक्तो ग्रामः । प्रचुरकण्टकसन्तानो ग्रामः खर्वट इति केचित् । परिहारदेशसंनिहितक्षेत्रानावरणे गवादिभिः क्षेत्रोपघाते पशुरक्षिणामदण्ड्यत्वाभिधानात्क्षेत्रं कण्टकादिभिरावृतं कर्तव्यम् । अत एव **मनुः** (८.२३७, २३८)

धनुःशतं परीहारो ग्रामस्य स्यात्समन्ततः ।
तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि ।
न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम् ॥

**परीहारः** अनुप्तप्रदेशः । एतेनावृतक्षेत्रोपघाते पशुरक्षिणां दण्ड इत्युक्तं भवति । आवरणं च निबिडं सस्योत्पत्तेः प्रागेव कर्तव्यम् । तथा च **कात्यायनः** (६६६)

अजातेष्वेव सस्येषु कुर्यादावरणं महत् ।
दुःखेन विनिवार्यन्ते[1] लब्धस्वादुरसा मृगाः ॥

**मृगग्रहणमुपलक्षणम्** । **नारदः** (सीमा० ४१)

पथि क्षेत्रे वृतिः कार्या यामुष्ट्रो नावलोकयेत्
न लङ्घयेत्पशुर्न श्वा न भिन्द्याद्यां च शूकरः ।

**वृतिरावरणम्** । **पथि क्षेत्रे** मार्गसंनिहिते क्षेत्रे । एतद्ग्रामादिसमी-

---

१ अस्यानन्तरं 'दण्डयेदित्यर्थः सपालेन विपालेन च' इत्यतः प्राक् द्वित्राणि पत्राणि गलितानि ब—आदर्शे.

पवर्तिक्षेत्रस्याप्युपलक्षणम्। आवरणे कथंचित्स्थितं छिद्रं पुनः कण्टका-दिना पूरणीयम्। तथा च **मनुः** (८. २३९)

वृतिं च तत्र कुर्वीत यामुष्ट्रो नावलोकयेत्।
छिद्रं वा पूरयेत्सर्वं श्वसूकरमुखानुगम्॥ इति।

कृतमावरणमप्यतिक्रम्य पशुभिः सस्यनाशे कृते यत्कर्तव्यं तदाह स एव (मनु ८. २४०)

पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथवा पुनः।
सपालः शतदण्डार्हो विपालं वारयेत्पशुम्॥

**ग्रामान्तीये** ग्रामसमीपवर्तिनि। सपालः पशुः पणशतदण्डार्हस्त-त्पशुपालः शतं दण्डनीय इत्यर्थः। विपालः पशुर्लकुटादिना ताडयित्वा कर्णादिषु गृहीत्वा वा निवारणीय इत्यर्थः। अत एव **कात्यायनः** (६६४)

क्षेत्रारामविवीतेषु गृहेषु पशुवाटिषु।
ग्रहणं तत्प्रविष्टानां ताडनं च बृहस्पतिः॥

**विवीत**शब्देनान्यपरिगृहीतस्तृणकाष्ठप्रदेशो गृह्यते। **पशुवाटिषु** गोष्ठादिषु। **ग्रहणं** वत्सादिविषयम्। **ताडनं** स्थूलवृषभादिविषयम्। ताडनं च निवारणार्थादधिकं न कर्तव्यम्। अत एवोक्तं **तेनैव** (कात्या. ६६५)

अधमोत्तममध्यानां पशूनां चैव ताडने।
स्वामी तु विवदेद्यत्र दण्डं तत्र प्रकल्पयेत्॥

यत्रान्याय्ये ताडने स्वामी विवदेत तत्र राजा ताडयितारं दण्डयेदि-त्यर्थः। सपालेन विपालेन च पशुना सस्याद्युपघाते कृते पशुस्वामिना क्षेत्रस्वामिने पशुभक्षितसस्यादिमूल्यं दातव्यम्। तथा चाग्रे वक्ष्यते। आवरणातिक्रमेण पशुना सस्यनाशे कृते पशुपालस्य यो दण्ड उक्तः स तेन पशावनिवार्यमाणे वेदितव्यः। तथा च **नारदः** (सीमा. २८)

उत्क्रम्य तु वृतिं यः स्यात्सस्यघातो गवादिभिः ।
पालः शास्यो भवेत्तत्र न चेच्छक्तो निवारयेत् ॥

आवरणाभावेनापरिहार्ये सस्योपघातेऽपि न पालकस्य दण्डस्तत्रापरिवृतं धान्यमिति पूर्वोदाहृतमनुवचनात् ( मनु ८. २३८ )। अमुमर्थं **नारदो**प्याह ( सीमा० ४० )

ग्रामोपान्ते च यत्क्षेत्रं विवीतान्ते महापथे ।
अनावृतं चेत्तन्नाशे न पालस्य व्यतिक्रमः ॥

पालस्य तं नाशमजानानस्येति विशेषः । अत एव **याज्ञवल्क्यः** ( २.१६२ )

पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते ।
अकामतः कामचारे चोरवद्दण्डमर्हति ॥ इति ।

**पथि ग्रामविवीतान्ते** मार्गादिप्रत्यासन्ने । एतच्चादीर्घकालप्रचारविषयम् । दीर्घकालप्रचारेऽजानानस्यापि[1] पशुरक्षणे सावधानत्वाभावेनापराधित्वाद्भवत्येव दण्डः । अत एव विष्णुः (विष्णुधर्मसूत्र ५.१४६,१४८)– पथि ग्रामविवीतान्ते न दोषोऽल्पकालम्—इति । अमतिपूर्वकेऽल्पकालप्रचारे यथा न पशुपालस्य दण्डस्तथा सपालस्य विपालस्य च पशोः स्वामिना न सस्यादिमूल्यं दातव्यम् । तस्यापि प्रचारस्यापरिहार्यतया दोषाभावात् । यत्तु

सर्वत्र तु सदो देयः क्षेत्रिकस्येति धारणा ।

इति **मनु**वचनं ( ८.२४१ ) तदेतद्व्यतिरिक्तविषयम् । **सर्वत्र** सपाले च विपाले च पशौ । **सदः** क्षेत्रफलम् । अनावृतक्षेत्रेषु यत्र दोषाभाव उक्तस्तद्व्यतिरिक्तविषये दण्डमाह **मनुः** ( ८.२४१ )

क्षेत्रेष्वन्येषु तु पशुः सपादं पणमर्हति ।

**अन्येषु** पथि क्षेत्रे परिवृते इति पूर्वोक्तावृतमार्गादिप्रत्यासन्नक्षेत्रव्यतिरिक्तेषु । पालकस्वामिनोर्दण्ड्यत्वे वक्तव्ये पशोर्दण्ड्यत्वाभिधानं पशुबहुत्वे प्रतिपशूक्तदण्डप्राप्त्यर्थम् । **पशुश**ब्देनात्र पालकः स्वामी वा

1 'प्रचारेन्वजानानस्यापि' इति ब; 'प्रचारेच्च जानानस्य' इति अ-क.

गृह्यते । तत्र सपाले पशौ पालको दण्ड्यः, अपाले तु स्वामीति व्यवस्था । अत एव **गौतमः** ( गौतमधर्मसूत्र १२. १६–१७ )–पशुपीडने स्वामिदोषः पालसंयुक्ते तु तस्मिन्–इति । **नारदो**ऽपि ( सीमा० ३५ )

नष्टा या पालदोषेण गौः क्षेत्रं तु विनाशयेत् ।
न तत्र स्वामिनो दण्डः पालस्तद्दण्डमर्हति ॥

पालकस्याभावे भावे वा क्षेत्रफलदानं तु स्वामिन एव । तथा च **स** एव ( नारद, सीमा० ३८ )

गोभिस्तु भक्षितं सस्यं यो नरः प्रतियाचते ।
सामन्तानुमतं देयं धान्यं यत्तत्र वापितम् ॥

यत्तु सपालेऽपि पशौ स्वामिनो दण्ड्यत्वप्रतिपादकं

सस्यान्निवारयेद्गास्तु चीर्णे दोषो द्वयोर्भवेत् ।
स्वामी सदमं दाप्यः पालस्ताडनमर्हति ॥

इति **बृहस्पति**वचनं, सदश्च दमश्च **सदमं,** यच्च

यावत्सस्यं विनश्येत्तु तावत् स्यात्क्षेत्रिणः फलम् ।
गोपस्ताड्यश्च गोमी तु पूर्वोक्तं दण्डमर्हति ॥

इति **याज्ञवल्क्य**वचनं ( २. १६१ ) **तावत्क्षेत्रिणः फलं** गोमिना दातव्यं स्यादिति शेषः । **गोमी** पशुस्वामी । तदेतद् वचनद्वयमपि **समूलसस्यनाशविषयम्** । तथा च **नारदः** ( वेत० २९ )

समूलसस्यनाशे तु तत्स्वामी प्राप्नुयात्सदम् ।
वधेन गोपो मुच्येत दण्डं स्वामिनि पातयेत् ॥

**तत्स्वामी** सस्यस्वामी । **सदं प्राप्नुयात्** पशुस्वामिन इति शेषः । **वधो**ऽत्र कशादिना ताडनम् । **पूर्वोक्त**मिति परामृष्टपशुविशेषविषयो **दण्डो दर्शितो याज्ञवल्क्ये**नैव ( २. १५९–१६० )

माषानष्टौ तु महिषी सस्यघातस्य कारिणी ।
दण्डनीया तदर्धं तु गौस्तदर्धमजाविके ॥

भक्षयित्वोपविष्टानां यथोक्ताद् द्विगुणो दमः ।
सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम् ॥

महिष्याः स्वामी अष्टौ माषान्दण्ड्यो गोस्वामी तु चतुरश्छागस्वामी तु द्वौ मेषस्वामी तु द्वौ । **एषां** पशूनामनिवारितानां **भक्षयित्वा** तत्रैव शयितानां स्वामी यथोक्ताद् दण्डाद् द्विगुणं दण्डं ग्राह्यः । विवीतस्थ-तृणाद्युपघातेऽपि सस्योद्घातवद्दण्डनीयाः । खरस्वाम्युष्ट्रस्वामी च महि-षीस्वामिवद्दण्डनीयः । पशुस्वामिनो दण्डे वक्तव्ये महिषीत्यादिपदोपादानं मानवपशुशब्दोपादानवत् प्रतिपशु दण्डो ग्राह्य इत्येवमर्थम् । सवत्सानां महिष्यादीनां भक्षयित्वोपविष्टानां स्वामी चतुर्गुणं दण्डं दद्यात्

वसतां द्विगुणः प्रोक्तः सवत्सानां चतुर्गुणः ।

इति वचनात् । अत्रापराधानुसारेण दण्डस्योचितत्वात्ताम्रिक एव माषो ग्राह्यो न तु सौवर्णो राजतो वेत्युक्तं **स्मृतिचन्द्रिकायाम्** । माषः कर्षपरिमितस्य कार्षापणस्य षोडशो भागः । अयमेव पलस्य पञ्च-सुवर्णपरिमितत्वपक्षे पलचतुर्थांशस्य विंशतिमाषात्मकस्य कार्षापणस्य

माषो विंशतिमो भागः पणस्य परिकीर्तितः ।

इति **नारदे**नोक्तो (परिशिष्ट ५८) विंशो भागोऽपि भवति । एते-नोभयथाप्यर्थभेदाभावाद्यत्कैश्चिदुक्तं

संख्या रश्मिरजोमूला मनुना समुदाहृता ।
कार्षापणान्ता सा दिव्ये नियोज्या विनये तथा ॥

इति **बृहस्पति**वचनविरोधान्[1]नारदोक्तो विंशो भागो नाश्रयणीयः किं तु मनूक्तः षोडशो भाग एवाश्रयणीय इति तदपास्तम् । यस्तु—सपादं पण-मर्हति—इति मनूक्तो (८. २४१) दण्डः स बुद्धिपूर्वकविषयः, याज्ञ-वल्क्योक्तो दण्डस्त्वबुद्धिपूर्वकविषय इति न विरोधः । यत्तु पालस्य दण्ड्यत्वप्रतिपादकं **विष्णु**वचनं (विष्णुधर्मसूत्र ५. १४०–१४१)—महिषी चेत् सस्यावघातं कुर्यात्पालस्त्वष्टौ माषान्दण्ड्योऽपालायां स्वामी

१ 'इति वचनविरोधात्' इति अ.

इति तदपि समूलसस्योपघातविषयमन्यतरदण्डस्याल्पापराध[1] एवोचितत्वात्। यत्तु **स्मृत्यन्तरं**

पणस्य पादौ द्वौ गां तु द्विगुणं महिषीं तथा।
तथाऽजाविकवत्सानां पादो[2] दण्डः प्रकीर्तितः॥

इति तद्भक्षयित्वोपविष्टा ये गवादयस्तद्विषयम्। यत्तु

माषं गां दापयेद्दण्डं द्वौ माषौ महिषीं तथा।
तथाजाविकवत्सानां दण्डः स्यादर्धमाषकः॥

इति **नारद**वचनं (सीमा० ३१) तन्मुहूर्तमात्रभक्षणविषयम्। अत एवोक्तं **शङ्खलिखिताभ्यां**—रात्रौ चरन्ती गौः पञ्च माषान्दिवा त्रीन् मुहूर्ते माषं ग्रासे त्वदण्डः—इति। **ग्रासे** कवलमात्रभक्षणे। अत्र याज्ञवल्क्योक्तदण्डापेक्षया पञ्च त्रीनिति न्यूनाधिकदण्डाभिधानमपराधतारतम्यानुसारेण व्यवस्थापनीयम्। एतदपुरःस्थितपालकविषयम्। प्रत्यक्षचारकाणां तु—चौरदण्डः स्मृतो बुधैः—इति **नारद**वचनात्। पशुविषये क्वचिददण्ड्यत्वमाह **नारदः** (सीमा० ३६-३७)

राजग्रहगृहीतो वा वज्राशनिहतोऽपि वा।
अथ सर्पेण वा दष्टो वृक्षाद्वा पतितो भवेत्॥
व्याघ्रादिभिर्हतो वापि व्याधिभिर्वाप्युपद्रुतः।
न तत्र दोषः पालस्य न च दोषोऽस्ति गोमिनाम्॥

**याज्ञवल्क्यः** (२. १६३)

महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः।
पालो येषां न ते मोच्या दैवराजपरिप्लुताः॥

**महोक्षो** दृप्तो वृषभः। **उत्सृष्टपशवः** वृषोत्सर्गादिविधानेन देवतोत्सर्गेण त्यक्ताः। **सूतिका** प्रसूता अनिर्दशाहा। **आगन्तुकः**

---

१ 'अन्यतरस्याल्पापराध' इति **अ**; 'अन्यतरदण्डस्यापराध' इति **ब**. २ 'पादो दण्डः प्रकीर्तितः' इत्यारभ्य 'दण्डः स्यादर्धमाषकः' इत्यस्मात्प्राग्यो भागः स नास्ति **अ-ब**-आदर्शयोः.

स्वयूथात्परिभ्रष्टः सन्देशान्तरात्समागतः । आदिशब्दाद् हस्त्यादीनां ग्रहणम् । येषां पालको नास्ति तेऽपि दैवराजोपहताः सस्यादिनाशकारिणो न दण्ड्या इत्यर्थः । **मनुः** (८.२४२)

अनिर्दशाहां गां सूतां वृषं देवपशूंस्तथा ।
सपालान्वा विपालान्वा अदण्ड्यान्मनुरब्रवीत् ॥

**देवपशवः** देवालयेषु देवोपभोगार्थं स्थापिताः पशवः । **नारदः** (सीमा० ३०)

गौः प्रसूता दशाहं तु महोक्षा वाजिकुञ्जराः ।
निवार्याः स्युः प्रयत्नेन तेषां स्वामी न दण्डभाक् ॥

**स्वामि**ग्रहणमत्र पालस्याप्युपलक्षणम् । **वाजि**शब्देनात्र प्रजारक्षणार्थं स्थापिता राजकीया अश्वा गृह्यन्ते । अत **एवोशना**

अदण्ड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः ।
अदण्ड्याः काणकूटाश्च वृषाश्च कृतलक्षणाः ॥
अदण्ड्यागन्तुका गौश्च सूतिका चाभिसारिणी ॥ इति ।

**कूटाः** एकशृङ्गाः । **कृतलक्षणाः** प्रतप्तायसेन कृतचिह्नाः । अभिसारिणी स्वयूथात्प्रच्युता पुनः स्वयूथाभिगामिनी । यत्तु—महिषी चेत्सस्यनाशं कुर्यात्पालकस्त्वष्टौ माषान् दण्ड्योऽपालकायाः स्वामी अश्वस्तूष्ट्रो गर्दभो वा गौश्चेत्तदर्धं तदर्धमजाविकं चेद्भक्षयित्वोपविष्टेषु द्विगुणम्—इत्यश्वानां दण्ड्यत्वप्रतिपादकं **विष्णु**वचनं (विष्णुधर्मसूत्र५.१४०-१४५) तद्वणिगादिभिर्विक्रयाद्यर्थं स्थापिता ये अश्वास्तद्विषयम् । **शङ्खलिखितौ**—अश्वतरगजवाजिनश्चादण्ड्या अवश्यं च शनैरपवार्याः । उत्सवे श्राद्धदिने च सर्वासामपि गवामदण्ड्यत्वमाह**ोशना**

अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च ।

श्राद्धकालादौ गोभिरुपभुक्तमतिशयेन श्रेयस्करं भवतीत्यभिप्रेत्याह **व्यासः**

आक्रम्य च द्विजैर्भुक्तं परिक्षीणैश्च बान्धवैः ।
गोभिश्च नरशार्दूल वाजपेयाद्विशिष्यते ॥

श्राद्धकालादौ गोभिर्भक्षितं यदि तत्स्वामी याचते तदा दोषमाहोशना

गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते ।
पितरस्तस्य नाश्नन्ति नाश्नन्ति त्रिदिवौकसः ॥

एतद् व्यवहारपदमुपसंहरति **मनुः** ( ८. २४४ )

एतद्विधानमातिष्ठेद्धार्मिकः पृथिवीपतिः ।
स्वामिनां च पशूनां च पालानां च व्यतिक्रमे ।

इति श्रीकोदण्डपरशुरामे···व्यवहारविवेकोद्द्योते स्वामिपालविवादाख्यव्यवहारपदनिरूपणम् ॥

## अथ सीमाविवादाख्यव्यवहारपदनिरूपणम् ।

तत्र मन्वाद्युक्तसीमाशब्दस्योपलक्षणत्वमभिप्रेत्य क्षेत्रजो विवाद इत्युद्दिश्य[1] तत्स्वरूपं दर्शितं **नारदेन** ( सीमा० १ )

सेतुकेदारमर्यादा विकृष्टाकृष्टनिश्चयः ।
क्षेत्राधिकारो यत्र स्याद्विवादः क्षेत्रजस्तु सः ॥

**सेतु**र्जलप्रवाहबन्धः । **केदारं** क्षेत्रं तन्**मर्यादा** सीमा **विकृष्टो** लाङ्गलप्रहतो[2] देशः । **अकृष्ट**स्तद्रहितः खिल इति यावत् । एतेषां निश्चयो यत्र विवादे स्यात्स **क्षेत्राधिकारः** क्षेत्रविषयको **विवादः क्षेत्रज** इत्युच्यत इत्यर्थः । अयं च विवादः षट्प्रकारो भवतीत्याह **कात्यायनः** ( ७३२ )

आधिक्यं न्यूनता वांशे अस्तिनास्तित्वमेव च ।
अभोगभुक्तिः सीमा च षड्विवादस्य हेतवः ॥

ममेतोऽधिका भूरस्तीत्युक्ते नेति विवाद **आधिक्य**विवादः । एतावती भूस्तव नेत्युक्ते ममैतावतीति यो विवादः स **न्यून**ताविवादः । अत्र ममां-

---

१ 'इत्युपदिश्य' इति क. २ 'लाङ्गलहतो' इति अ.

शोऽस्तीत्युक्ते नेति यो विवादः सोऽ**स्तित्व**विवादः । अत्र तवांशो नास्तीत्युक्ते विद्यत इत्येवंविधो विवादो **नास्तित्व**विवादः । मामिका भूस्त्वया प्रागभुक्तेवेदानीं भुज्यत इत्युक्ते प्रागपि मयेयं भूर्भुक्तेत्येवंविधो विवादोऽ**भोगभुक्ति**विवादः । इयं मर्यादा मामिकाया भुव इत्युक्ते नेति विवादः **सीमा**विवादः । इति षड्विधो विवाद इत्यर्थः । सीमा चतुर्विधा देशसीमा ग्रामसीमा क्षेत्रसीमा गृहसीमा चेति । तस्याश्चतुर्विधाया अपि[1] यथासम्भवं पञ्चविधत्वमाह **नारदः**

ध्वजिनी मत्स्यिनी चैव नैधानी भयवर्जिता ।
राजशासननीता च सीमा पञ्चविधा स्मृता ॥

**ध्वजिनी** वृक्षादिचिह्नयुता । **मत्स्यिनी** जलचिह्नयुक्ता । **नैधानी** निखाततुषाङ्गारादि लक्षिता । **भयवर्जिता** वादिप्रतिवादिनोर्मिथः संप्रतिपत्त्या कृता । **राजशासननीता** सीमालिङ्गानां सीमापरिज्ञातॄणामभावे राज्ञा कृता । ध्वजिन्यादीनां स्वरूपं सीमाया भेदान्तरं च दर्शितं **व्यासेन**

निम्नोन्नता च ध्वजिनी नैधानी राजकारिता ।
स्थिरा पञ्चविधा सीमा मत्स्यिनी तु चला स्मृता ॥
ग्रामयोरुभयोर्यत्र गर्तः सीमाप्रवर्तकः ।
निम्नोपलक्षिता सा तु शास्त्रविद्भिरुदाहृता ॥
शरकुब्जकवल्मीका यत्र देवगृहाणि च ।
अश्मकूटाश्च दृश्यन्ते ज्ञेया सा तु समुन्नता ॥
ग्रामयोरुभयोः सीम्नि वृक्षा यत्र समुन्नताः ।
समुच्छ्रिता ध्वजाकारा ध्वजिनी सा प्रकीर्तिता ॥
इष्टकाङ्गारसिकता शर्कराश्मिकपालिकाः ।
निहिता यत्र दृश्यन्ते नैधानी सा प्रकीर्तिता ॥

---

१ 'अपि यथासम्भवमि'त्यारभ्य…'नैधानी निखात०' इत्यतः प्राग्यो भागः स नास्ति **ब**–आदर्शे.

साक्ष्यभावे द्वयोर्यत्र प्रभुणा परिकल्पिता ।
सामन्तानुमता सीमा ज्ञेया सा राजकारिता ॥
स्वच्छन्दगा बहुजला झषकूर्मसमन्विता ।
नित्यप्रवाहिणी या स्यात्सीमा सा मत्स्यिनी मता ॥

सीमालिङ्गानि ग्रामादिप्रवेशकाले कर्तव्यानीत्याह **बृहस्पतिः**

निवेशकाले कर्तव्यः सीमाबन्धविनिश्चयः ।
प्रकाशोपांशुचिह्नैश्च लक्षितः संशयापहः ॥

बध्यतेऽयमिति बन्धः सीमायां बन्धः **सीमाबन्धः** । विनिश्चीयतेऽनेनेति **विनिश्चयः** सीमाबन्धश्चासौ विनिश्चयश्च सीमाबन्धविनिश्चयः प्रकटगुप्तचिह्नसहितः सीमानिर्णयहेतुः स्थलगुडकः सीमायां कर्तव्य इत्यर्थः। प्रकाशगुप्तचिह्नानि दर्शयति **स** एव

वापीकूपतडागानि चैत्यारामसुरालयाः ।
स्थलनिम्ननदीस्रोतःशरगुल्मनगादयः ॥
प्रकाशचिह्नान्येतानि सीमायां कारयेत्सदा ।
अश्मानोऽस्थीनि गोबालास्तथा भस्मकपालिकाः ॥
करीषमिष्टकाङ्गाराः शर्करा वालुकास्तथा ।
यानि चैवंप्रकाराणि कालाद्भूमिर्न भक्षयेत् ॥
तानि सन्धिषु सीमाया अप्रकाशानि कारयेत् ।

**चैत्य**मिष्टकादिभिर्विरचितं चत्वरादिकम् । **स्थल**मुन्नतो भूप्रदेशः । **निम्नं** परिखा । **नगा** अश्वत्थादयो वृक्षाः ।

सीमावृक्षांस्तु कुर्वीत न्यग्रोधाश्वत्थकिंशुकान् ।
शाल्मलीशालतालांश्च क्षीरिणश्चैव पादपान् ॥
गुल्मान्वेणूंश्च विविधान् शमीवल्लीस्थलानि च ।

इति **मनु**स्मरणात् ( मनु ८. २४६—२४७ ) । **आदि**शब्देन मार्गादीनां ग्रहणम् । **अस्थीनि** पश्वाद्यस्थीनि । गुप्तचिह्नानां स्थापनप्रकारमाह **स** एव

करीषास्थितुषाङ्गारशर्कराश्मकपालिकाः ।
सिकतेष्टकगोवालकार्पासास्थीनि भस्म च ॥
प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेत् ।

**कार्पासास्थीनि** कार्पासवीजानि । एतानि लिङ्गानि विवेकोद्गमयुक्ता वाला वृद्धैर्ज्ञापनीया इत्याह **स** एव

ततः पोगण्डवालानां प्रयत्नेन प्रदर्शयेत् ।
वार्द्धके च शिशूनां ते दर्शयेयुस्तथैव च ॥
एवं परम्पराज्ञाने सीमाभ्रान्तिर्न जायते ।

**प्रदर्शयेत्** इति छान्दसं बहुत्वे एकवचनम् । एतेषां सीमालिङ्गानां कथंचिदभावे निर्णयोपायमाह **नारदः** ( सीमा० ६ )

निम्नगापहृतोत्सृष्टनष्टचिह्नासु भूमिषु ।
तत्प्रदेशानुमानैश्च[1] प्रमाणैर्भोगदर्शनैः ॥

**निम्नगाया** नद्या **अपहृतेन** अपहरणेन **उत्सृष्टानि** स्वस्थानात्प्रच्युतानि **नष्टानि** वा **चिह्नानि** यासां तास्तथोक्ताः । **प्रमाणैः** साक्षिसामन्तादिभिः । सत्स्वपि लिङ्गेषु तत्राविश्वासे सीमाविवाद उक्तैर्लिङ्गैस्तन्निर्णयो राज्ञा कार्य इत्याह **मनुः** ( ८. २५२ )

एतैर्लिङ्गैर्नयेत्सीमां राजा विवदमानयोः ।

सत्स्वपि लिङ्गेषु तत्र विप्रतिपत्तौ तेषामभावे च **साक्षिवशान्निर्णयः** । तथा च **स** एव ( मनु ८. २५३ )

यदि संशय एव स्याल्लिङ्गानामपि दर्शने ।
साक्षिप्रत्यय एव स्यात्सीमावादविनिर्णयः ॥

**साक्षिप्रत्ययः** साक्षिहेतुकः । **अपिशब्दः** लिङ्गाभावपक्षपरिग्रहार्थः । ते **साक्षिणः** सीमालिङ्गविषयाः सीमाविषया वा । सीमासाक्षिषु विशेषमाह **बृहस्पतिः**

---

१ 'तत्र देशानुमानैश्च' इति अ-क.

आगमं च प्रमाणं च भोगं कालं च नाम च ।
भूभागलक्षणं चैव ये विदुस्तेऽत्र साक्षिणः ॥

**प्रमाण**मियत्ता । उभयेषामपि साक्षिणामभावे सामन्तवशान्निर्णयः । तथा च **मनुः** ( ८. २५८ )

साक्ष्यभावे तु चत्वारो ग्रामसीमान्तवासिनः ।
सीमाविनिर्णयं कुर्युः प्रयता राजसंनिधौ ॥

**याज्ञवल्क्यो**ऽपि ( २. १५२ )

सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा ।

**समग्रामाश्चत्वारोऽष्टा**वित्यादिप्रकारेण समसंख्याकाः **सामन्ताः** प्रत्यासन्नग्रामक्षेत्राद्युपभोक्तारः । तथा च **कात्यायनः** (७३६)

ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्तितम् ।
गृहं गृहस्य निर्दिष्टं समन्तात्परिरभ्य हि ॥

**ग्रामस्य समन्ता**च्चतसृषु दिक्षु **परिरभ्य** सम्बध्य स्थितो **ग्रामः सामन्तः** । एवं क्षेत्रादावपि । सामन्तानां प्रकटदोषयुक्तत्वे सामन्तसामन्तवशान्निर्णयः कार्य इत्याह **स** एव ( कात्या. ७३९ )

स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात् ।
तत्संसक्तैस्तु कर्तव्य उद्धारो नात्र संशयः ॥

एतेषामपि प्रकटदोषयुक्तत्वे तत्सामन्तवशान्निर्णय इत्याह **स** एव ( कात्या. ७४० )

संसक्तसक्तदोषेषु तत्संसक्ताः प्रकीर्तिताः ।

यदा त्वेतेषामपि प्रकटा दुष्टता तदा मौलादिवशान्निर्णय इत्याह **स** एव ( कात्या. ७४०, ७४२ )

कर्तव्या न प्रदुष्टास्तु राज्ञा धर्मं विजानता ।
त्यक्त्वा दुष्टांस्तु सामन्तानन्यान्मौलादिभिः सह ॥
संमिश्र्य कारयेत्सीमामेवं धर्मविदो विदुः ।

**अन्यान्** सामन्त[1]-तत्सामन्त-तत्सामन्तव्यतिरिक्तान् सीमालिङ्गाभिज्ञान्नागरादीनित्यर्थः। **मौलादिभिः** मौलवृद्धोद्धृतैः। **संमिश्र्य** मेलयित्वा। नागरादयश्च दर्शिता **नारदेन** (सीमा० २)

नागरा ग्रामगणिनो ये च वृद्धतमा नराः।

मौलादीनां स्वरूपं दर्शितं **कात्यायनेन** (७४३-७४५)

ये तत्र पूर्वे सामन्ताः पश्चाद्देशान्तरं गताः।
तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्तिताः॥
निष्पाद्यमानं यैर्दृष्टं तत्कार्यं नृगुणान्वितैः।
वृद्धा वा यदि वावृद्धास्ते वृद्धाः परिकीर्तिताः॥
उपश्रवणसंभोगकार्याख्यानोपचिन्तकाः।
उद्धरन्ति ततो यस्मादुद्धृतास्ते ततः स्मृताः॥

**नृगुणान्वितैः** पुरुषगुणान्वितैः। ये परम्परया कार्यज्ञातारस्ते उद्धृता इति भावः। यदा तु सामन्ता न प्रकटदोषयुक्ताः प्रतिवादिना तु कश्चिद्दोष उच्यते तदा विशेष उक्तस्तेनैव (कात्या. ७४६)

सामन्ताः साधनं पूर्वमनिष्टोक्तौ गुणान्विताः।
द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणा[2] मताः॥

**अनिष्टोक्तौ** प्रतिवादिना दोषाभिधाने तत्सामन्तास्ततो द्विगुणा ग्राह्याः। तेष्वपि दोषाभिधाने तत्सामन्तास्तद्द्विगुणा ग्राह्याः। तत्रापि तथात्वे मौलवृद्धादयः सामन्तत्रिगुणा ग्राह्या इत्यर्थः। यदा साक्ष्यादीनामेतेषामभावस्तदा त्वाह **मनुः** (८. २५९-२६०)

सामन्तानामभावे तु मौलानां सीमसाक्षिणाम्।
इमानप्यनुयुञ्जीत पुरुषान् वनगोचरान्॥
व्याधाञ्शाकुनिकान्गोपान्कैवर्तान्मूलखानकान्।
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान्॥

---

१ 'सामन्त-तत्सामन्तव्यतिरिक्तान्' इति क. २ 'त्रिगुणा' इत्यनन्तरं 'त्रिगुणा ग्राह्याः' इत्यस्माग्र्यो भागः स गलितः ब-आदर्शे.

एतच्च वनगोचराणां ग्रहणं सीमासंनिहितप्रदेशकर्षकाणामभावे ज्ञेयम्। अत एव **नारदः** ( सीमा० ३ )

ग्रामसीमासु च बहिर्ये स्युस्तत्कृषिजीविनः।
गोपाः शाकुनिका व्याधा ये चान्ये वनगोचराः॥ इति।

पाठक्रमोऽत्र विवक्षित इत्याह **स्मृतिचन्द्रिकाकारः**। एते सामन्तादयः सर्वत्र स्थावरविवादे सेत्वादिविवादे च निर्णायकाः। तथा च **कात्यायनः** ( ७३७, ७३४, ७३५ )

तेषामभावे सामन्ता मौलवृद्धोद्धृतादयः।
स्थावरे षट्प्रकारेपि नात्र कार्या विचारणा॥
क्षेत्रवास्तुतडागेषु कूपोपवनसेतुषु।
समन्तभावात्सामन्तैः कुर्यादत्र विनिर्णयम्॥
ग्रामसीमासु च तथा तद्वन्नगरदेशयोः।

**तेषां** साक्षिणाम्। **बृहस्पतिरपि**

सर्वत्र स्थावरे वादे विधिरेष प्रकीर्तितः।

**याज्ञवल्क्योऽपि** ( २. १५४ )

आरामायतनग्रामनिपानोद्यानवेश्मसु।
एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु॥

**आयतनं** निवेशनं पलालादिस्थापनार्थं कृतः प्रदेशः। **निपानं** पानीयस्थानं कूपादिकम्। **वर्षाम्बुप्रवहः** वृष्ट्युद्भूतजलप्रवाहः।

पुनराह **कात्यायनः** ( ७४९ )

क्षेत्रकूपतटाकानां[1] केदारारामयोरपि।
गृहप्रसादावसथेष्वेवं देवगृहेषु च॥

**केदारः** क्षुद्रसेतुयुक्तः क्षेत्रविशेषः गोबलीवर्दन्यायात्पृथङ्निर्देशः। **प्रसादोऽत्र** प्रासादः। राज्ञा साक्षिसामन्तादयो ग्रामीणानां वादिप्रति-

---

१ 'तडागानां' इति क.

वादिनोश्च समक्षं प्रष्टव्यास्तैरुक्तं च पत्रे लेखनीयमित्याह **मनुः** ( ८. २५४-५५ )

ग्रामेयककुलानां तु समक्षं सीमसाक्षिणः ।
प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः ॥
ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निर्णयम् ।
तथा तं च निबध्नीयात्समस्तांस्तांश्च नामतः ॥

**सीमलिङ्गानीति** सीमालिङ्गसाक्ष्यभिप्रायेण । सीमासाक्षिणस्तु सीमां ब्रूयुः । सत्येन शापयेद्विप्रम् ( मनु ८. ११३ )—इत्यादि साक्षिप्रकरणोक्तशपथैः शापितास्ते साक्ष्यादयो ब्रूयुरित्याह **बृहस्पतिः**

शपथैः शापिताः स्वैः स्वैः ब्रूयुः सीमाविनिर्णयम् ।
दर्शयेयुश्च लिङ्गानि तत्प्रमाणमिति स्थितिः ॥

ये साक्षिसामन्तादयः सीमालिङ्गानि दर्शयितुं न शक्नुवन्ति सीमामात्रं जानन्ति ते कथं ब्रूयुरित्यपेक्षायामाह **मनुः** ( ८. २५६ )

शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः ।
सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्तां समञ्जसम् ॥

**उर्वीं** मृदम् । सीमां क्रममाणा इति शेषः । **नयेयुः** निर्णयं कुर्युः । **समञ्जसं** सम्यग्यथा भवति तथा । स्रगपि रक्तैव धारणीया यथाह **याज्ञवल्क्यः** ( २. १५२ )

सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा ।
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥

**समग्रामा** इत्यभिधानादेकस्य निवृत्तिः सूचिता तां स्पष्टयति **नारदः** ( सीमा० ९ )

नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि ।
गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता ॥

उभयसंमतेनैकेनापि सीमानिर्णयः कार्यः । तथा च **बृहस्पतिः**

ज्ञातृचिह्नैर्विना साधुरेकोप्युभयसंमतः ।

रक्तमाल्याम्बरधरो मृदमादाय मूर्धनि ॥
सत्यव्रतः सोपवासः सीमान्तं दर्शयेन्नरः ॥

**ज्ञातृचिह्नैर्विना** सीमाया ज्ञातृणां लिङ्गानां वाभावे। **नारदोऽपि** ( सीमा० १० )

एकश्चेदुन्नयेत्सीमां सोपवासः समुन्नयेत् ।
रक्तमाल्याम्बरधरः क्षितिमारोप्य मूर्धनि ॥

साक्षिसामन्तादीनां सीमाक्रमणदिनादारभ्य पक्षत्रयपर्यन्तं रोगादिरूपदैविकराजिकोपघाताभावे निर्णयो न तु सीमाक्रमणानन्तरमेव च । अत एव **कात्यायनः** ( ७५१ )

सीमाचङ्क्रमणे कोशे पादस्पर्शे तथैव च ।
त्रिपक्षपक्षसप्ताहं दैवराजिकमिष्यते ॥

यथाक्रममिति शेषः । यदा पक्षत्रयाभ्यन्तरे साक्षिणां रोगादिदैविकराजिकोपद्रवदर्शनेन प्रकारान्तरेण वाऽसत्यवादित्वनिश्चयस्तदा दण्डमाह **मनुः** ( ८. २५७ )

यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः ।
विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम् ॥

**यथोक्तेन** शिरोभिस्ते गृहीत्वोर्वीमित्यादिनोक्तप्रकारेण । **नयन्तो** निर्णयं कुर्वन्तः याथातथ्येनेति शेषः । **द्विशतं** पणशतद्वयम् । पणशतद्वयं दण्डं प्रत्येकं दाप्या इत्यर्थः । सामन्तानामनृतवादित्वे दण्डमाह **नारदः** ( सीमा० ७ )

अथ चेदनृतं ब्रूयुः सामन्ताः सीमनिर्णये ।
सर्वे पृथक् पृथक् दण्ड्या राज्ञा मध्यमसाहसम् ॥

सामन्तव्यतिरिक्तानां तत्संसक्तादीनामनृतवादित्वे दण्डमाह **स एव**

शेषाश्चेदनृतं ब्रूयुर्नियुक्ता भूमिकर्मणि ।

---

१ अत आरभ्य 'एकश्चे······सोपवासः' इत्यन्तो भागो गलितो **ब**–आदर्शे.

प्रत्येकं तु जघन्यास्ते विनेयाः पूर्वसाहसम् ॥
मौलवृद्धादयश्चान्ये दण्डनीयाः पृथक् पृथक् ।
विनेयाः प्रथमेनैव साहसेनानृते स्थिताः ॥

( नारद, सीमा. ८ )

आदिशब्देनोद्धृतगणादीनां ग्रहणम् । **दण्डनीयाः** अनृतवादित्वेन दण्डयितुमर्हाः **मौलवृद्धादयः पृथक् पृथक् प्रथमेन साहसेन विनेया** दण्ड्या इत्यर्थः । अत्र साक्ष्यपेक्षया सामन्तादीनां दण्डाधिक्यं वाचनिकमिति न कोऽपि दोषः शङ्कनीयः । अथवा मनूक्तसाक्षिशब्दस्य सत्यार्थाभिज्ञत्वपरत्वमाश्रित्य मनुवचनं गोपालादिवनेचरविषयत्वेन योजनीयम् । कूटसाक्षिणां सर्वस्वापहारः[1] कार्य इति **विष्णुवचनं** ( विष्णुधर्मसूत्र ५. १७५ ) सामान्यविषयतया श्रूयमाणमपि दण्डगौरवादत्र[2] भूमिवादविषये योजनीयः ( योजनीयम् ? ) । साक्ष्यादीनां निर्णयार्थमानीतानामनुक्तौ भेदेनोक्तौ च दण्डमाह **कात्यायनः** (७५०,७४१)

बहूनां तु गृहीतानां न सर्वे निर्णयं यदि ।
कुर्युर्भयाद्वा लोभाद्वा दाप्यास्तूत्तमसाहसम् ॥
सीमाज्ञान्न ( अज्ञानेन ? ) हि मुच्यन्ते[3] सामन्ता निर्णयं प्रति ।
अज्ञानोक्तौ दण्डयित्वा पुनः सीमां विचारयेत् ॥
कीर्तिते यदि भेदः स्याद् दण्ड्यास्तूत्तमसाहसम् ।

**सामन्त**ग्रहणमुपलक्षणम् । साक्ष्यादीनां सर्वेषामज्ञानोक्तौ भेदोक्तौ च पुनर्विचारणं लेख्यप्रमाणेन कर्तव्यम् । अत एव **शङ्खलिखितौ**—सामन्तविरोधे लेख्यप्रत्ययः—इति । सीमाचिह्नानां तत्परिज्ञातॄणां चाभावे राजा स्वेच्छया निर्णयं कुर्यादित्याह **नारदः** ( सीमा० ११ )

यदा तु न स्युर्ज्ञातारः सीमाया न च लक्षणम् ।
तदा राजा द्वयोः सीमामुन्नयेदिष्टतः स्वयम् ॥

---

१ 'सर्वस्वापहरणं विष्णुवचनम्' इति **अ–क.** २ 'दण्डगौरवादत्र······योजनीयः' इति **अ–ब–क.** ३ 'सीमाज्ञाने महि मुच्यन्ते' इति **ब.**

**याज्ञवल्क्योऽ**पि ( २.१५३ )

अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्तिता ।

**प्रवर्तिता** प्रवर्तयिता । प्रयोजकव्यापारवृत्तिरत्र वृत्तिधातुः ( वृतु-धातुः ? ) । यदि विप्रतिपत्तिविषयीभूता भूमिरेकस्य ग्रामक्षेत्रादेरत्यन्तोपकारी तदा सा सकला भूमिर्यत्रोपकारातिशयस्तत्रैव राज्ञा योजनीया न तूभयत्र । तथा च **मनुः** ( ८. २६५ )

सीमायामविषह्यायां स्वयं राजा च धर्मवित् ।

प्रदिशेद्भूमिमेकेषामुपकारादिति स्थितिः ॥

**अविषह्यायां** ज्ञातृचिह्नरहितायाम् । सीमानिर्णयो निर्णयान्तरवदावेदनानन्तरमेव[1] न राज्ञा कर्तव्यः किं तु यदा सेतुप्रभृतीनि सीमालिङ्गानि व्यवधायकाभावात् स्फुटं दृश्यन्ते तदा कर्तव्य इत्याह **स** एव ( मनु ८. २४५ )

सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयोः ।

ज्येष्ठे मासि नयेत्सीमां सुप्रकाशेषु सेतुषु ॥

**ज्येष्ठे मासी**त्युपलक्षणम् । यत्रास्या नद्या दक्षिणपार्श्ववर्तिनी भूमिरमुकस्य ग्रामस्य वामपार्श्ववर्तिन्यमुकस्येत्येवं ग्रामादीनां सीमात्वेन परिकल्पिता नदी कदाचिद् ग्रामान्तरसम्बन्धिनीं भूमिं भित्त्वा प्रवहन्ती पूर्वं दक्षिणपार्श्वस्थितां कांचिद्भूमिं वामपार्श्वनिविष्टां करोति तथा यत्र राज्ञैकग्रामसम्बन्धिनी भूमिरपरत्र योज्यते तत्र कथं निर्णय इति संशये तथा यद्ग्रामपार्श्वे भूमिः स्थापिता राज्ञा च यत्र ग्रामे योजिता तस्यैव सा भूमिरिति निर्णयं सोपपत्तिकमाह **बृहस्पतिः**

अन्यग्रामात्समाहृत्य दत्तान्यस्य यदा मही ।

महानद्याथवा राज्ञा कथं तत्र विचारणा ॥

नद्योत्सृष्टा राजदत्ता यस्य तस्यैव सा मही ।

अन्यथा न भवेल्लाभो नराणां राजदैविकः ॥

---

१ "॰नन्तरमेव राज्ञा कर्तव्यः' इति अ.

क्षयोदयौ जीवनं च दैवराजवशान्नृणाम् ।
तस्मात्सर्वेषु कार्येषु तत्कृतं न विचालयेत् ॥

**दैवशब्दस्य** भाग्यवाचित्वान्नदीकृतमपि दैवकृतं भवतीत्याह **स** एव

ग्रामयोरुभयोर्यत्र मर्यादा कल्पिता नदी ।
कुरुते दानहरणं भाग्याभाग्यवशान्नृणाम् ॥
एकत्र कूलपातं तु भूमेरन्यत्र संस्थितिम् ।
नदीतीरे प्रकुरुते तस्य तां न विचालयेत् ॥

**तस्य** नदीवशात्प्राप्तभूमिकस्य । **तां** प्राप्तां भूमिम् । न **विचालयेत्** नान्यथा कुर्यात् पूर्वस्वामी नावच्छिन्द्यादित्यर्थः । पूर्वस्वामिना कृतसस्यावापाया भूमेर्नद्योत्सर्गे तु तेषामुप्तसस्यानां फलं पूर्वस्वामिना ग्राह्यम् । तथा च **स** एव

क्षेत्रं ससस्यमुल्लङ्घ्य भूमिश्छिन्ना यदा भवेत् ।
नदीस्रोतःप्रवाहेण पूर्वस्वामी लभेत ताम् ॥

**तां** ससस्यां भूमिम् । उप्तसस्यफललाभपर्यन्तमेतत् । तत्फललाभानन्तरं तु न पूर्वस्वामी तां भूमिं लभेतेत्यवगन्तव्यम् । पूर्वोदाहृतवचनबलेन तथा तात्पर्यस्यावगमात् । राजदत्तां पूर्वस्वामी न विचालयेत्—इति सामान्येनोक्तं तत्र काचिद्राजदत्ता विचालनीया काचिन्नेति विशेषशोधनं करोति **स** एव

या राज्ञा क्रोधलोभेन छलन्यायेन वा हृता ।
प्रदत्तान्यस्य दुष्टेन न सा सिद्धिमवाप्नुयात् ॥
प्रमाणरहितां भूमिं भुञ्जतो यस्य या हृता ।
गुणाधिकाय वै दत्ता तस्य तां न विचालयेत् ॥

**प्रमाणरहितां** स्वत्वहेतुप्रतिग्रहादिप्रमाणरहिताम् । गृहादिषु प्रवेशकालादारभ्य वर्तमाना या प्राचीना व्यवस्था सा प्रतिवेशिकादिभिस्तथैव परिपालनीया नान्यथा कर्तव्येत्याह **स** एव

निवेशकालादारभ्य गृहवार्यापणादिकम् ।

येन यावद्यथा भुक्तं तस्य तन्न विचालयेत् ॥

**येन** स्वामिना **यावत्** प्रचारभूम्यादियुक्तं **यथा** येन पूर्वादिदिगभिमुखद्वारादियुक्तत्वादिरूपेणोपभुक्तं **तत् तस्य** स्वामिनः सकाशान्न विचालयेदित्यर्थः । अत्र निवेशकालादारभ्येत्यभिधानान्मध्ये कृताया व्यवस्थाया निवर्त्यत्वं दर्शितम् । निवेशकालादारभ्य स्थितानि गवाक्षादिकानि प्रातिवेशिकाद्यनिष्टकारीण्यपि न निवर्तनीयानीत्युक्तं **तेनैव**

वातायनं प्रणालीं च तथा निर्यूहवेदिकाः ।
चतुःशालस्यन्दनिकां प्राङ्निविष्टां न चालयेत् ॥

**वातायनं** गवाक्षः । **प्रणाली** पाषाणादिनिर्मितजलनिर्गमोपायः[1] । **निर्यूहो** गृहकोणेति **स्मृतिचन्द्रिकायां** निर्यूहो द्वारनिर्गतः काष्ठविशेष इति **कृत्यकल्पतरौ** । **वेदिका** रथ्यादिप्रदेशे संस्कृतोन्नता भूमिः । चतुर्णां शालानां समाहारः **चतुःशालं** तस्मात्स्यन्दनिका वृष्टिजलनिपातः । चतुःशालपदं तृणगृहस्योपलक्षणम् । **कात्यायनोऽपि** ( ७५२ )

मेखलाभ्रमनिष्कासगवाक्षान्नोपरोधयेत् ।
प्रणालीं गृहवास्तुं च पीडयन्दण्डभाग्भवेत् ॥

**मेखला** भित्तिमूलबन्धः । **भ्रमो** जलनिर्गमः । **निष्कासो** हर्म्यादिविनिर्गतकाष्ठादिनिर्मितमस्पृष्टभूमिकमुपवेशनस्थानम् । **गृहवास्तुर्**निवासभूमिः । प्रागविद्यमानाः परानिष्टकारिण एते न कर्तव्या इत्याह **स एव** ( कात्या. ७५३ )

निवेशसमयादूर्ध्वं नैते योज्याः कदाचन ।
दृष्टिपातं प्रणालीं च न कुर्यात्परवेश्मसु ॥

**दृष्टिपातो** गवाक्षः । **परवेश्मसु** परवेश्माभिमुख्येन ॥ परकुड्यसमीपे पुरीषोत्सर्गादिकं न कर्तव्यमित्याह **बृहस्पतिः**

वर्चःस्थानं वह्निचयं गर्तोच्छिष्टाम्बुसेचनम् ।
अत्यारात्परकुड्यस्य न कर्तव्यं कथंचन ॥

---

1 'पाषाणादिमयो जलनिर्गमोपायः' ब.

**वर्चःस्थानं** मलोत्सर्गस्थानम् । **अत्याराद**तिसमीपे । अरत्निद्वय-परिमिते प्रदेशे इत्यर्थः । अत एव **कात्यायनः** ( ७५४ )

विण्मूत्रोदकसेकं च वह्निश्वभ्रनिवेशनम् ।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत् ॥

सम्यक् अनिवारितं सरन्त्यस्मिन्निति संसरणशब्दार्थकथनपूर्वकं तस्या-निरोद्धव्यत्वमाह **बृहस्पतिः**

यान्त्यायान्ति जना येन पशवश्चानिवारिताः ।
तदुच्यते संसरणं न रोद्धव्यं तु केनचित् ॥

चतुष्पथादीनामप्यनवरोद्धव्यतामाह **नारदः** ( क्षेत्रजवि० १५ )

अवस्करस्थलश्वभ्रभ्रमस्यन्दनिकादिभिः ।
चतुष्पथसुरस्थानराजमार्गान्न रोधयेत् ॥

चतुष्पथराजमार्गयोः स्वरूपं दर्शितं **कात्यायनेन** ( ७५५ )

सर्वे जनाः सदा येन प्रयान्ति स चतुष्पथः ।
अनिषिद्धा यथाकालं राजमार्गः स उच्यते ॥

अनिषिद्धा इत्यस्य पूर्वेणान्वयः । यत्राकाले राजकीयैर्गमनं प्रतिषिध्यते स राजमार्ग इत्यर्थः । यस्य क्षेत्रस्य मध्ये समीपे वा सर्वदा मार्गोस्ति तत्र तन्निरोधो न कर्तव्यः । तथा च **शङ्खलिखितौ**—मार्गक्षेत्रे पथि विसर्गं राजमार्गे रथस्य परिवर्तनम्—इति । पथो विसर्गः **पथि विसर्गः**। राजमार्गे यावता प्रदेशेन रथः परिवर्तते तावत्प्रदेशस्त्यक्तव्य इत्यर्थः । संसरणाद्यवरोधकारिणो दण्डमाह **बृहस्पतिः**

यस्तत्र[1] सङ्करं श्वभ्रं वृक्षारोपणमेव वा ।
कामात्पुरीषं कुर्याच्च तस्य दण्डस्तु माषकः ॥

**सङ्करः** शकटादिसंकीर्णता । **वृक्ष**ग्रहणं लतादीनामप्युपलक्षणम् । **माषो**ऽत्र ताम्रिको ग्राह्योऽपराधानुसारेण दण्डस्य परिकल्पयितुमुचितत्वात् । राजमार्गे पुरीषोत्सर्गेऽधिकं दण्डमाह **मनुः** ( ९. २८२ )

---

१ अयं श्लोको गलितो ब–आदर्शे.

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि ।
स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत् ॥

आपन्नादिषु वाग्दण्ड एवेत्युक्तं **तेनैव** ( मनु ९. २८३ )

आपद्गतस्तथा वृद्धो गर्भिणी बाल एव च ।
परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः ॥

**परिभाषणं** निष्ठुरभाषणम् । तडागादावत्यधिकं दण्डमाह **कात्यायनः** ( ७५८ )

तडागोद्यानतीर्थानि योऽमेध्येन विनाशयेत् ।
अमेध्यं शोधयित्वा तु दण्डयेत्पूर्वसाहसम् ॥

मलिनवस्त्रक्षालनादिना यस्तीर्थानि दूषयति सोऽप्येवमेव दण्ड्य इत्याह **स** एव ( कात्या. ७५९ )

दूषयेत्सिद्धतीर्थानि स्थापितानि महात्मभिः ।
पुण्यानि पावनीयानि प्राप्नुयात्पूर्वसाहसम् ॥

मर्यादाभेदनादिषु दण्डमाह **याज्ञवल्क्यः** ( २. १५५ )

मर्यादायाः प्रभेदे तु सीमातिक्रमणे तथा ।
क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥

**मर्यादायाः** भेदने सीमालिङ्गविनाशने पूर्वसाहसो दण्डः । **सीमातिक्रमे** सीमामतिक्रम्य कर्षणे उत्तमसाहसः क्षेत्रस्यापहरणे मध्यमसाहस इत्यर्थः । यत्तु—सीमाभेत्तारमुत्तमसाहसं दण्डयित्वा पुनः सीमां कारयेत्—इति **विष्णु**वचनं ( विष्णुधर्मसूत्र ५. १७२ ) तत्र **सीमाभेत्ता** सीमामतिलङ्घ्य कर्षकः पुनः सीमाकरणं पुनस्तत्र कर्षणस्याकरणमित्येवं व्याख्येयम् । ततश्च न पूर्ववाक्येन विरोधः । एतच्चोत्तमसाहसाभिधानमर्धसीमातिक्रमे वेदितव्यम् । कृत्स्नसीमातिक्रमे तु दण्डविशेष उक्तः **शङ्खलिखिताभ्यां**—सीमाव्यतिक्रमे त्वष्टसहस्रम्—इति । अल्पसीमातिक्रमेऽल्पं दण्डमाह **वृद्धमनुः**

स्थापिताश्चैव मर्यादा उभयोर्ग्रामयोः सदा ।
अतिक्रामन्ति ये पापास्ते दण्ड्या द्विशतं दमम् ॥

याज्ञवल्क्येन सीमालिङ्गनाशे यो दण्ड उक्तः सोऽल्पदण्डत्वाद्गृहसीमालिङ्गविनाशे ज्ञातव्यः । क्षेत्रसीमालिङ्गनाशे त्वधिको दण्ड उक्तः **शङ्खलिखिताभ्यां**—क्षेत्रमर्यादाभेदेऽष्टशतम्—इति । ग्रामादिसीमालिङ्गनाशने त्वितोऽप्यधिको दण्ड ऊह्यः । याज्ञवल्क्येन यः क्षेत्रापहरणे मध्यमसाहसोऽभिहितः स बलात्कारेणापहरणे वेदितव्यः । प्रकारान्तरेण त्वपहरणे दण्ड उक्तो **मनुना** ( ८. २६४ )

गृहं तटाकमारामं क्षेत्रं वा भीषया हरन् ।
शतानि पञ्च दण्ड्यः स्यादज्ञानाद् द्विशतो दमः ॥

यत्तु—क्षेत्रोदकापहरणेऽष्टशतम्—इति **शङ्खलिखित**वचनं तद्बलात्कारेण सोदकशालेयादिक्षेत्रहरणे वेदितव्यम् । अपह्रियमाणक्षेत्रादिबाहुल्ये तु तदनुसारेणाधिको दण्ड ऊहनीयः ॥ सीमावृक्षाणामुभयसाधारणत्वान्नैकेनैव तत्फलादिकं ग्राह्यमित्याह **कात्यायनः** ( ७६० )

सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः ।
फलं पुष्पं च सामान्यं क्षेत्रस्वामिषु निर्दिशेत् ॥

क्षेत्रयोः स्वामिषु **क्षेत्रस्वामिषु** । एतेनैकस्यैतद्वृक्षसम्बन्धिसकलफलादिग्रहणे तदनुसारेण दण्डो ग्राह्य इति सूचितम् । यद्येकस्वामिकायां भूमौ वृक्षादिरुत्पन्नः, अपरस्वामिकाया भूमेरुपरि शाखाः प्रसृतास्तत्र कस्तद्वृक्षादिस्वामीत्यपेक्षायामाह **स एव** ( कात्या. ७६१ )

अन्यक्षेत्रे तु जातानां शाखा यत्रान्यसंस्थिताः ।
स्वामिनं तं विजानीयाद्यस्य क्षेत्रे तु संश्रिताः ॥

**संश्रिताः** आश्रिताः प्ररूढा इति यावत् ॥ परक्षेत्रे सेतुकूपादिप्रवर्तनं तत्स्वाम्याद्यनुज्ञालाभपूर्वकं कर्तव्यमित्याह **याज्ञवल्क्यः** ( २. १५७ )

स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्तयेत् ।
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः[1] ॥

**तदभावे** स्वामिनस्तद्वंश्यस्य वाभावे । यः स्वामिनं तद्वंश्यं तदभावे राजानं वा अनङ्गीकार्य परक्षेत्रे सेतुं करोति न स सेत्वाद्युत्पन्नफलभागी किं तु स्वाम्यादयः फलभाजः । अतस्तदनुमतिं गृहीत्वा सेत्वादि कर्तव्यमित्यर्थः । स्वक्षेत्रे परेण क्रियमाणं सेतुकूपादिकं न प्रतिषेद्धव्यमित्याह **स** एव (या. २. १५६)

न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः ।
परभूमिं हरन्कूपः स्वल्पक्षेत्रो बहूदकः ॥

**अल्पबाधः** अल्पपीडाकरः । **कल्याणकारकः** बहूपकारकरः । **स्वल्पक्षेत्रः** स्वल्पक्षेत्रवर्ती । आभ्यां विशेषणाभ्यां यः सेतुः क्षेत्रमध्यवर्तितया बहुपीडाकरो नद्यादिसंनिहितक्षेत्रवर्तितयाल्पोपकारको वा तदा निषेद्धव्य इति दर्शितम् । **नारदो**ऽपि (क्षेत्रजवि० १७)

परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिध्यते ।
महागुणोऽल्पदोषश्चेद् वृद्धिरिष्टा क्षये सति ॥

**क्षये** अल्पक्षेत्रक्षये सत्यपि **वृद्धि**र्यतद्दृष्टा (? यत इष्टा) अतो **महागुणः** स्वक्षेत्रेऽप्युपकारकरः अल्पदोषश्चेत्तदा न निषेद्धव्य इत्यर्थः । जीर्णानां परकीयानां सेत्वादीनामुद्धारोपि तत्स्वाम्याद्यनुज्ञां गृहीत्वा कार्यः । तथा च **नारदः** (सीमा० २०-२२)

पूर्वप्रवृत्तमुत्सृष्टमदञ्ज्ञा स्वामिनं तु यः ।
सेतुं प्रवर्तयेद्यस्तु न स तत्फलभाग्भवेत् ॥
मृते तत्स्वामिनि पुनस्तद्वंश्ये चापि मानवे ।
राजानमामन्त्र्य ततः कुर्यात्सेतुप्रवर्तनम् ॥
अतोऽन्यथा क्लेशभाक् स्याद् मृगव्याधनिदर्शनात् ॥

**मृगव्याधदृष्टान्तः** स्पष्टीकृतस्तेनैव (नारद, क्षेत्रजवि० २२)

---

1 'महीपतिः' इति अ.

इषवस्तस्य नश्यन्ति यो विद्धमनुविध्यति ।

**तस्य** मृगव्याधस्य । **कात्यायनो**ऽपि ( ७६२-७६३ )

अस्वाम्यनुमतेनैव संस्कारं कुरुते तु यः ।
गृहोद्यानतटाकानां संस्कर्ता लभते न तु ॥
देयं स्वामिनि चायाते न निवेद्य नृपे यदि ।
अथावेद्य प्रयुक्तस्तु तद्गतं लभते व्ययम् ॥

नृपे अनावेद्य कृतं तटाकादिसंस्कारार्थं व्ययं तत्स्वामिनि ग्रामान्तरादागते तेन देयमपि न लभते[१] नृपे निवेद्य संस्करणे तदर्थं व्ययं लभते फलं तु स्वाम्यनुमत्यलाभे न लभत इत्यर्थः । सेतोर्द्वैविध्यमाह **नारदः** ( क्षेत्रजवि० १८ )

सेतुस्तु द्विविधो ज्ञेयः खेयो बन्ध्यस्तथैव च ।
तोयप्रवर्तनात्खेयो बन्ध्यः स्याद्विनिवर्तनात् ॥

**प्रवर्तनं** निर्गमनं **निवर्तनं** निरोधः । क्षेत्रस्थिताधिकोदकनिर्गमनार्थं खात्वा यः क्रियते स **खेयः** । आगतोदकधारणार्थं मृदादिभिर्निरोद्धव्यो जलप्रवाहो **बन्ध्य** इत्यर्थः । तयोः प्रयोजनमाह **स** एव ( नारद, क्षेत्रजवि० १९ )

नान्तरेणोदकं[२] सस्यं नाशश्चात्युदके सति ।
य एवानुदके दोषः स एवात्युदके भवेत् ॥

यः क्षेत्रेऽस्मिन्कर्षणादिकं क्षेत्रफलोत्पन्नानुकूलं सर्वं व्यापारं करिष्यामीति तत्स्वामिनः पुरतोऽभ्युपगम्य कर्षणमात्रं करोति न बीजावापादिकं स तत्क्षेत्रफलं राज्ञा क्षेत्रस्वामिने दापनीयस्तत्क्षेत्रं चान्यस्मै कर्षकाय देयम् । तथा च **याज्ञवल्क्यः** ( २. १५८ )

फालाहतमपि क्षेत्रं यो न कुर्यान्न कारयेत् ।
तं प्रदाप्याकृष्टसदं क्षेत्रमन्येन कारयेत् ॥

**फालाहतं** फालेन विदारितं[३] कृष्टमिति यावत् । **अकृष्टसदं** कर्ष-

१ 'लभ्यते' इति अ. २ 'नान्तरेनोदकं' अ-क. ३ अत आरभ्य सीमाविवादप्रकरणान्तो भागो गलितो व-आदर्शे.

णमभ्युपगम्य अकृष्टस्य तत्स्वामिने देयं यत्फलं तदित्यर्थः। **प्रदाप्य** दापयित्वा। यस्तु कर्षणादिकं प्रतिज्ञाय कर्षणमप्यकुर्वन् समग्रं फलोत्पत्तिकालमतिवाहयति स क्षेत्रफलसमं दण्डमपि राज्ञे दद्यात्। तथा च **व्यासबृहस्पती**

क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्यान्न च कारयेत्।
स्वामिने स सदं दाप्यो राज्ञे दण्डं च तत्समम्॥

स्वामिना ग्राह्यं क्षेत्रफलं कियदित्यपेक्षायामाह **बृहस्पतिः**

चिरावसन्ने दशमं कृष्यमाणे तथाष्टमम्।
सुसंस्कृते तु षष्ठं स्यात्परिकल्प्य यथास्थिति॥

**चिरावसन्ने** चिरकालमकृष्टे क्षेत्रे कर्षणं करिष्यामीति प्रतिज्ञायोपेक्षिते **यथास्थिति** क्षेत्रस्थित्यनुसारेण सामन्तैरेतावदत्रोत्पत्तुमर्हमिति परिकल्प्य क्षेत्रस्वामिने तस्य दशमं भागं **कृष्यमाणे** अल्पकालमकृष्टेऽ**ष्टमं सुसंस्कृते षष्ठं** दाप्य इत्यर्थः। यस्तु क्षेत्रस्वामिनः सामर्थ्याभावादिनार्धखिलाद्यवस्थां प्राप्ते क्षेत्रे स्वयमेव स्वाम्यनिवारितः कर्षणादिकं[1] करोति स न क्षेत्रस्वामिने फलं दापनीयः किं तु स्वयमेव तत्फलं गृह्णीयादित्याह **नारदः** (क्षेत्रजवि० २३)

अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः।
क्षेत्रं चेद्विकृषेत्कश्चिदश्नुवीत स तत्फलम्॥

**प्रेताः** मृताः। **नष्टाः** क्व गता इति चिरमज्ञाताः। क्षेत्रिकाः क्षेत्रस्वामिनः। **क्षेत्र**स्वामिना तेन तत्पुत्रादिना वा समागतेनैवंविधाय कर्षकाय खिलभञ्जनार्थं व्ययं दत्त्वैव स्वक्षेत्रं ग्राह्यमित्याह **स** एव (नारद, क्षेत्रजवि० २४)

विकृष्यमाणे क्षेत्रे तु क्षेत्रिकः पुनराव्रजेत्।
खिलोपचारं तत्सर्वं दत्त्वा क्षेत्रमवाप्नुयात्॥

---

१ 'कर्षणादि संस्करोति' इति क.

क्षेत्रस्यार्धखिलाद्यवस्था कदा भवतीत्याह **स** एव ( नारद, क्षेत्रजवि० २६ )

संवत्सरेणार्धखिलं खिलं स्याद्वत्सरैस्त्रिभिः ।
पञ्चवर्षावसन्नं तु क्षेत्रं स्यादटवीसमम् ॥

**संवत्सरेण** कर्पणरहितमर्धखिलं वर्षत्रये कर्पणरहितं **खिलं** वर्षपञ्चके कर्पणरहितमटवीसममित्यर्थः । क्षेत्रस्वामिनः क्षेत्रभेजनार्थं ( भंजनार्थं ? ) व्ययदानासामर्थ्ये कर्पकेण वर्षाष्टकं क्षेत्रफलस्याष्टमो भागः स्वामिने देयः । अवशिष्टं सर्वं फलं स्वयमेव ग्राह्यम् । वर्षाष्टकानन्तरं च क्षेत्रं तत्स्वामिने देयम् । तथा च **कात्यायनः** ( ७६४ )

अशक्तितो न दद्याच्चेत्खिलार्थे यः कृतो व्ययः ।
तदष्टभागहीनं तु कर्षकः फलमाप्नुयात् ॥
वर्षाण्यष्टौ स भोक्ता स्यात्परतः स्वामिने तु तत् ॥

इति श्रीकोदण्डपरशुरामेति········व्यवहारविवेकोद्द्योते सीमाविवादाख्यव्यवहारपदनिरूपणम् ॥ २६ ॥

## अथ वाक्पारुष्याख्यव्यवहारपदनिरूपणम् ।

तत्र तत्स्वरूपं दर्शयति **नारदः** ( पारुष्य १ )

देशजातिकुलादीनामाक्रोशन्यङ्गसंयुतम् ।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते ॥

**आक्रोशः** आक्षेपो भर्त्सनमिति यावत् । **न्यङ्ग**मवद्यम् । तस्य त्रैविध्यमाह **स** एव ( नारद, पारुष्य २ )

निष्ठुराश्लीलतीव्रत्वात्तदपि त्रिविधं स्मृतम् ।
गौरवानुक्रमात्तस्य दण्डोऽपि स्यात्क्रमाद्गुरुः ॥

निष्ठुरादीनां स्वरूपं दर्शितं **तेनैव** ( नारद, पारुष्य० ३ )

साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंयुतम् ।
पतनीयैरुपाक्रोशे तीव्रमाहुर्मनीषिणः ॥

धिङ्मूर्खं जाल्ममित्यादि **साक्षेपं** भाषणं निष्ठुरं, **न्यङ्गसंयुतमवद्यं**

भगिन्यादिगमनसंयुतम**श्लीलम्**। **पतनीयैः** सुरापानादिभिः **उपाक्रोशस्तीव्रं** वाक्पारुष्यमित्यर्थः। बृहस्पतिस्त्वस्य प्रथमादींस्त्रीन्भेदानाह

देशग्रामकुलादीनां क्षेपः पापेन योजनम्।
द्रव्यं विना तु प्रथमं वाक्पारुष्यं तदुच्यते॥
भगिनीमातृसम्बन्ध उपपातकशंसनम्।
पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः॥
अभक्ष्यापेयकथनं महापातकदूषणम्।
पारुष्यमुत्तमं प्रोक्तं तीव्रं मर्माभिघट्टनम्॥ इति।

**द्रव्यं विना** द्रव्यवैशिष्ट्यं विना। **अभिघट्टनम्**उद्घाटनम्। समजातीयानां समानगुणानां वाक्पारुष्ये दण्डमाह **स** एव

समजातिगुणानां तु वाक्पारुष्ये परस्परम्।
विनयोऽभिहितः शास्त्रे पणा अर्धत्रयोदश॥

अर्धस्त्रयोदशो येषां तेऽर्धत्रयोदशाः सार्धद्वादशेत्यर्थः। जातिभावसाम्ये दण्डमाह **विष्णुः** (विष्णुधर्मसूत्र ५. ३५)—समवर्णाक्रोशने द्वादशपणान् दण्डयः। परस्परमिति शेषः। उभयोः पौर्वापर्यादिकृतविशेषापरिज्ञाने सम एव दण्डः। तथा चोक्तं **स्मृत्यन्तरे**।

पारुष्यदोषावृतयोर्युगपत्संप्रवृत्तयोः।
विशेषश्चेन्न दृश्येत विनयः स्यात्समस्तयोः॥

विशेषदर्शने त्वपराधानुसारेण विषमो दण्ड इति भावः। पौर्वापर्यकृते विशेषे विषमदण्डमाह **नारदः** (पारुष्य ९)

पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक्।
पश्चाद्यः सोप्यसत्कारी पूर्वे तु विनयो गुरुः॥

**गुरु**रधिकः। जातिगुणकृते विशेषे दण्डवैषम्यमाह **बृहस्पतिः**

समानयोः समो दण्डो न्यूनस्य द्विगुणस्तु सः।
उत्तमस्याधिकः प्रोक्तो वाक्पारुष्ये परस्परम्॥

हीनस्योत्तमाक्षेपे द्विगुणः । उत्तमस्य हीनाक्षेपे अर्धपरिमितो दण्ड इत्यर्थः । **याज्ञवल्क्यः** (२. २०६)

अर्धोऽधमेषु द्विगुणः परस्त्रीपूत्तमेषु च ।
दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैः ॥

**वर्णा** ब्राह्मणादयः । **जातयो** मूर्धावसिक्तादयः । ते च ते उत्तराधराश्च **वर्णजात्युत्तराधराः** । तैः परस्पराक्षेपे क्रियमाणे **दण्डप्रणयनं** दण्डस्योहनं ज्ञातव्यम् । उत्तराधरभावमालोच्य दण्डः परिकल्पनीय इत्यर्थः । तं च दर्शयति **मनुः** (८. २६७–२६८)

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ।
वैश्योऽप्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति ॥
विप्रः पञ्चाशतं दण्ड्यः क्षत्रियस्याभिशंसने ।
वैश्ये स्यादर्धपञ्चाशच्छूद्रे द्वादशको दमः ॥

**बृहस्पति**रपि

विप्रे शतार्धं दण्डस्तु क्षत्रियस्याभिशंसने ।
विशस्तथार्धपञ्चाशच्छूद्रस्यार्धत्रयोदश ॥
सच्छूद्रस्यायमुदितो विनयोऽनपराधिनः[1] ।
गुणहीनस्य पारुष्ये ब्राह्मणो नापराध्नुयात् ॥
वैश्यस्तु क्षत्रियाक्रोशे दण्डनीयः शतं भवेत् ।
तदर्धं क्षत्रियो वैश्यं क्षिपन् विनयमर्हति ॥
शूद्राक्रोशे क्षत्रियस्य पञ्चविंशतिको दमः ।
वैश्यस्य चैतद् द्विगुणं शास्त्रविद्भिरुदाहृतम् ॥
वैश्यमाक्षारयन् शूद्रो दाप्यः स्यात्प्रथमं दमम् ।
क्षत्रियं मध्यमं चैव विप्रमुत्तमसाहसम् ॥ इति ।

**उत्तमसाहसो**ऽत्र जिह्वाच्छेदनरूपो ज्ञातव्यः । अत एवोक्तं तेनैव

धर्मोपदेशकर्ता च वेदोदाहरणान्वितः ।
आक्रोशकस्तु विप्राणां जिह्वाच्छेदेन दण्ड्यते ॥

---

1 'विनयोऽनयनामिनः' इति अ–क.

शूद्र इत्यनुषङ्गः । मात्रादीनां पुत्रादिभिराक्षेपे दण्डमाह **मनुः** (८. २७५)

मातरं पितरं जायां भ्रातरं श्वशुरं गुरुम् ।
आक्षारयन् शतं दाप्यो पन्थानं चाददद्गुरोः ॥

**भ्रातरं** ज्येष्ठभ्रातरम् । एतच्च सापराधेषु मात्रादिषु निरपराधायां जायायां द्रष्टव्यमिति **विज्ञानेश्वराचार्याः** । निष्ठुराक्षेपे दण्डमाह **याज्ञवल्क्यः** (२. २०८)

बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः ।
शत्यस्तदर्धिकः पादनासाकर्णकरादिषु ॥

बाह्वादिविनाशे **वाचिके** करिष्यामीति वाचा प्रतिवादिते **शत्यः** शतपरिमितो दण्डः पादादिभङ्गं करिष्यामीत्याक्षेपे पञ्चाशत्परिमितो दण्ड इत्यर्थः । अशक्तस्यैवं वादिनोऽल्पं दण्डमाह **स** एव (या. २. २०९)

अशक्तस्तु वदन्नेवं दण्डनीयः पणान्दश ।

यः समर्थोऽसमर्थस्य बाह्वादिभङ्गाक्षेपं करोति स राज्ञा शतादिदण्डोत्तरकालमशक्तस्य क्षेमार्थं प्रतिभुवं दापनीय इत्याह **स** एव (या. २. २०९)

तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु ॥

अश्लीलाक्षेपे दण्डमाह **स** एव (या. २. २०५)

अभिगन्तास्मि भगिनीं मातरं वा तवेति च ।
शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम् ॥

त्रैविद्याद्याक्षेपे दण्डमाह **स** एव (या. २. २११)

त्रैविद्यनृपदेवानां दण्ड उत्तमसाहसः ।

तीव्राक्षेपे दण्डमाह **स** एव (या. २. २१०)

पतनीयैः कृते क्षेपे दण्डो मध्यमसाहसः ।
उपपातकयुक्ते तु दाप्यः प्रथमसाहसम् ॥

**पतनीयैः** पातित्यहेतुभिर्ब्रह्महत्यादिभिः । उपपातकानि गोवधा-

दीनि । सत्यदोषाभिधानेऽपि वाक्पारुष्यदण्डो भवत्येव । अत एव **नारदः** ( पारुष्य २१ )

पतितं पतितेत्युक्त्वा चोरं चौरेति वा पुनः ।
वचनात्तुल्यदोषः स्यान्मिथ्या द्विर्दोषतां व्रजेत् ॥

**मनुरपि** ( ८. २७४ )

काणं वाप्यथवा खञ्जमन्यं वापि तथाविधम् ।
तथ्येनापि ब्रुवन्दाप्यो दण्डं कार्षापणावरम् ॥

अन्यापदेशेन निन्दार्थया स्तुत्या वा पराक्षेपकारी दण्डनीयः । अत एव **याज्ञवल्क्यः** ( २. २०४ )

सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम् ।
क्षेपं करोति चेद्दण्डयः पणानर्धत्रयोदशान् ॥

**न्यूनाङ्गाः** करादिरहिताः । **न्यूनेन्द्रिया** नेत्रादिरहिताः । **रोगिणः** कुष्ठ्यादयः । **अन्यथा स्तोत्रं** निन्दास्तुतिः । **नारदोऽपि**

दुष्टस्यैव तु यो दोषान्कीर्तयेत्क्रोधकारणात् ।
अन्यापदेशवादी च वाग्दुष्टं तं नरं विदुः ॥

**क्रोधकारणादि**त्यनेन दुष्टपरित्यागार्थदोषकीर्तने न दोष इति सूचितम् । उक्तं चैतत्**कात्यायनेन** ( ७७६ )

यत्र स्यात्परिहारार्थं पतितस्तेन ( ? पतितत्वेन ) कीर्तनम् ।
वचनात्तत्र न स्यात्तु दोषो यत्र विभावयेत् ॥

**वचनात्** दोषकीर्तनात् । **यत्र** अभियोगादौ पातित्यादिकं साधयेत् तत्रापि वचनाद् दोषो न स्यादिति यत्र विभावयेदित्यस्यार्थ उक्तः **स्मृतिचन्द्रिकायाम्** । कस्यचिद् वाक्पारुष्यकृतोर्धदण्डमाह **उशना**

मोहात्प्रमादात्सङ्घर्षात्प्रीत्या चोक्तं मयेति यः ।
नाहमेवं पुनर्वक्ष्ये दण्डार्धं तस्य कल्पयेत् ॥

**वक्ष्ये** इत्यत्र वक्मीति शेषः । इति श्रीकोदण्डपरशुरामेति······व्यवहारविवेकोद्द्योते वाक्पारुष्याख्यव्यवहारपदनिरूपणम् ॥ २७ ॥

## अथ दण्डपारुष्याख्यव्यवहारपदनिरूपणम् ।

तत्र तत्स्वरूपं दर्शयति **नारदः** ( पारुष्य ४ )

परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।
भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥

**परगात्रेषु** स्थावरजङ्गमात्मकेषु । **आदि**शब्दात्पाषाणादिकं गृह्यते । **अभिद्रोहो** हिंसनम् । **भस्मादिभि**रित्यादिशब्देन धूल्यादीनां ग्रहणम् । **उपघातो** दुःखोत्पादनम् । अस्य त्रैविध्यमुक्तं **तेनैव** (नारद, पारुष्य ५)

तस्यापि दृष्टं त्रैविध्यं हीनमध्योत्तमक्रमात् ।

हीनादिरूपत्वं चास्य क्रमेणावगोरणादिरूपत्वाद्धीनादिद्रव्यविषयकत्वाच्चेत्याह **स** एव ( नारद, पारुष्य ५-६ )

अवगोरणनिःशङ्कपातनक्षतदर्शनैः ।
हीनमध्योत्तमानां तु द्रव्याणां समतिक्रमात् ॥

**अवगोरणं** ताडनाद्युद्योगः । अस्यान्येऽपि केचिदवान्तरभेदा दर्शिता **व्यासेन**

हस्तादिना प्रक्षिपणं ताडनं च करादिना ।
आवेष्टनं चांशुकाद्यैर्दण्डपारुष्यमुच्यते ॥

**परिशिष्टकारे**णापि

दुःखं रक्तं व्रणं भङ्गं छेदनं भेदनं तथा ।
कुर्याद्यः प्राणिनां तद्धि दण्डपारुष्यमुच्यते ॥

अत्रापि वाक्पारुष्यवद्युगपत्प्रवृत्तयोः समो दण्डः । अयुगपत्प्रवृत्तयोः पूर्वप्रवृत्तस्याधिको दण्डः । यत्तु

आक्रुष्टस्तु समाक्रोशंस्ताडितः प्रतिताडयन् ।
हत्वापराधिनं चैव नापराधी भवेन्नरः ॥ इति

**बृहस्पति**वचनं तत्पूर्वप्रवृत्तसमदण्डत्वं पश्चात्प्रवृत्तस्य नेत्येतदर्थं न तु दण्डाभावार्थम् । पारुष्यद्वयेऽपि यः क्षमां करोति स पूज्य इत्याह **नारदः**

पारुष्ये सति संरम्भादुत्पन्ने क्षुब्धयोर्द्वयोः ।
स मान्यते यः क्षमते दण्डभाग्योऽतिवर्तते ॥

दण्डपारुष्यस्वरूपसन्देहे निर्णायकमाह **याज्ञवल्क्यः** ( २. २१२ )

असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च ।
द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृतो भयात् ॥

यदा कश्चिद्रहस्यहमनेन ताडित इति निवेदयति तदा **चिह्नै**र्व्रणादिस्वरूपगतैर्लिङ्गैः **युक्तिभिः** कारणपर्यालोचनात्मिकया[1] **आगमेन च** जनप्रवादेन **च**शब्दाद् दिव्येन वा । कूटचिह्नकरणसम्भावनाभयात् परीक्षा कर्तव्येत्यर्थः । क्वचिद्दण्डमाह **मनुः** ( ८. २८४ )

त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः ।
मांसभेत्ता च षण्णिष्कान्प्रवास्यस्त्वस्थिभेदकः ॥

**मांसभेत्ता** व्रणकर्ता । **कात्यायनः** ( ७८१ )

कर्णोष्ठघ्राणपादाक्षिजिह्वाशिश्नकरस्य च ।
छेदने चोत्तमो दण्डो भेदने मध्यमो भृगुः ॥

**याज्ञवल्क्यः** ( २. २१३–१४ )

भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः ।
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणः स्मृतः ॥
समेष्वेव परस्त्रीषु द्विगुणस्तूत्तमेषु च ।
हीनेष्वर्धदमो मोहमदादिभिरदण्डनम् ॥

**अमेध्यानि** अश्रुश्लेष्मादीनि । **मोह**श्चित्तवैकल्यं **मदो** मद्यपानजन्योऽवस्थाविशेषः । **आदि**शब्देन ग्रहावेशादिकं गृह्यते । पुरीषादिस्पर्शने दण्डविशेषमाह **कात्यायनः** ( ७८४ )

छर्दिमूत्रपुरीषाद्यैरापाद्यः स चतुर्गुणः ।
षड्गुणः कायमध्ये स्यान्मूर्ध्नि त्वष्टगुणः स्मृतः ॥

ताडनार्थं हस्तपादाद्युद्योगे दण्डमाह **याज्ञवल्क्यः** ( २. २१६ )

---

१ '°पर्यालोचनात्मिकाभिः' इति ब.

उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ ।
परस्परं तु सर्वेषां शस्त्रे मध्यमसाहसः ॥

परस्परं वधार्थे शस्त्र उद्यते सर्वेषां वर्णानां मध्यमसाहसो दण्ड इत्यर्थः। अन्यत्रापि क्वचिद्दण्डमाह **स** एव (या. २. २१७-२१८)

पादकेशांशुककरोल्लुञ्चनेषु[1] पणान्दश ।
पीडाकर्षांशुकावेष्टपादाध्यासे शतं दमः ॥
शोणितेन विना दुःखं कुर्वन्काष्ठादिभिर्नरः ।
द्वित्रिंशतं पणान्दण्ड्यो द्विगुणो दर्शनेऽसृजः ॥

यो वस्त्रेणावेष्ट्य दृढं संपीड्याकृष्य पादेन घट्टयति स शतं दण्ड्य इति **पीडाकर्षे**त्यादेरर्थः । **स** एव (या. २. २१९-२२०)

करपाददतो भङ्गे भेदने कर्णनासयोः ।
मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा ॥
चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने ।
कन्धराबाहुसक्थ्नां च भङ्गे मध्यमसाहसः ॥

प्रातिलोम्यापराधे दण्ड उक्त**स्तेनैव** (या. २. २१५)

विप्रपीडाकरं छेद्यमङ्गमब्राह्मणस्य तु ।
उद्गूर्णे प्रथमो दण्डः संस्पर्शे तु तदर्धिकः ॥

**अब्राह्मणस्य** क्षत्रियादेः । **संस्पर्शे** शस्त्रादिस्पर्शे । **तदर्धिकः** प्रथमसाहसार्धदण्ड इत्यर्थः । ब्राह्मणवधार्थं शस्त्रोद्यमे प्रथमसाहसाभिधानं शूद्रव्यतिरिक्तविषयम् । तथा च **मनुः** (८. २७९-२८०)

येन केनचिदङ्गेन हिंस्याच्छ्रेयांसमन्त्यजः ।
छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ॥
पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति ।

अत्र **श्रेयांस**मिति सामान्येनोपादानात् क्षत्रियवैश्यापकारिणोऽपि शूद्रस्यायं दण्डः समानन्यायत्वात् । क्षत्रियापकारिणोऽपि वैश्यस्य याज्ञ-

---

1 '०करोल्लङ्घनेषु' इति ब.

वल्क्योक्तो दण्डः ॥ ये वाक्पारुष्ये प्रातिलोम्यानुलोम्यविषये दण्डा उक्तास्तानत्रातिदिशति **कात्यायनः** ( ७८६ )

वाक्पारुष्ये यथैवोक्ताः प्रातिलोम्यानुलोम्यतः ।
तथैव दण्डपारुष्ये पात्या दण्डा यथाक्रमम् ॥

बहुभिः सम्भूयैकस्य हनने द्विगुणो दण्डो ग्राह्य इत्याह **विष्णुः** ( विष्णुधर्मसूत्र ५. ७३° )—एकं बहूनां निघ्नतां प्रत्येकश उक्तो दण्डो द्विगुणः । सम्भूय ताडने उच्चैः क्रोशन्तं ताड्यमानमुपेक्षमाणानां तत्समीपवर्तिनां द्विगुणो दण्ड इत्यप्याह **स एव** ( विष्णुधर्मसूत्र ५. ७४ )—द्विगुण उत्क्रोशन्तमनभिधावतां तत्समीपवर्तिनां संतां ( संसरतां ? )च—इति । ताडनेन दुःसहव्रणाद्युत्पत्तौ त्वाह **कात्यायनः** ( ७८७ )

देहेन्द्रियविनाशे तु यथादण्डं प्रकल्पयेत् ।
तथा तुष्टिकरं देयं समुत्थानं च पण्डितैः ॥

**तुष्टिकरं** दुःसहव्रणतुष्टिकरं धनं दातव्यम् । **समुत्थानं** समुत्थानव्ययं भिषग्भेषजपथ्याद्यर्थं क्रियमाणं व्ययमिति यावत् । **पण्डितै**र्व्रणगौरवानुसारेण कल्पितमिति शेषः । समुत्थानव्ययदानस्यावधिमाह **स एव** ( कात्या. ७८७ )

समुत्थानव्ययं चासौ दद्यादाव्रणविरोपणम् ।

कलहकाले यदपहृतं तत्स्वामिने देयमित्याह **बृहस्पतिः**

अङ्गावपीडने चैव भेदने छेदने तथा ।
समुत्थानव्ययं दाप्यः कलहापहृतं च यत् ॥

समुत्थानव्ययो ग्राम्यपशुपीडनेऽपि देय इत्याह **विष्णुः** ( विष्णुधर्मसूत्र ५. ७५—७६ )—सर्वे पुरुषपीडाकराः समुत्थानव्ययं दाप्या ग्राम्यपशुपीडाकराश्च—इति । पशुपीडायां दण्डमाह **याज्ञवल्क्यः** ( २. २२५—२६ )

दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा ।
दण्डः क्षुद्रपशूनां तु द्विपणप्रभृतिः क्रमात् ॥

लिङ्गस्य छेदने मृत्यौ मध्यमो मूल्यमेव च ।
महापशूनामेतेषु स्थानेषु[1] द्विगुणो दमः ॥

**क्षुद्रपशू**नामजाविकानां हरिणादीनाम् । ताडनेन दुःखोत्पादनं रक्तस्रावणम् । **शाखाछेदन**मत्र शृङ्गादिछेदनम् । **अङ्गछेदनं** करचरणादिछेदनम् । एतेषु चतुर्षु यथाक्रमं **द्विपणप्रभृतिः** द्विपणश्चतुष्पणः षट्पणोऽष्टपणो दण्डं (? दण्डः) । लिङ्गच्छेदने मारणे च मध्यमसाहसो दण्डः पशुस्वामिने तन्मूल्यं दातव्यम् । **महापशूनां** गोगजवाज्यादीनाम् । **एतेषु स्थानेषु** दुःखोत्पादनादिषु चतुर्षु निमित्तेषु पूर्वोक्तदण्डाद् द्विगुणो दण्डो ग्राह्य इत्यर्थः । स्थावरप्राणिपीडायां दण्डमाह **मनुः** ( ८. २८५ )

वनस्पतीनां सर्वेषामुपभोगो यथा यथा ।
तथा तथा दमः कार्यो हिंसायामिति धारणा ॥

**वनस्पति**ग्रहणं स्थावरप्राणिमात्रोपलक्षणम् । **उपभोगो यथा यथे**त्यनेन येषामाम्रादीनां फलमुपभुज्यते तेषां हिंसायामधिको दण्डो येषां चम्पकादीनां पुष्पमुपभुज्यते तेषां ततो न्यूनो दण्डो येषां पत्रमुपभुज्यते तेषां ततोऽपि न्यूनो दण्ड इति दर्शितम् । तदेतद्विवृतं **विष्णुना** ( विष्णुधर्मसूत्र ५. ५५–५९ )—फलोपभोगद्रुमच्छेदी तूत्तमसाहसं पुष्पोपभोगच्छेदी मध्यमसाहसं वल्लीगुल्मलताछेदी कार्षापणशतं तृणच्छेद्येकं सर्वे च तत्स्वामिनां तदुत्पत्तिम्—इति । **सर्वे** फलोपभोगद्रुमच्छेद्यादयस्[2]**तत्स्वामिनां** छिन्नद्रुमादिस्वामिनां **तदुत्पत्तिं** फलभोगद्रुमाद्युत्पत्तिं पुनः प्रतिरोपितद्रुमादिभोगकालपर्याप्ता ( ? प्तां ) दद्युरिति शेषः । यद्यपि वाक्पारुष्यदण्डपारुष्ययोर्विषयभेदेनान्येऽपि दण्डविशेषाः स्मर्तृभिरुपदिष्टाः सन्ति तथापीदानींतनै राजभिः प्रजाक्षोभप्रसङ्गेन तादृग्दण्डस्य कर्तुमशक्यत्वादत्युपयोगाभावेन निरर्थकग्रन्थविस्तरभयान्नात्रास्माभिः सङ्गृहीताः ॥

इति श्रीकोदण्डपरशुरामेति····व्यवहारविवेकोद्द्योते दण्डपारुष्याख्यव्यवहारपदनिरूपणम् ॥ २८ ॥

---

१ 'स्थानेषु' इति नास्ति अ–क–आदर्शयोः. २ 'तं स्वामिना तदुत्पत्तिम्' इति अ; 'तत्स्वामिना तदुत्पत्तिम्' इति ब–क.

## अथ स्तेयाख्यव्यवहारपदनिरूपणम् ॥

तत्र तत्स्वरूपं दर्शयति **नारदः** ( साहस १४-१७ )

मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत् ।
शमीधान्यं कृतान्नं च क्षुद्रद्रव्यमुदाहृतम् ॥
वासः कौशेयवर्जं च गोवर्जं पशवस्तथा ।
हिरण्यवर्जं लोहं च मध्यं व्रीहियवादि च ॥
हिरण्यं रत्नकौशेयं स्त्रीपुंगोगजवाजिनः ।
देवब्राह्मणराज्ञां च विज्ञेयं द्रव्यमुत्तमम् ॥
उपायैर्विविधैरेषां छलयित्वापकर्षणम् ।
सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः ॥

**एषां** क्षुद्रमध्योत्तमानाम् । **छलयित्वापकर्षणं** स्वाम्याद्यसमक्षं वञ्चयित्वापहरणं बलात्कारव्यतिरेकेण हरणमिति यावत् । **तत्स्तेयमाहुः** साहसाद्भिन्नं स्तेयमाहुर्मन्वादय इत्यर्थः । बलात्कारकृतमपहरणं तु साहसान्तर्गतं स्तेयम् । तथा चोक्तं **तेनैव** ( नारद, साहस १२ )

तस्यैव भेदः स्तेयं स्याद्विशेषस्तत्र तूच्यते ।
आधिः साहसमाक्रम्य स्तेयमाधिश्छलेन तु ।

**तस्यैव** साहसस्यैव **आधिः** पीडा । **आक्रम्य** प्रसह्य । धनापहरणद्वारा क्रियमाणः परस्य क्लेशः साहसरूपं स्तेयं छलेन तु क्रियमाण आधिः केवलस्तेयमित्यर्थः । क्षुद्रमध्योत्तमद्रव्यभेदात्तदपहरणात्मकस्य स्तेयस्य त्रैविध्यमाह **स** एव ( नारद, साहस १३ )

तदपि त्रिविधं ज्ञेयं द्रव्यापेक्षं मनीषिभिः ।
क्षुद्रमध्योत्तमानां तु द्रव्याणामपकर्षणात् ॥

तस्कराणां द्वैविध्यमाह **मनुः** ( ९. २५६ )

द्विविधांस्तस्करान्विद्यात्परद्रव्यापहारिणः ।
प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः ॥

**बृहस्पतिर**पि

प्रकाशाश्चाप्रकाशाश्च तस्करा द्विविधाः स्मृताः ।
प्रज्ञासामर्थ्यमायाभिः प्रभिन्नास्ते सहस्रधा ॥

प्रकाशतस्करान्दर्शयति **स** एव

नैगमा वैद्यकितवाः सभ्योत्कोचकवञ्चकाः ।
दैवोत्पातविदो भद्राः शिल्पज्ञाः प्रतिरूपकाः ॥
अक्रियाकारिणश्चैव मध्यस्थाः कूटसाक्षिणः ।
प्रकाशतस्करा ह्येते तथा कुहकजीविनः ॥

**नारदो**ऽपि ( परिशिष्ट २-३ )

प्रकाशवञ्चकास्तत्र कूटमानतुलाश्रिताः ।
उत्कोचकाः सोपधिका वञ्चकाः पण्ययोषितः ॥
प्रतिरूपकराश्चैव मङ्गलादेशवृत्तयः ।
इत्येवमादयो ज्ञेयाः प्रकाशास्तस्करा भुवि ॥

**नैगमा**[1]दिव्याजेन ये परद्रव्यापहर्तारस्ते नैगमाद्याः प्रकाशतस्करा इत्यर्थः । एतेषां दण्ड्यत्वमाह **व्यासः**

स्त्रीपुंसौ वञ्चयन्तीह मङ्गलादेशवृत्तयः ।
गृह्णन्ति छद्मना चार्थमनार्यास्त्वार्यलिङ्गिनः ॥
नैगमाद्या भूरिधना दण्ड्या दोषानुरूपतः ।
यथा ते नातिवर्तन्ते तिष्ठन्ति समये तथा ॥

**दोषानुरूपतो दण्ड्या** न तु धनानुरूपत इति भावः । केषांचित्प्रकाशतस्कराणां दण्डमाह **बृहस्पतिः**

प्रच्छाद्य दोषं व्यामिश्र्य पुनः संस्कृत्य विक्रयी ।
पण्यं तद्द्विगुणं दाप्यो वणिग्दण्डं च तत्समम् ॥

---

१ अस्मात्परं ब-आदर्शे कानिचिद्वाक्यानि सीमाविवादप्रकरणाद् भ्रान्त्या प्रवेशितानि 'लिङ्गविनाशे ज्ञातव्यः' इत्यत आरभ्य 'शालेयादिक्षेत्रहरणे वेदितव्यम्' इत्यन्तानि.

अज्ञातौषधिमन्त्रस्तु यश्च व्याधेरतत्त्ववित् ।
रोगिभ्योऽर्थं समादत्ते स दण्ड्यश्चोरवद्भिषक् ॥
कूटाक्षदेविनः क्षुद्रा राजभाव्यहराश्च ये ।
गणका वञ्चकाश्चैव दण्ड्यास्ते कितवाः स्मृताः ॥
अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।
विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्व एव ते ॥
ज्योतिर्ज्ञानं तथोत्पातमविदित्वा तु ये नृणाम् ।
श्रावयन्त्यर्थलोभेन विज्ञेयास्ते प्रयत्नतः ॥
दण्डाजिनादिभिर्युक्तमात्मानं दर्शयन्ति ये ।
हिंसन्तश्छद्मना नृणां वध्यास्ते राजपूरुषैः ॥
स्वल्पमूल्यं तु संस्कृत्य नयन्ति बहुमूल्यताम् ।
स्त्रीबालकान्वञ्चयन्ति दण्ड्यास्तेऽर्थानुसारतः ॥
हेमरत्नप्रवालाद्यान् कृत्रिमान्कुर्वते तु ये ।
क्रेतुर्मूल्यं प्रदाप्यास्ते राज्ञा तद्द्विगुणं दमम् ॥
मध्यस्था वञ्चयन्त्येके स्नेहलोभादिना यदा ।
साक्षिणश्चान्यथा ब्रूयुर्दाप्यास्ते द्विगुणं दमम् ॥

**भाव्यं** करविशेषः । **मनुः** ( ९. २९२ )

सर्वकण्टकपापिष्ठं हेमकारं तु पार्थिवः ।
प्रवर्तमानमन्याये छेदयेल्लवशः क्षुरैः ॥

**विष्णुः** ( विष्णुधर्मसूत्र ५. १३४ )—द्यूते च कूटाक्षदेविनां करच्छेदः—इति । अप्रकाशतस्कराणां स्वरूपमाह **व्यासः**

साधनाद्यन्विता रात्रौ विचरन्तोऽविभाविताः ।
अविज्ञातनिवासाश्च ज्ञेयाः प्रच्छन्नतस्कराः ॥

**रात्रा**विति प्रायिकाभिप्रायम् । दिवाप्यटव्यादौ प्रच्छन्नतया विचरतां पान्थमुडादीनां चोराणां[1] सम्भवात् । अप्रकाशतस्कराणां भेदानाह **स** एव

१ 'चोरातिसम्भवात्' इति अ-क.

उत्क्षेपकः सन्धिभेत्ता पान्थमुड् ग्रन्थिभेदकः ।
स्त्रीपुंगोऽश्वपशुस्तेयी चोरो नवविधः स्मृतः ॥

यो धनस्वामिनोऽनवधानं निश्चित्य समीपं न्यस्तं धनमुद्धृत्य गृह्णाति स **उत्क्षेपकः** । यो गृहयोः सन्धाववस्थाय तत्रत्यभित्तिं भिनत्ति स **सन्धिभेत्ता** । यः कान्तारादौ पान्थानां धनमपहरति स **पान्थमुट्** । यः परिधानादिग्रथितं धनं ग्रहीतुं तद्ग्रन्थिमोचनं करोति स **ग्रन्थिभेदकः** । **स्त्रीपुंगोऽश्वपशुस्तेयी**ति स्तेयिशब्दस्य द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकं सम्बन्धस्तेन नवविध इत्युक्तम् । उत्क्षेपकादिषु कस्य को दण्ड इत्यपेक्षायामाह **बृहस्पतिः**

उत्क्षेपकस्य संदंशश्छेत्तव्यो राजपूरुषैः ।

**संदंशो**ऽत्र करः । अत एव **याज्ञवल्क्यः** ( २. २७४ )

उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ ।
कार्यौ[1] द्वितीयापराधे करपादैकहीनकौ ॥

**सन्दंशो**ऽत्र तर्जन्यङ्गुष्ठौ ग्रन्थिमोचने तयोः साधकतमत्वात् । प्रथमापराधे तौ क्रमेण करसन्दंशरहितौ कार्यौ द्वितीयापराधे उभावप्येककरपादरहितौ कार्यावित्यर्थः । **मनुः** ( ९. २७६ )

सन्धिं भित्त्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः ।
तेषां छित्त्वा नृपो हस्तौ तीक्ष्णे शूले[2] निवेशयेत् ॥

तानिति शेषः । **बृहस्पतिः**

तथा पान्थमुषो वृक्षे गले बद्ध्वावलम्बयेत् ।

**पान्थमुषः** पथिकलुण्टकान् । **मनुः** ( ९. २७७ )

अङ्गुली ग्रन्थिभेदस्य छेदयेत्प्रथमे ग्रहे ।
द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥

**अङ्गुली** तर्जन्यङ्गुष्ठौ । **नारदः**[3] ( परिशिष्ट ३२ )

---

१ इत आरभ्य 'द्रव्योत्क्षेपकादीनां तदनुरूपो' इत्यन्तो भागो गलितो **अ**-आदर्शे.
२ 'तांश्च शूले' इति **व**. ३ इत आरभ्य 'निमज्जयेत्' इत्यन्तो भागो गलितः **क**-आदर्शे.

प्रथमे ग्रन्थिभेदानामङ्गुल्यङ्गुष्ठयोर्वधः ।

**व्यासः**

स्त्रीहर्ता लोहशयने दग्धव्यो वै कटाग्निना ।

नरहर्ता हस्तपादौ छित्त्वा स्थाप्यश्चतुष्पथे ॥

**बृहस्पतिः**

गोहर्तुर्नासिकां छित्त्वा बद्ध्वाम्भसि निमज्जयेत् ।

**नारदः** ( परिशिष्ट २८ )

सर्वस्वं हरतो नारीं कन्यां तु हरतो वधः ।

वाजिवारणलोहानां चाददीत बृहस्पतिः ॥

**सर्वस्व**मित्यनुषङ्गः । **व्यासः**

पशुहर्तुस्त्वर्धपादं तीक्ष्णशस्त्रेण कर्तयेत् ।

पश्वनुसारेण पशुहर्ता दण्ड्य इत्याह **नारदः** ( परिशिष्ट २९ )

महापशूंस्तेनयतो दण्डमुत्तमसाहसम् ।

मध्यमं मध्यमपशून् पूर्वं क्षुद्रपशून्हृतः ॥

**हृत** इति षष्ठी । धान्याद्यपहरणे दण्डमाह **मनुः** ( ८. ३२० )

धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं[1] वधः ।

शेषेऽप्येकादशगुणं दाप्यस्तस्य च तद्धनम् ॥

**कुम्भो** विंशतिप्रस्थाः । **शेषे** दशकुम्भाधिकन्यूने । **तस्य** धान्यस्वामिनः । **स** एव ( मनु. ८. ३२३ )

मुख्यानां चैव रत्नानां हरणे वधमर्हति ।

**नारदः** ( परिशिष्ट २७ )

सुवर्णरजतादीनामुत्तमानां च वाससाम् ।

रत्नानां चैव सर्वेषां शतादभ्यधिके वधः ॥

**मनुः** ( ८. ३२१-२२ )

सुवर्णरजतादीनामुत्तमानां च वाससाम् ।

---

१ 'हरतोभ्यधिके' इति **ब-अ.**

पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते ।
शेषे त्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् ॥

अत्र सुवर्णरजतादीनां संख्या कर्षकृतेत्याहुर्वृद्धाः । एवमन्येऽपि दण्डा मन्वादिशास्त्रेषु द्रष्टव्याः । ग्रन्थविस्तरभयान्नात्र संगृहीताः । अत्राङ्गच्छेदादिर्दण्डो ब्राह्मणव्यतिरिक्तविषयः । अत एव **याज्ञवल्क्यः** (२. २७०)

सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत् ।

**चिह्नं** ललाटे श्वपदाकाराङ्कनम् । एतच्चाङ्कनादिकं प्रायश्चित्तमचिकीर्षतो ज्ञातव्यम् । तथा च **मनुः** ( ९. २४० )

प्रायश्चित्तं तु कुर्वाणा पूर्वे वर्णा यथोदितम् ।
नाङ्क्या राज्ञा ललाटे तु दाप्यास्तूत्तमसाहसम् ॥

ब्राह्मणव्यतिरिक्तेष्वप्यङ्गच्छेदादय उत्तमसाहसत्वादुत्तमद्रव्यापहारविषयाः ।

साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः ।
स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमात् ॥

इति **नारदे**नोत्तमसाहसस्योत्तमद्रव्यविषये व्यवस्थापनात् ( नारद, साहस २१ ) । तेन क्षुद्रमध्यद्रव्योत्क्षेपकादीनां तदनुरूपो दण्डो न करच्छेदादिः । चोरदण्डोऽपहृतधनं तत्स्वामिने दापयित्वा कार्यः । तथा च **बृहस्पतिः**

प्रदाप्यापहृतं शास्यो दमैः शास्त्रप्रचोदितैः ।

**याज्ञवल्क्यो**ऽपि ( २. २७० )

चोरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः ।

चोरदण्डस्य चोरज्ञानपूर्वकत्वात्ते कथं ज्ञातव्या इत्यपेक्षायामाह **व्यासः**

प्रकाशाश्चाप्रकाशाश्च तस्करा द्विविधाः स्मृताः ।
स्वचिह्नैरेव[1] विज्ञेयाश्चारैस्तस्करवेदिभिः ॥

---

१ 'सुचिह्नैरेव' इति **ब.**

**बृहस्पतिः**

संसर्गचिह्नलोप्त्रैर्वा विज्ञातो राजपूरुषैः । इति ।

**संसर्गः** चोरादिसंसर्गः । **लोप्त्रं** स्तेयप्राप्तं धनम् । **याज्ञवल्क्यो**ऽपि ( २. २६६–६८ )

ग्राहकैर्गृह्यते चोरो लोप्त्रेणाथ पदेन च ।
पूर्वकर्मापराधी च तथा चाशुद्धवासकः ॥
अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः ।
द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः ॥
परद्रव्यगृहाणां च पृच्छका गूढचारिणः ।
निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः ॥

**ग्राहकैः** राजकीयैः । **पूर्वकर्मापराधी** प्राक्प्रसिद्धचौर्यः । **अशुद्धवासकः** अप्रज्ञातनिवासस्थानः । **निह्नवो**ऽपलापः । **शुष्कभिन्नमुखस्वराः** कुतस्त्यस्त्वमसीति चोरग्राहकैः प्रश्ने कृते शुष्कमुखा भिन्नस्वराः । **विनष्टद्रव्यविक्रयाः** अविज्ञातस्वामिकद्रव्यविक्रेतारः । चोरशङ्कया गृहीतैर्दिव्यादिनात्मावश्यं शोधनीय इत्याह **स** एव ( **या.** २. २६९ )

गृहीतः शङ्कया चौर्ये नात्मानं चेद्विशोधयेत् ।
दापयित्वा हृतं द्रव्यं चौरदण्डेन दण्डयेत् ॥

चोरसाहाय्यकारिणः प्रत्याह **मनुः** ( ९. २७१ )

ग्रामेष्वपि च ये केचिच्चोराणां भक्तदायकाः ।
भाण्डावकाशदाश्चैव सर्वांस्तानपि घातयेत् ॥

**भाण्डं** चौर्योपकरणम् । **नारदः** ( साहस १९ )

भक्तावकाशदातारः स्तेनानां ये प्रसर्पताम् ।
शक्ताश्च ये उपेक्षन्ते तेऽपि तद्दोषभागिनः ॥

आह्वायकादेशकरास्तथा चान्तरदापकाः[1] ।
समदण्डाः स्मृता ह्येते ये च प्रच्छादयन्ति तान् ॥

**आदेशकराः** आज्ञाकारिणः । इतिश्रीकोदण्डपरशुरामेति…… व्यवहारविवेकोद्द्योते स्तेयाख्यव्यवहारपदनिरूपणम् ॥ २९ ॥

## अथ साहसाख्यव्यवहारपदनिरूपणम् ॥

तत्र तत्स्वरूपं दर्शयति **नारदः** ( साहस १ )

सहसा क्रियते कर्म यत्किंचिद्बलदर्पितैः ।
तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥

**यत्किंचिन्**मनुष्यमारणपरद्रव्यापहरणादिकम् । अत एव **बृहस्पतिः**

मनुष्यमारणं चौर्यं परदाराभिमर्शनम् ।
पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम् ॥

**उभयं पारुष्यं** वाक्पारुष्यदण्डपारुष्ये। तस्य त्रैविध्यमाह **नारदः** ( साहस ३-६ )

तत्पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा ।
उत्तमं चेति शास्त्रेषु तस्योक्तं[2] लक्षणं पृथक् ॥
फलमूलोदकादीनां क्षेत्रोपकरणस्य च ।
भङ्गाक्षेपावमर्दाद्यैः प्रथमं साहसं स्मृतम् ॥
वासःपश्वन्नपानानां गृहोपकरणस्य च ।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥
व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम् ।
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ॥

**भङ्गः** फलादिस्वरूपनाशनम् । आक्षेप आक्रोशो वाचा तिरस्करण-

---

१ 'तथा चोत्तरदायकाः' इति ब. २ 'तस्योक्तं' इत्यस्यानन्तरं 'कार्यौ द्वितीयापराधो ……द्रव्योत्क्षेपकादीनां तदनुरूपो' इत्यन्तो भागः पूर्वं २९३ पृष्ठे निर्दिष्टोऽत्र विनिवेशितः अ-आदर्शे.

मिति यावत् । **अवमर्दः** स्वरूपावशेषेण पीडनम् । **एतेनैव प्रकारेण** भङ्गाक्षेपादिनोक्तप्रकारेण । मनुष्यमारणाख्यसाहसकारिज्ञानोपायमाह **बृहस्पतिः**

हतः संदृश्यते यत्र घातकस्तु न दृश्यते ।
पूर्ववैरानुमानेन ज्ञातव्यः स महीभुजा ॥
प्रतिवेश्यानुवेश्यौ च तस्य मित्रारिबान्धवाः ।
प्रष्टव्या राजपुरुषैः सामादिभिरुपक्रमैः ॥
विज्ञेयो साधुसंसर्गाच्चिह्नैर्होढेन वा नरैः ।
एषोदिता घातकानां तस्कराणां च भावना ॥
गृहीतः शङ्कया यस्तु न तत्कार्यं प्रपद्यते ।
शपथेनावबोद्धव्यः सर्ववादेष्वयं[1] विधिः ॥

**चिह्नं** रक्तलेपादि । **होढो** मृतहस्तस्थधनादिकम् । तज्ज्ञानानन्तरं कर्तव्यमाह **याज्ञवल्क्यः** ( २. २७३ )

बन्दिग्राहांस्तथा वाजिकुञ्जराणां विहारिणः ।
प्रसह्य घातिनश्चैव शूलानारोपयेन्नरान् ॥

यत्तु **बृहस्पतिना**

प्रकाशघातका ये तु तथा चोपांशुघातकाः ।
ज्ञात्वा सम्यग्धनं हृत्वा हन्तव्या विविधैर्वधैः ॥ इति

धनापहरणमप्युक्तं तद्ब्राह्मणवधकर्तृक्षत्रियादिविषयम् । अत एव **बौधायनः** ( बौ. धर्मसूत्र १. १०. २०–२१ )–क्षत्रियादीनां ब्राह्मणस्य वधे वधः सर्वस्वहरणं च । तेषामेव तुल्यावकृष्टवधे यथाबलमनुरूपं दण्डं च प्रकल्पयेत्–इति । **तेषां** क्षत्रियादीनां **तुल्यावकृष्टवधे** सजातीयहीनजातीयवधे **दण्डं** शारीरं दण्डम् । बहवो यद्येकं हन्युस्तदा ते दोषानुरूपं दण्ड्याः । तथा च **बृहस्पतिः**

---

1 'सर्ववादिष्वयं विधिः' अ–क.

एकस्य बहवो यत्र प्रहरन्ति रुषान्विताः ।
मर्मप्रहारको यस्तु घातकः स उदाहृतः ॥
मर्मघाती तु यस्तेषां यथोक्तं प्रापयेद्दमम् ।
आरम्भकृत्सहायश्च दोषभागी तदर्धतः ॥
क्षतस्याल्पमहत्त्वं च मर्मस्थानं च यत्नतः ।
सामर्थ्यं चानुबन्धं च ज्ञात्वा चिह्नैः प्रसाधयेत् ॥

**कात्यायनो**ऽपि ( ८३२–८३४ )

आरम्भकृत्सहायश्च तथा मार्गानुदेशकः ।
आश्रयः शस्त्रदाता च भक्तदाता विकर्मिणाम् ॥
युद्धोपदेशकश्चैव तद्विनाशप्रवर्तकः ।
उपेक्षाकार्ययुक्तश्च दोषवक्तानुमोदकः ॥
अनिषेद्धा क्षमो यः स्यात्सर्वे ते कार्यकारिणः ।
यथाशक्त्यनुरूपं तु दण्डमेषां प्रकल्पयेत् ॥

ब्राह्मणस्य[1] मनुष्यमारणकर्तृत्वेपि न शारीरो दण्ड इत्याह **नारदः** (साहस ९-१०)

अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः ।
वधादृते ब्राह्मणस्य न वधं ब्राह्मणोऽर्हति ॥
शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात् ।
ललाटे चाभिशस्ताङ्कः[2] प्रयाणं गर्दभेन च ॥

**यमो**ऽपि

न शारीरो ब्राह्मणस्य दण्डो भवति कस्यचित् ।
गुप्ते तु बन्धने बद्ध्वा राजा भक्तं प्रदापयेत् ॥

कचिन्मनुष्यवधकर्तुर्दोषाभावकथनमुखेन दण्डाभावमाह **मनुः** ( ८. ३४८–४९ )

---

१ 'ब्राह्मणस्य' इति नास्ति अ–आदर्शे. २ 'चाभिशस्ताङ्कम्' इति **ब.**

शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ।
द्विजातीनां च वर्णानां विप्लवे कालकारिते ॥
आत्मनश्च परित्राणे दक्षिणानां च सङ्करे ।
स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण न दुष्यति ॥

**धर्म**स्तटाकारामादिरूपो **यत्र** देशे काले वा भेदनछेदनादिनो**परुध्यते** तत्र । तथा शूद्रेतरवर्णसङ्करे परदाराक्रमणादिरूपे राजाभाव**कालकारिते** । तथा**त्मनः** परतः प्राणसंशये तथा **दक्षिणानां सङ्करे** गोग्रहणनिमित्तके युद्धे । तथा **स्त्रीविप्राभ्युपपत्तौ** दुर्बलहिंसानिवारणे धर्माद्धेतो (धर्माद्धेतोः ?) **घ्नन् न दुष्यति** यतः । अतस्तत्र द्विजातिभिः क्षत्रधर्माश्रयणरहितैरपि समर्थैः शस्त्रं ग्राह्यमित्यन्वयः । क्षत्रियस्य प्रजापालनार्थे शस्त्रग्रहणं वचनान्तरेण प्राप्तमित्यत्र द्विजातिग्रहणं ब्राह्मणवैश्यविषयम् । अत एव **बौधायनः** (बौ. धर्मसूत्र २. २. ८०)

ब्राह्मणार्थे गवार्थे वा वर्णानां वापि सङ्करे ।
गृह्णीयातां विप्रविशौ शस्त्रं धर्मव्यतिक्रमे ॥

**विष्णु**रपि—स्वात्मत्राणे[1] वर्णसंसर्गे वा ब्राह्मणवैश्यौ शस्त्रमाददीयाताम् । **गौतमो**ऽपि (गौ. धर्मसूत्र ७. २५, २१.१९)—प्राणसंशयेऽपि ब्राह्मणोऽपि शस्त्रमाददीत दुर्बलहिंसायां च विमोचने शक्तश्चेत् । यत्तु—परीक्षार्थमपि ब्राह्मण आयुधं नाददीत—इत्या**पस्तम्ब**वचनं (आप. ध. सू. १. १०. २९. ६) यच्च—हास्यार्थमपि ब्राह्मण आयुधं नाददीतेति बौधायनवचनं तद्धर्मोपरोधादिव्यतिरिक्तविषयम् । आततायिवधे दोषाभावकथनमुखेन दण्डाभावमाह **बृहस्पतिः**

नाततायिवधे हन्ता किल्बिषं प्राप्नुयात् क्वचित् ।

**मनु**रपि (८. ३५१)

नाततायिवधे दोषो हन्तुर्भवति कश्चन ।
प्रकाशं वाप्रकाशं वा मन्युस्तं मन्युमृच्छति ॥ इति ।

---

१ 'आत्मत्राणे' इति ब.

**प्रकाशं** जनसमक्षमाभाष्य । **अप्रकाशं** विषदानादिनेति व्याख्यातं **मेधातिथिना** । एतच्च गोब्राह्मणव्यतिरिक्त[1]विषयम् । तथा च **सुमन्तुः**— नाततायिवधे दोषोऽन्यत्र गोब्राह्मणवधात् । **कात्यायनो**ऽपि

आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मनः ।
वधस्तत्र तु नैव स्यात्पापे हीने वधो भृगुः ॥

यत्तु

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥ इति

**मनु**वचनं ( ८. ३५० ), यच्च

आततायिनमायान्तमपि वेदान्तपारगम् ।
जिघांसन्तं जिघांसीयान्न तेन भ्रूणहा भवेत् ॥ इति

**वसिष्ठ**वचनं ( ३. १७ ) तदत्यन्तावध्यानां गुर्वादीनामप्याततायिनां वधे न दोषः किमुतान्यस्याततायिनो वधे इत्येवं कैमुतिकन्यायप्रतिपादनपरम् । अत्र मनुवचने आयान्तमित्युपलक्षणं तेन कृतापराधोऽप्याततायी हन्तव्य एवेत्युक्तं **मेधातिथि**ना—आततायित्वाच्चासौ हन्यते न हि कृतवत आततायित्वमपैति– इति ग्रन्थेन । आत्मरक्षणाद्यर्थं मारणेच्छारहितेन निवार्यमाणानां ब्राह्मणादीनां कथंचित् प्रमादेन मरणे न निवारयतू राजदण्ड इति **विज्ञानेश्वराचार्य**कृता व्यवस्था । **स्मृतिचन्द्रिकाकारास्तु**

आत्मत्यागः परत्यागात्पापीयान् पातकादपि ।
पातके निष्कृतिः प्रोक्ता कथमात्मघ्ननिष्कृतिः ॥
आत्मानं बुद्धिसम्पन्नं योऽयं सर्वार्थसिद्धिषु ।
श्रमदुःखमये त्यक्त्वा रौरवे[2] परिपच्यते ॥
उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम् ।
निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत् ॥

---

१ 'व्यतिरिक्तमारणविषयम्' इति क. २ 'रौरवं' इति अ.

इति **गालव**वचनात्

स्वाध्यायिनं कुले जातं यो हन्यादाततायिनम् ।

अहत्वा भ्रूणहा स स्यान्न हत्वा भ्रूणहा भवेत् ॥ इति

**बृहस्पति**वचनाच्चात्मपरित्राणार्थमाततायिगोब्राह्मणहननमवश्यं कर्तव्यम् । अन्यत्र गोब्राह्मणात्—इति **सुमन्तु**वचनं आततायिनि चोत्कृष्टे इति **कात्यायन**वचनं चात्मपरित्राणव्यतिरिक्तधर्मोपरोधादिव्यतिरिक्तविषयमित्याहुर्योजयन्ति चैतदात्मपरित्राणव्यतिरिक्तविषयत्वेन **बृहस्पति**वचनं

आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम् ।

यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेत् ॥ इति ।

आततायिनः के इत्यपेक्षायामाह **वसिष्ठः** ( व. धर्मसूत्र ३. १६ )

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।

क्षेत्रदारहरश्चैव षडेते आततायिनः ॥

**कात्यायनो**ऽपि ( ८०२-८०३ )

उद्यतासिविषाग्निश्च शापोद्यतकरस्तथा ।

आथर्वणेन हन्ता च पिशुनश्चैव राजनि ॥

भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः ।

एवमाद्यान्विजानीयात्सर्व एवाततायिनः[1] ॥

**एवमाद्यान्** एवंप्रकारान् । स एव ( कात्या. ८०४ )

अनाक्षारितपूर्वो यस्त्वपराधे प्रवर्तते ।

प्राणद्रव्यापहारी च तं विद्यादाततायिनम् ।

**अनाक्षारितपूर्वः** अबाधितपूर्वः । एतेनार्थादाक्षारितपूर्वो यो विषदानाद्यपराधे प्रवर्तते स नाततायीति दर्शितम् । पश्वादीनामप्याततायिनां वधे न दोष इत्युक्तं **तेनैव** ( कात्या. ८०५ )

नखिनां दंष्ट्रिणां चैव शृङ्गिणां चाततायिनाम् ।

हस्त्यश्वानां तथान्येषां वधे हन्ता न दोषभाक् ॥

---

१ 'सर्वानेवाततायिनः' इति ब.

अत्र दोषाभावकथनात्पशुस्वामिने न धनदानं न च राज्ञे दण्डदान-मित्यवगन्तव्यम् । [1]साहसस्तेयस्वरूपमाह **याज्ञवल्क्यः** ( २. २३० )

सामान्यद्रव्यप्रसभहरणं साहसं स्मृतम् ।

बहुभिर्जनैः प्रहरादिकालक्रमेण रक्ष्यमाणस्य द्रव्यस्य बलात्कारेण हरणं साहसरूपं स्तेयमित्यर्थः । तत्र दण्डमाह **याज्ञवल्क्य** एव ( २. २३० )

तन्मूल्याद् द्विगुणं दण्डो निह्नवे तु[2] चतुर्गुणः ।

**तन्मूल्यात्** अपहृतद्रव्यमूल्यात् । **निह्नवे** अपलापे । एतद्वस्त्राद्युत्तमद्रव्यहरणे अतिदृप्तसाहसिककृते द्रष्टव्यम् । अत एव **बृहस्पतिः**

द्विगुणो वा कल्पनीयः पुरुषापेक्षया नृपैः । इति ।

**द्विगुणः** अनतिदृप्तसाहसिककृते यो दण्डः स्वेनोक्तस्तद्द्विगुण इत्यर्थः । स च यथा

क्षेत्रोपकरणं चैव पुष्पमूलफलानि च ।
विनाशयन्हरन्दण्ड्यः शताद्यमनुरूपतः ॥
पशुवस्त्रान्नपानानि गृहोपकरणं तथा ।
हिंसयंश्चोरयन्दाप्यो द्विशताद्यं दमं तथा ॥
स्त्रीपुंगोहेमरत्नानि देवविप्रधनं तथा ।
यौषेयं चोत्तमं द्रव्यमेषां मूल्यसमो दमः ॥
द्विगुणो वा कल्पनीयः पुरुषापेक्षया नृपैः[3] ।
हन्ता वा घातनीयः स्यात् प्रसङ्गविनिवृत्तये ॥

**यौषेयं** स्त्रीसम्बन्धि । **हन्ता वा** इति वाशब्द एवार्थे । तेन दण्डग्रहणानन्तरं स्तेयप्रकरणोक्तस्तत्तच्छरीरदण्डः कर्तव्य एवेत्यर्थः । अत्र विनाशयन् हरन् हिंसयंश्चोरयन् हन्तेति पदैः स्तेनस्य क्रोधलोभकृतह-

---

१ 'साहसस्य स्वरूपमाह' अ-क. २ 'निह्नवं च' अ-क. ३ इतः परं ··· ···'न दिव्यं दातुमर्हति' इत्यस्मात्प्राग्यो भागः स विसंष्ठुलः पौर्वापर्यदूषितः प्रतिभाति ब-पुस्तके.

ननसहितस्तेयकारित्वाभिधानेनास्य दण्डस्य साहसस्तेयविषयता[1] स्पष्टीक्रियते। साहसस्तेयस्य क्रोधलोभकृतत्वमुक्तं **तेनैव**

सांप्रतं साहसस्तेयं श्रूयतां क्रोधलोभजम्।

साहसस्तेयप्रयोजकस्यापि दण्डमाह **याज्ञवल्क्यः** (२. २३१)

यः साहसं कारयति स दाप्यो द्विगुणं दमम्।
यश्चैवमुक्त्वाहं दाता कारयेत्स चतुर्गुणम्॥

यस्तु वाङ्मात्रेण साहसं कारयति स साहसकारिणो द्विगुणं दण्डं दाप्यः। यस्तु धनमहं दास्यामीत्युक्त्वा साहसे प्रेरयति स चतुर्गुणं दाप्य इत्यर्थः। स्त्रीसंग्रहणरूपसाहसस्वरूपमाह **बृहस्पतिः**

अनिच्छन्त्या यत्क्रियते सुप्तोन्मत्तप्रमत्तया।
प्रलपन्त्या वा रहसि बलात्कारकृतं तु तत्॥

**अनिच्छन्त्या** सह यत्परपुरुषेणेति[2] शेषः। अनिच्छन्त्याश्चिह्नानि तस्याः कर्तव्यं राजकर्तव्यं च दर्शयति **संवर्तः**

नेच्छन्त्या यानि चिह्नानि बलात्कारकृतानि च।
परपुंसः प्रसङ्गेषु नारीणां तानि शृण्वत॥
नखदन्तक्षतक्षामा सकचग्रहविक्षता।
सद्यो विध्वंसिता नारी बलात्कारेण दूषिता॥
उच्चैर्विक्रोशयन्ती च रुदन्ती (ती ?) लोकसंनिधौ।
तस्य नाम्ना वदन्ती च यथाहं तेन दूषिता॥
शोचेदेवंविधैर्लिङ्गैर्व्रणीकृतपयोधरा।
चिह्नालङ्कारकेशैश्च व्याकुलीकृतलोचना॥
राज्ञा सभ्यैः सभां नीत्वा स्वयमन्विष्य तत्क्षणात्।
यद् ब्रूयात्सहजं वाक्यं तत्कर्तव्यं प्रयत्नतः॥
विवादे साक्षिणामत्र प्रकुर्वीत परिग्रहम्।
प्रार्थनादभिशस्तस्य न दिव्यं दातुमर्हति॥

---

१ "भिधानेनास्य साहसस्तेयस्य क्रोधलोभकृतत्वम्' इति क-आदर्शे. २ 'यत्पुरुषेणेति शेषः' इति क-आदर्शे.

अत्र दण्डमाह **मनुः** (८. ३७८)

सहस्रं ब्राह्मणो दण्ड्यो विप्रां गुप्तां बलाद् व्रजन् ।

**गुप्तां** स्वनियमेन रक्षिताम् । क्षत्रियादिसवर्णविषये दण्डमाह **बृहस्पतिः**

सहसा कामयेद्यस्तु धनं तस्याखिलं हरेत् ।
उत्कृत्य लिङ्गं वृषणौ भ्रामयेद्गर्दभेन तु ॥

**कामयेत्** परस्त्रियं गच्छेत् । अनुलोमजातिषु प्रतिलोमजातिषु च सजातीयपरभार्यागमनेऽयमेव दण्डः । ब्राह्मणादिषु सर्वेष्वपि हीनजातीयागमने त्वेतदर्धपरिमितो दण्डः । उत्कृष्टजातिगमने त्वयं दण्डो मारणसहितः कर्तव्य इत्याह **स** एव

दमो नेयः समायां तु हीनायामर्धिकस्ततः ।
पुंसः कार्योऽधिकायां तु गमने सप्रमापणम् ॥

**दमः** सहसा कामयेदिति वाक्योक्तः । **नेयः** प्रापणीयः । यत्तु **कात्यायनेन** (८३०)

स्त्रीषु कृतोपभोगः स्यात्प्रसह्य पुरुषो यदा ।
वधे तत्र प्रवर्तेत कार्यातिक्रमणं हि तत् ॥ इति

वधमात्रमभिहितं तन्निर्गुणस्य भार्यायामुपभुक्तायां द्रष्टव्यम् । अत्र च स्त्रिया अपराधाभावाद्यद्यपि दण्डो नोक्तस्तथापि परपुरुषोपभुक्तत्वेनास्याः सपापत्वात् क्वचित्कृतप्रायश्चित्ता संव्यवहार्या क्वचिन्नेत्याह **स** एव

अनिच्छन्ती तु या भुक्ता गुप्तां तां वासयेद्गृहे ।
मलिनाक्षीमधःशय्यां पिण्डमात्रोपजीविनीम् ॥
कारयेन्निष्कृतिं कृच्छ्रं पराकं वा समे गताम् ।
हीनवर्णोपभुक्ता या त्याज्या वध्याथवा भवेत् ॥

**गुप्तां** पुनःसम्भोगरहिताम् । **वासयेत्** विशुद्धिपर्यन्तमिति शेषः । **समे** सवर्णे । वाग्दण्डपारुष्याद्यात्मके फलमूलोदकादीनामिति वाक्योक्ते प्रथममध्यमोत्तमादिभेदेन त्रिविधे साहसे दण्डमाह **नारदः**(साहस, ७–९)

तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः ।
मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः ॥
उत्तमे साहसे दण्डः सहस्रावर इष्यते ।
वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने ॥
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे ॥

**दण्डः क्रियापेक्षः** अपराधक्रियापेक्षः कल्पनीय इति शेषः । वाग्दण्डपारुष्यात्मकप्रथमसाहसस्य शतावरो दण्डः कार्षापणशतान्न्यूनो नास्तीत्यर्थः । एवं पञ्चशतावरः सहस्रावर इत्यत्रापि द्रष्टव्यम् । उत्तमसाहसे य एते दण्डा उक्तास्तेऽपराधानुसारेण व्यस्ताः समस्ता योजनीयाः । उत्तमसाहसिकस्य दत्तदण्डस्याप्यसंव्यवहार्यतामाह **स एव** ( नारद, साहस ११ )

स्यातां संव्यवहार्यौ द्वौ धृतदण्डौ तु पूर्वयोः ।
धृतदण्डोऽप्यसंभाष्यो ज्ञेय उत्तमसाहसे ॥

इति श्रीकोदण्डपरशुरामेति·······व्यवहारविवेकोद्द्योते साहसाख्यव्यवहारपदनिरूपणम् ॥ ३० ॥

## अथ स्त्रीसंग्रहणाख्यव्यवहारपदनिरूपणम् ॥

तत् त्रिविधमित्याह **बृहस्पतिः**

पापमूलं संग्रहणं त्रिप्रकारं निबोधत ।
बलोपाधिकृते[1] द्वे तु तृतीयमनुरागजम् ॥

त्रयाणामपि भेदानां स्वरूपं दर्शितं **तेनैव**

अनिच्छन्त्या यत्क्रियते मत्तोन्मत्तप्रमत्तया ।
प्रलपन्त्या वा रहसि बलात्कारकृतं तु तत् ॥
छद्मना गृहमानीय दत्त्वास्या मदकारणम् ।
संयोगः क्रियते यत्तु तदुपाधिकृतं विदुः ॥

---

१ 'बलोपधिकृते' इति ब-क.

अन्योन्यचक्षूरागेण दूतीसंप्रेषणेन वा ।
कृतं रूपार्थलोभेन[1] ज्ञेयं तदनुरागजम् ॥

**मदकारणं** मादकं धत्तूरबीजादिकम् । तत्र बलात्कारकृतं स्त्रीसंग्रहणं साहसान्तर्भूतत्वात्तत्प्रकरणेऽधुनैव दर्शितम् । उपाधिकृते दण्डमाह **स** एव

छद्मना कामयेद्यस्तु तस्य सर्वहरो दमः ।
अङ्कयित्वा भगाङ्केन पुरान्निर्वासयेत्ततः ॥

**सर्वहरः** सर्वस्वहरः । एतत्सजातीयपरभार्यागमनविषयं हीनजातीयागमने तदर्धभूतः सर्वस्वहरणरूपो दण्डः । उत्कृष्टजातीयागमने तु वधसहितोऽयं दण्डः । तथा च **स** एव

दमो नेयः समायां तु हीनायामधिकस्ततः ।
पुंसः कार्योऽधिकायां तु गमने सप्रमापणम् ॥ इति ।

अत्र पुरुषस्यैवापराधो न स्त्रिया इति तस्यैव दण्ड उक्तो न स्त्रियास्तेन साहसस्त्रीसंग्रहणवत् छद्मकृतेऽपि सजातीयोपभुक्तायाः प्रायश्चित्तकरणानन्तरं संव्यवहार्यता हीनोपभुक्तायास्तु नेति ज्ञातव्यम् । अनुरागजसंग्रहणस्य त्रैविध्यमाह **व्यासः**

संग्रहस्त्रिविधो ज्ञेयः प्रथमो मध्यमस्तथा ।
उत्तमश्चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥

एतेषां स्वरूपं दर्शयति **बृहस्पतिः**

अपाङ्गप्रेक्षणं हास्यं दूतीसंप्रेषणं तथा ।
स्पर्शो भूषणवस्त्राणां प्रथमः संग्रहः स्मृतः ॥
प्रेषणं गन्धमाल्यानां फलमद्यान्नवाससाम् ।
सम्भाषणं च रहसि मध्यमं संग्रहं विदुः ॥
एकशय्यासनं क्रीडाचुम्बनालिङ्गनं तथा ।
एतत्संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः ॥

---

१ 'लाभेन' इति ब-क.

एतेषु त्रिषु क्रमेण दण्डानाह स एव

त्रयाणामपि चैतेषां प्रथमो मध्य उत्तमः ।
विनयः कल्पनीयः स्यादधिको द्रविणाधिके ॥

**अधिकः** प्रथमसाहसादिभ्योऽधिकः । परस्त्रिया सम्भाषणं कुर्वाणस्य दण्डमाह **मनुः** ( ८. ३५४ )

परस्य पत्न्या[1] पुरुषः सम्भाषं योजयेत्सह ।
पूर्वमाक्षारितो दोषैः प्राप्नुयात्पूर्वसाहसम् ॥

**आक्षारितः** अभिशस्तः । **दोषैः** नानोपभोगवाञ्छादिभिः । यस्तु पापबुद्धिविरहितः कारणान्तरात्सम्भाषते न तस्य दण्ड इत्युक्तं **तेनैव** ( मनु ८. ३५५ )

यस्त्वनाक्षारितः पूर्वमभिभाषेत कारणात् ।
न दोषं प्राप्नुयात्किंचिन्न हि तस्य व्यतिक्रमः ॥

बृहस्पतिना तु सम्भाषणस्य मध्यमसंग्रहत्वमभिधाय तत्र मध्यमसाहसो दण्ड उक्तो मनुना तु पूर्वसाहस उक्तः । अनयोरुत्कृष्टसजातीयसम्भाषणविषयत्वेन व्यवस्था परिकल्पनीया । या पित्रादिभिर्निषिद्धं परपुरुषेण सम्भाषणं करोति सा पणशतं दण्ड्या पुरुषः पित्रादिभिर्निषिद्धं सम्भाषणं कुर्वाणः पणशतद्वयं दण्डनीयः । उभावपि प्रतिषिद्धं परस्परं भाषणादिकं कुर्वाणौ सम्भोगे यो दण्डस्तद्दण्डभाजावित्याह **याज्ञवल्क्यः** ( २. २८५ )

स्त्री निषेधे शतं दण्ड्या द्विशतं तु दमं पुमान् ।
प्रतिषेधे तयोर्दण्डो यथा संग्रहणे तथा ॥

निषिध्यते इति **निषेधः** । कर्मणि 'हलश्च' (पा. ३. ३. १२१) इति घञ्[1] । एतच्चारणादिस्त्रीव्यतिरिक्तविषयम् । तथा च **मनुः** (८. ३६२)

नैष चारणदारेषु विधिर्नात्मोपजीविषु[2] ।
सज्जयन्ति हि ते नारीर्निगूढाश्चारयन्ति च ॥

---

१ 'घः' इति **क.** २ 'नित्योपजीविषु' इति **अ.**

**चारणा** नटाः । **आत्मोपजीविनः** वेशोपजीविनः । **एतेषां दारेषु एष विधिः** अभिभाषणादिनिमित्तकदण्डविधिः । यत एते **नारीः** स्वभार्याः **सज्जयन्ति** पुरुषान्तरे संयोजयन्ति प्रच्छन्नीकृत्य चारयन्ति चेत्यर्थः । सम्भोगे दण्डमाह **याज्ञवल्क्यः** ( २. २८६ )

सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः ।
प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्तनम् ॥

अत्र स्त्रिया अपि दण्डाभिधानादनुरागजसंग्रहणविषयमेतद्वाक्यमित्यवगम्यते । बलात्कारकृतोपाधिकृतयोः स्त्रिया अनपराधित्वेन दण्डाभावात् । सजातीयागमने तूत्तमसाहसो दण्डः, हीनजातीयागमने मध्यमसाहसः, उत्कृष्टजातीयागमने गन्तुर्वधस्तस्याः कर्णादिकर्तनमित्यर्थः । अस्मादेव प्रातिलोम्येन गमने पुरुषस्य वधं विधाय स्त्रियास्तदर्धतुल्यकर्णादिकर्तनविधानात्सजातीयागमनादौ पुरुषस्य यावुत्तममध्यमसाहसौ दण्डावुक्तौ तत्र तदर्धं स्त्रिया दण्ड इति सूचितम् । अत एव **कात्यायनः** ( ४८७ )

सर्वेषु चापराधेषु पुंसो योऽर्थदमः स्मृतः ।
तदर्धं योषितो दद्युर्वधे पुंसोऽङ्गकर्तनम् ॥

**योषितोऽ**पराधकर्त्र्य इति शेषः । यस्तु

शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः ।

इति **मनुना** ( ८. ३७८ ) ब्राह्मणस्येच्छन्त्या ब्राह्मण्या गमने दण्ड उक्तः स या अरक्षिता अक्षतचरिता तद्गमनविषयः । यश्चानुलोम्येन गमनेऽप्येवमेव दण्ड उक्तः ( मनु ८. ३८५ )

अगुप्ते वैश्यराजन्ये शूद्रां वा ब्राह्मणो व्रजन् ।
शतानि पञ्च दण्ड्यः स्यात्सहस्रं त्वन्त्यजस्त्रियम् ॥ इति

स या वैश्यादयोऽगुप्ता मानसव्यभिचारादरक्षिता गृहेऽवरुद्धाः प्रसह्य रक्षिता इति यावत् तासां गमने वेदितव्यः । मानसव्यभिचारादर-

क्षितानां गृहेऽवरोधेन बलाद्रक्षणं कार्यमित्युक्तं स्त्रीपुंधर्मप्रकरणे **तेनैव** ( मनु ९. १२ )

अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः । इति ।

यश्च **तेनैव** ( मनु ८. ३८३ )

सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन् ।

इति दण्ड उक्तः स गृहव्यापारनियोजनेन मानसव्यभिचारादपि रक्षितायाः क्षत्रियाया वैश्यायाश्च गमने वेदितव्यः । यास्तु न मानसव्यभिचाराद्रक्षिता न च गृहेऽवरुद्धास्तद्गमने गुप्तागमने यो दण्डस्तदर्धं दण्ड इत्याह **व्यासः**

गुप्तायां संग्रहे दण्डो यथोक्तः समुदाहृतः ।
अनिच्छन्त्यामागतायां[1] ( इच्छन्त्यामागतायां तु ? ) गच्छतोऽर्धदमः स्मृतः ॥

प्रातिलोम्येन गमने शूद्रस्य दण्डविशेषमाह **मनुः** ( ८. ३७४ )

शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन् ।
अगुप्तमङ्गसर्वस्वैर्गुप्तं सर्वेण हीयते ॥

शूद्रोऽगुप्तां द्विजातीनां स्त्रियं गच्छन् लिङ्गच्छेदनसर्वस्वापहारभाग्भवति गुप्तां तु गच्छन् सर्वस्वापहारवधभाग्भवतीत्यर्थः । अत एव **गौतमः** ( गौ. धर्मसूत्र १२. २-३ )—आर्यस्त्र्यभिगमने लिङ्गोद्धारः सर्वस्वहरणं च गुप्ता चेद्वधोऽधिकः—इति । क्षत्रियवैश्ययोरगुप्तब्राह्मणीगमने दण्ड उक्तस्**तेनैव** ( मनु ८. ३७६ )

ब्राह्मणीं तु यदा गुप्तां गच्छेतां वैश्यपार्थिवौ ।
वैश्यं पञ्चशतं कुर्यात्क्षत्रियं तु सहस्रिणम् ॥

**पञ्चशतं** पणशतपञ्चकदण्डभाजमित्यर्थः । एवं **सहस्रिण**मित्यत्रापि । गुप्तागमने दण्डमाह **स** एव ( मनु ८. ३७७ )

उभावपि हि तावेव ब्राह्मण्या गुप्तया सह ।
विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥

---

१ 'अनिच्छन्त्यामागच्छतोऽर्धदमः' इति अ-क.

**शूद्रवद् दण्ड्यौ** वधसर्वस्वापहारभाजावित्यर्थः । क्षत्रियवैश्ययोः परस्परगुप्तस्त्र्यभिगमने क्रमेण पणसहस्रपणशतपञ्चके तयोर्दण्डः । तथा च **स** एव ( मनु ८. ३८२ )

वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् ।
[1]यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः ॥

**वैश्यस्य** प्रातिलोम्येऽप्ययं दण्डोऽत्यन्तनिर्गुणभर्तृकस्त्रीविषयः । प्रातिलोम्येन गन्तुस्तस्य महापराधित्वेनाल्पदण्डानर्हत्वात् । अत एव **वसिष्ठः** ( व. धर्मसूत्र २१. ३–५ )–राजन्यश्चेद् ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येदेवं वैश्यो राजन्यायां मैथुनमारब्धः शूद्रस्तु राजन्यवैश्ययोः । इति । सजातीयागमनेपि क्वचिदपराधाधिक्याच्छारीरं दण्डमाह **नारदः** ( स्त्रीपुंस० ७३–७५ )

माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥
दुहिताचार्यभार्या च सगोत्रा शरणागता ।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥
आसामन्यतमां गच्छन् गुरुतल्पग उच्यते ।
शिश्नस्योत्कर्तनात्तत्र नान्यो दण्डो विधीयते ॥

**मातृ**ग्रहणं मातृसमानानां मातुः सपत्नीनां ज्येष्ठभ्रातुः पत्नीनां चोपलक्षणम् । **स्नुषा**ग्रहणं तत्समानानां कनिष्ठभ्रातुः पत्नीनामप्युपलक्षणम् । **नान्यो दण्डो**ऽस्मान्न्यून इति शेषः, अधिकदण्डस्य वधसहितस्य लिङ्गच्छेदस्य **याज्ञवल्क्येन** विधानात् । तद्यथा ( या. ३. २३२–२३३ )

पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥

---

१ 'अत एव वसिष्ठः राजन्यश्चेद् ब्राह्मणीमभिगच्छेत्' इति वाक्यं प्रमादात् 'यो ब्राह्मण्याम्' इत्यस्मात्प्राग् निक्षिप्तं **ब**–आदर्शे.

आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ।
छित्त्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियस्तथा ॥ इति ।

अयं च दण्डो ब्राह्मणव्यतिरिक्तविषयः । ब्राह्मणवधस्य निषिद्धत्वात् । अत एव ब्राह्मणमधिकृत्य **बृहस्पतिः**

परदाराभिमर्शे तु प्रवृत्तं तु महीपतिः ।
उद्वेजनकरैर्दण्डैश्चिह्नयित्वा प्रवासयेत् ॥
अब्राह्मणः संग्रहणे प्राणान्तं दण्डमर्हति ।

**शङ्खलिखिता**वपि–सर्वेषां स्वदारनियमः स्वकर्मप्रतिपत्तिश्च येन[1] येनाङ्गेनापराधं कुर्यात्तत्तदस्य च्छेत्तव्यमन्यत्र ब्राह्मणाददण्ड्यो हि ब्राह्मणः–इति । **प्रतिपत्तिः** पूज्यतासम्पादक इत्यर्थः । क्वचिद्ब्राह्मण्या वधदण्डमाह **यमः**[2]

वृषलं सेवते या तु ब्राह्मणी मदमोहिता ।
तां श्वभिः खादयेद्राजा संस्थाने वध्य[3]घातिनाम् ॥
वैश्यं वा क्षत्रियं वापि ब्राह्मणी सेवते तु या ।
शिरसो मुण्डनं तस्याः प्रयाणं गर्दभेन तु ॥

**वध्यघातिनां** चाण्डालादीनां सम्बन्धिनि स्थाने वधस्थान इत्यर्थः । **मदमोहिते**ति पदोपादानादत्यन्तासक्ताविषयो दण्ड इति गम्यते । अत्यन्तासक्तिरहितायास्तु न शारीरो दण्डः

यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम् । इति (मनु. ११.१७६)

तस्याः संव्यवहारार्थं प्रायश्चित्तविधानादिति **स्मृतिचन्द्रिकाकारः**। स्त्रीकृते[4] संग्रहणे दण्डमाह **बृहस्पतिः**

गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना ।
कामयेत्तत्र सा दण्ड्या नरस्यार्धदमः स्मृतः ॥

---

१ 'येनाङ्गेनापराधं' इति क. २ 'यमः' इति नास्ति ब–आदर्शे. ३ 'वध्यवर्तिनाम्' इति अ–क. ४ 'स्त्रीसंग्रहणे दण्डमाह' इति अ; 'स्त्रीकृते...बृहस्पतिः' इति नास्ति क–आदर्शे.

वचसा स्त्रियं प्रलोभ्य गच्छतः पुरुषस्य यो दण्डस्तं ग्राह्या तद्दण्डार्धं पुरुषो ग्राह्य इत्यर्थः। क्वचिद् दास्यादिगमनेऽपि दण्डमाह **याज्ञवल्क्यः** (२.२९०)

अवरुद्धासु दासीषु भुजिष्यासु तथैव च।
गम्यास्वपि पुमान्दाप्यः पञ्चाशत्पणिकं दमम्॥

स्वामिना याः शुश्रूषार्थं गृह एव स्थातव्यमित्येवं पुरुषान्तरोपभोगतो निरुद्धा **अवरुद्धाः** पुरुषान्तरेणावरुध्य भुज्यमाना **भुजिष्याः** या दास्यो भुजिष्या अवरुद्धा वा तासु सर्वपुरुषसाधारणतया **गम्यास्वपि** गच्छन् पञ्चाशत्पणं दण्ड्यः। तासां परगृहीतत्वेन परस्त्रीतुल्यत्वात्। **च**शब्दोपादानात् परगृहीतयोर्वेश्यास्वैरिण्योरपि गमनेऽयं दण्ड इति मन्तव्यम्। एतच्च स्पष्टीकृतं **नारदेन** (स्त्रीपुंस० ७८-७९)

स्वैरिण्यब्राह्मणी वेश्या[1] दासी निष्कासिनी च या।
गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः॥
आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत्।
गम्यास्वपि हि नोपेयाद् यतस्ताः सपरिग्रहाः[2]॥

**अब्राह्मणी**ति **स्वैरिण्या** विशेषणम्। **स्वैरिणी** स्वतन्त्रा पुंश्चली। **निष्कासिनी** कुटुम्बान्निर्गता पुंश्चली। भुजिष्यास्वेवेति सम्बन्धः। **व्यासो**ऽप्याह

परोपरुद्धागमने पञ्चाशत्पणिको दमः।
प्रसह्य वेश्यागमने दण्डो दशपणः स्मृतः॥

**प्रसह्य** शुल्कदानमन्तरेण। अत्र पुरुषान्तरानवरुद्धासु वेश्यादिषु गम्यत्वोक्तिस्तद्गामिनां दण्डो नास्तीत्येतावन्मात्रेण न पुनः पापराहित्येन

पशुवेश्याभिगमने प्राजापत्यं विधीयते।

इत्यादिवाक्यैस्तद्गमने प्रायश्चित्तोपदेशात्। अन्त्यजस्त्रीगमने मनूक्तपणसहस्रदण्डानन्तरं प्रायश्चित्तानभिमुखास्त्रयो वर्णा भगाङ्कनं कृत्वा राष्ट्रान्नि-

---

१ 'वैश्या' इति क. २ 'सः परिग्रहात्' इति अ-क; 'सपरिग्रहात्' इति ब.

र्वास्याः शूद्रस्तत्कर्मकारी चाण्डाल एव भवतीत्याह **याज्ञवल्क्यः** (२. २९४)

अन्त्याभिगमने त्वाङ्क्य कुबन्धेन प्रवासयेत् ।
शूद्रस्तथान्त्य एव स्यादन्त्यस्यार्यागमे वधः ॥

**आङ्क्य** अङ्कयित्वा । **कुबन्धेन** कुत्सितबन्धेन भगाकारेण । **आर्यागमे** उत्कृष्टजातीयागमने । स्त्रीसंग्रहणस्य ज्ञातस्य दण्डनिमित्तत्वात् तन्निश्चयोपायमाह **याज्ञवल्क्यः** (२. २८३)

पुमान्संग्रहणे ग्राह्यः केशाकेशि परस्त्रियाः ।
सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा ॥

**केशाकेशि** त्वव्ययत्वाल्लुप्ततृतीयाविभक्तिको निर्देशः परभार्यया सह केशाकेशिक्रीडया अभिनवैर्नखक्षतादिभिश्चिह्नैरुभयोः संप्रतिपत्त्या वायं संग्रहणवानिति[1] ज्ञातव्य इत्यर्थः । उपायान्तरमाह **स** एव (या. २. २८४)

नीवीस्तनप्रावरणसक्थिकेशावमर्शनम् ।
अदेशकालसम्भाषं सहैकस्थानमेव च ॥

कुर्वाण इति शेषः । **सक्थि** ऊरुः । परस्त्रिया स्पृष्टः क्षमते सोऽपि स्त्रीसंग्रहणे ग्राह्य इत्याह **मनुः** (८. ३५८)

स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तया ।
परस्परस्यानुमते सर्वं संग्रहणं स्मृतम् ॥

यः पुनरियं मया भुक्तेति दर्पादिना वदति सोऽपि तथाविधत्वेन ग्राह्य इत्याह **नारदः** (स्त्रीपुंस० ६९)

दर्पाद्वा यदि वा मोहाद्यया (? मोहाच्छ्लाघया) वा स्वयं वदेत् ।
पूर्वं मयेयं भुक्तेति तच्च संग्रहणं स्मृतम् ॥

इति श्रीकोदण्डपरशुरामेति····व्यवहारविवेकोद्योते स्त्रीसंग्रहणाख्यव्यवहारपदनिरूपणम् ॥ ३१ ॥

---

१ 'संग्रहणवानिति यः पुनरियं मया भुक्तेति दनप्यादिना ( दर्पादिना ? ) वदति सोपि तथाविधत्वेन ग्राह्यः ज्ञातव्य इत्यर्थः' इति ब.

## अथ स्त्रीपुंयोगाख्यव्यवहारपदनिरूपणम्।

तत्र तत्स्वरूपं दर्शयति **नारदः** ( स्त्रीपुंस० १ )

विवाहादिविधिः स्त्रीणां यत्र पुंसां च कीर्त्यते ।
स्त्रीपुंसयोगसंज्ञं तद्विवादपदमुच्यते ॥

**विवाहादिविधिरस्माभिराचारविवेकोद्द्योते** प्रपञ्चितः । **आदि**शब्देनात्र स्त्रीपुंधर्मा गृह्यन्ते । अत एव व्यवहारपदोद्देशकाले स्त्रीपुंधर्मो विभागश्चेत्युद्दिश्य प्रतिज्ञापूर्वकं ते निरूपिता **मनुना** ( ९. १ )

पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः ।
संयोगे विप्रयोगे च धर्मान् वक्ष्यामि शाश्वतान् ॥
अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् ।
विषये सज्जमानाश्च संस्थाप्यास्त्वात्मनो वशे[1] ॥

इत्यादिना । **संयोगे** परस्परसंयोजने **विप्रयोगे** तदभावे । **शाश्वतान**वश्यकरणीयान् । **विषये** दण्डहेतुभूते चाञ्चल्यादिविषये । स्त्रीणां स्वातन्त्र्ये दोषमाह **नारदः** ( दायभाग ३० )

स्वातन्त्र्याद्विप्रणश्यन्ति कुले जाता अपि स्त्रियः ।
अस्वातन्त्र्यमतस्तासां प्रजापतिरकल्पयत् ॥

**कुले** सत्कुले । पुरुषेण भार्या व्यभिचारादवश्यं रक्षणीयेत्याह **हारीतः**—एकव्रतस्कन्नभावात् परेन्द्रियोपहतत्वाच्च दुष्टाः कुलसङ्कर[2]कारिण्यो भवन्ति । जीवति जारजः कुण्डो मृते भर्तरि गोलकः । तस्माद्रेतोपघाताज्जायां रक्षेत् । जायानाशे कुलनाशः कुलनाशे तन्तुनाशस्तन्तुनाशे देवपितृयज्ञनाशो देवपितृयज्ञनाशे धर्मनाशो धर्मनाशे आत्मनाशः आत्मनाशे सर्वनाशः—इति । **एकव्रतस्कन्नभावात्** एकभर्तृत्वरूपव्रतस्खलनात् । **परेन्द्रिये**ति परस्मिन्पुंसि इन्द्रियस्य मनसो रागादिना उपहतत्वात् । **कुलसङ्करकारिण्यः** तज्जातिस्वभावानुगतप्रजोत्पादनेन कुलसाङ्कर्यम् । अत एव **शङ्खलिखितौ**—यस्मिन्[3] भावोऽर्पितः स्त्रीणा-

---

१ 'संस्थाप्या ह्यात्मनो वशे' इति क. २ 'कुलसंस्कारिण्यः' इति अ. ३ 'यस्मिन्नावर्तितः' अ-क.

मार्तवे तादृशं पुत्रं जनयन्तीति । तन्तुः पुत्रपौत्रादिः । परपुरुषवीक्षणादिभ्योऽपि रक्षणीया इत्याह **मनुः** ( ९. ५–६ )

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः ।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥
इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम् ।
यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि ॥

**द्वयोः कुलयोः** भर्तृकुलपितृकुलयोः । स्वबान्धवादिभिरपि रक्षणीया इत्याह **बृहस्पतिः**

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यो निवार्या स्त्री स्वबन्धुभिः ।
श्वश्र्वादिभिः पालनीया गुरुस्त्रीभिर्दिवानिशम् ॥

**मनुरपि** ( ९. ४ )

कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।
मृते भर्तरि पुत्रस्तु वाच्यो मातुररक्षिता ॥

**काले** कन्यादानयोग्ये काले । **वाच्यो** निन्द्यः । **अनुपयन्** अगच्छन् । **नारदः** (दायभाग २८–२९)

मृते भर्तर्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः ।
विनियोगात्मरक्षासु भरणेषु स ईश्वरः ॥
परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये ।
तत्सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियाः ॥
पक्षद्वयावसाने तु राजा भर्ता स्मृतः स्त्रियाः ।
स तस्या भरणं कुर्यान्निगृह्णीयात्पथश्च्युताम् ॥

**विनियोगः** कर्मणि नियोजनम् । **भर्ता** पोषकः । स्त्रीस्वभावं कंचिद्दर्शयन् स्त्री पुरुषेण लालनीयेत्याह **दक्षः** ( ४. ८–१०, २ )

जलौकावत्स्त्रियः सर्वा भूषणाच्छादनाशनैः ।
सुहितापि कृता नित्यं पुरुषं ह्यपकर्षति ॥
जलौका रक्तमादत्ते केवलं सा तपस्विनी ।
इतरा तु धनं वित्तं मांसं वीर्यं बलं सुखम् ॥

साशङ्का बालभावे तु यौवनेऽभिमुखी भवेत् ।
तृणवन्मन्यते नारी वृद्धभावे स्वकं पतिम् ॥
स्वकाम्ये वर्तमाना सा स्नेहान्न च निवारिता ।
अपथ्या तु भवेत्पश्चाद्यथा व्याधिरुपेक्षितः ॥

**सुहिता** तृप्ता **कृता**पीत्यन्वयः । **अपकर्षति** सततमवज्ञाविषयं करोति । **स्वकाम्ये** स्वेच्छायाम् । **अपथ्या** अत्यन्ताहितहेतुभूता । स्त्रीणां कायिकवाचिकदुश्चेष्टातो रक्षणमवरोधेनापि कर्तुं शक्यं मानसव्यभिचाराद्रक्षणं तु यद्यपि नावरोधेन कर्तुं शक्यं तथापि सततगृहव्यापारनियोजनादिना पुरुषान्तर[1]चेतनावसरराहित्यसम्पादनोपायेन कर्तव्यमित्याह **मनुः** ( ९. १०–११ )

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् ।
अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् ॥
शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य वेक्षणे ।

**व्यये** स्वेनोक्ते व्यये । शौचे गृहादिशुद्ध्यर्थे संमार्जनोपलेपनादौ । **धर्मे** अग्निहोत्रादिसत्कर्मौपयिके व्यापारे । **पक्त्यां** पाकव्यापारे । **पारिणाह्यं** पीठादिगृहोपकरणम् । **ईक्षणं** विचारणम् । एवंविधे[2]व्यापारासक्तेनान्तःकरणेन सुरक्षिताः साध्व्यः । यास्त्वाप्तैः पुरुषै रक्षितास्ता न सुरक्षिता इत्याह **स** एव ( मनु ९. १२ )

अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः ।

आप्ताश्च ते कारिणश्चेत्याप्त**कारिणः** । पत्युर्धर्मनिष्ठत्वमपि स्त्रीरक्षणोपाय इति दर्शयितुमाह **स** एव ( मनु ९. २२–२३ )

यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि ।
तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥

---

१ 'पुरुषान्तरवेतनाचरणराहित्यं' इति **क**; 'पुरुषान्तरवेतनावसर' इति **ब**. २ 'एवंविधव्यापारसक्तचित्ततया स्थिताः साध्व्य इति व्यपदिश्यन्त इत्याह स एव आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः । आत्मना गृहव्यापारसक्तेनान्तःकरणेन सुरक्षिताः सुष्ठु रक्षिताः साध्व्यः' इति **ब-क**.

अक्षमाला वसिष्ठेन संयुक्ताधमयोनिजा ।
शार्ङ्गी च मन्दपालेन जगामाभ्यर्हणीयताम् ॥

भरणमपि भार्याया अवश्यकर्तव्यमाह **स** एव ( मनु ९. ९५ )

देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः ।
तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन् ॥

**आत्मन इच्छया न विन्दते** किं तर्हि देवैर्दत्तामित्यनेन विवाह-लक्षणस्य स्त्रीपुंसयोः सम्बन्धस्य न स्वाधीनत्वं किं तर्हि देवकृतत्वमिति दर्शितम् । देवदत्तत्वं च स्त्रीणां

सोमो ददद्गन्धर्वाय गन्धर्वो ददद्ग्नये ।
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥

( ऋग्वेद १०. ८५. ४१ )

इत्यादिभ्यो वेदवाक्येभ्योऽवगम्यते । तेन देवैर्दत्ताया अभरणेन दातॄणां देवानां द्रोहश्चापद्यत इत्यर्थवादः । दुष्टाया अपि स्त्रियाः कदन्ना-दिना भरणं कार्यमित्याह **नारदः** (स्त्रीपुंस० ९१)

व्यभिचारे स्त्रिया मौण्ड्यमधःशयनमेव च ।
कदन्नं च कुवासश्च कर्म चावस्करोज्झनम् ॥

**अवस्करोज्झनं** अमेध्यदूरीकरणम् । गर्भिण्यै स्त्रियै तद्वाञ्छितं वस्त्ववश्यं दातव्यम् । अत एव **याज्ञवल्क्यः** ( ३. ७९ )

दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं मरणं वापि तस्मात्कार्यं प्रियं स्त्रियाः ॥

ग्रामान्तरं जिगमिषुणा भार्याया भरणार्थमुपायं विधाय गन्तव्य-मित्याह **मनुः** ( ९. ७४ )

विधाय वृत्तिं भार्याया प्रवसेत् कार्यवान्नरः ।
अवृत्तिकर्शिता हि स्त्री प्रदुष्येत्स्थितिमत्यपि ॥

**स्थितिमती** सन्मार्गस्थिता । अलङ्कारादिकमपि यथाशक्ति भार्यायै देयमित्याह **बृहस्पतिः**

भर्त्रा पत्नी समभ्यर्च्या वस्त्रालङ्कारभोजनैः ।
उत्सवे च पितृभ्रातृश्वशुराद्यैश्च बन्धुभिः ॥

अदुष्टभार्यायाः परित्यागो न कर्तव्य इत्यभिप्रेत्याह **देवलः**

स्वदारांस्त्यजतो मोहान्नरस्यान्यायशालिनः ।
धर्मवंशपरित्यक्तुर्निष्कृतिर्न विधीयते ॥

तस्य दण्डमाह **विष्णुः** ( विष्णुधर्मसूत्र ५. १६२–१६३ )– निर्दोषां परित्यज्य पत्नीं च–इति । चोरवच्छास्य इत्यनुषङ्गः । **निर्दोषां** त्यागहेतुभूतदोषरहिताम् । यदि सगुणां परित्यक्तुमिच्छति तदा त्वाह **नारदः** ( स्त्रीपुंस० ९५ )

अनुकूलामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम् ।
त्यजन्भार्यामवस्थाप्यो राज्ञा दण्डेन धर्मतः[1] ॥

साध्वीं त्यजन् राज्ञा दण्डं गृहीत्वा तस्यामवस्थापनीय इत्यर्थः । यदि स्थापितोऽपि न तिष्ठति तदा त्वाह **याज्ञवल्क्यः** ( १. ७६ )

आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन्दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियः ॥

**तृतीयांशं** तद्धनतृतीयांशं राज्ञा भार्याया दाप्यः । अल्पधनस्तु भरणमात्रपर्याप्तं दाप्य इत्यर्थः । स्त्रिया पतिरवश्यं शुश्रूषणीय इत्याह **मनुः** ( ५. १५१, १५६ )

यस्मै दद्यात्पिता कन्यां भ्राता वानुमते पितुः ।
शुश्रूषयेच्च जीवन्तं संस्थितं च न लङ्घयेत् ॥
पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा ।
पतिलोकमभीप्सन्ती नाचरेत्किंचिदप्रियम् ॥

**याज्ञवल्क्यः** ( १. ७७ )

स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः ।
आ शुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः ॥

निर्गुणोऽपि पतिः सेव्य इत्याह **मनुः** ( ५. १५३–१५४ )

---

१ 'दण्डेन भूयसा' इति ब.

अनृतावृतुकाले च मन्त्रसंस्कारकृत्पतिः ।
सुखस्य नित्यं दातेह परलोके च योषितः ॥
विशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः ।
उपचर्यः स्त्रिया साध्व्या सततं देववत्पतिः ॥

श्रौतस्मार्ताग्निपरिचरणमपि तयावश्यं कर्तव्यमित्याह **कात्यायनः**

पत्या चाप्यवियोगिन्या शुश्रूष्योऽग्निर्विधीयते ।
सौभाग्यवद्वैधव्यकाम्यया भर्तृभक्तया ॥

कांश्चित्स्त्रीधर्मानाह **विष्णुः** ( विष्णुधर्मसूत्र २५. २–१३ )–भर्तुः समानचारित्वं श्वशुरगुरुदेवतातिथीनां पूजनं सुसंस्कृतोपस्करताऽमुक्तहस्तता सुगुप्तभाण्डता मूलक्रियास्वनभिरुचिर्मङ्गलाचारतत्परता भर्तरि प्रीते ( प्रवसितेऽप्रति० ? ) प्रतिकर्मक्रिया परगृहेष्वनभिगमनं द्वारदेशे गवाक्षे वाऽनवस्थानं सर्वकर्मस्वस्वतन्त्रता बाल्ययौवनवार्धके पितृभर्तृपुत्र-परा[1]धीनता–इति । **ऋष्यशृङ्गो**ऽपि

गृहमेधा भवेन्नित्यं भूषणानि च पूजयेत् ।
नित्यं स्नानकृतां वेणीमर्चयेत्पुष्पमालया ॥
पूर्वमेव रहो गच्छेद्यावन्नान्यः प्रबुध्यते ।
देवताराधनं कुर्याद्धूपपुष्पाक्षतादिभिः ॥

**गृहमेधा** गृहकार्ये सक्ता । **भूषणानि पूजयेत्** मार्जनादिना संस्कुर्यादित्यर्थः । **स्नानकृतां** स्नानेन संस्कृताम् । **रहः** एकान्तस्थानात् । **अन्यः** पतिरित्यर्थः । देवताराधनं द्वारदेवताद्याराधनम् । अन्ये स्त्रीधर्मा **आचारविवेकोद्योते** दर्शिता इति नात्र प्रपञ्चिताः । पतिपत्न्योः परस्परानुरागे श्रेयोऽभिवृद्धिर्भवतीत्याह **याज्ञवल्क्यः** (१.७४)

यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्धते ।

**त्रिवर्गो** धर्मकामार्थाः । **मनु**रपि ( ३. ६०, ९. १०१ )

सन्तुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च ।
यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥

---

१ 'पितृभर्तृपराधीनता' इति अ.

अन्योन्यस्याव्यभीचारो भवेदामरणान्तिकः ।
एष धर्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः ॥

यद्यपि राज्ञः पुरतो वादिप्रतिवादिभावेन स्त्रीपुंसयोर्मिथो विवादो निषिद्धस्तथापि तयोः स्वधर्मातिक्रमे कथंचिज्ज्ञाते दण्डनादिना तौ स्वधर्मे स्थापनीयावित्येतदर्थं व्यवहारपदेषु स्त्रीपुंधर्माभिधानम् ॥ इति श्रीकोदण्डपरशुरामेति····व्यवहारविवेकोद्द्योते स्त्रीपुंयोगाख्यव्यवहारपदनिरूपणम् ॥ ३२ ॥

## अथ दायभागाख्यव्यवहारपदनिरूपणम् ॥

तत्र तत्स्वरूपं दर्शयति **नारदः** ( दायभाग १ )

विभागोऽर्थस्य पित्र्यादेः पुत्रैर्यत्र प्रकल्प्यते ।
दायभाग इति प्रोक्तं व्यवहारपदं बुधैः ॥

पित्रोरिदमिति **पित्र्यम्** । **आदि**शब्देन पैतामहादीनां ग्रहणम् । **पुत्र**ग्रहणं पौत्रादीनामप्युपलक्षणम् । अनेन यत्र दायस्य भागो निरूप्यते स **दायभाग** इत्यन्वर्थ[1]योगेनायं शब्दो व्यवहारपदे वर्तत इति दर्शितम् । **दायो** नाम विभागार्हं पित्रादिसम्बन्धि द्रव्यम् । तथा च **निघण्टुकारः**

विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीषिणः ।

**स्मृतिसंग्रहकारो**ऽपि

पितृद्वारागतं द्रव्यं मातृद्वारागतं च यत् ।
कथितं दायशब्देन तद्विभागोऽधुनोच्यते ॥

पितृमातृग्रहणं पितामहादीनामप्युपलक्षणम् । अयं च दायो द्विविधः सप्रतिबन्धोऽप्रतिबन्धश्चेति । यद्द्रव्यं स्वामिनस्तत्पुत्रादेरप्यभावे स्वं भवति स सप्रतिबन्धो दायो यथा पित्रा[2]दीनां पुत्रादिधनम् । यत्पुत्रपौत्रयोः पितृपितामहधनं जन्मन आरभ्य स्वं भवति सोऽप्रतिबन्धो दायः । तत्र स्वामितत्पुत्रसद्भावस्याप्रतिबन्धकत्वात् । विभागकालमाह **मनुः**(९.१०४)

---

१ 'इत्यवपवादार्थयोगेन' अ. २ 'यथा पुत्रादीनां पुत्रादि०' इति अ.

ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् ।
भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥

पित्रोरिदं **पैतृकम्**। यतस्ते पुरा मातापित्रो**र्जीवतो**स्तद्द्रव्योपादाने **अनीशा** अस्वतन्त्रा अतस्तयो**रूर्ध्वं** तद्धनं **समं भजेर**न्नित्यर्थः। अत्र पितुरूर्ध्वमिति पितृधनविभागकाल उक्तः। मातुरूर्ध्वमिति मातृधनविभागकाल उक्तः। **च**शब्दस्तु वक्ष्यमाणविभागकालान्तरसमुच्चयार्थः। तेन मातरि जीवन्त्यामपि पित्रभावे पितृधनविभागो मात्रभावे सत्यपि पितरि मातृधनविभागः कर्तुं योग्यः। अत एव **स्मृतिसंग्रहकारः**

पितृद्रव्यविभागः स्याज्जीवन्त्यामपि मातरि ।
न स्वतन्त्रतया स्वाम्यं यस्मान्मातुः पतिं विना ॥
मातृद्रव्यविभागोऽपि तथा पितरि जीवति ।
सत्स्वपत्येषु यस्मान्न स्त्रीधनस्य पतिः पतिः ॥

यत्पत्युर[1]भावेऽपि मातुर्यतः स्वातन्त्र्येण पतिधने न स्वाम्यमतस्तस्यां जीवन्त्यामपि पितृधनविभागः। यतोऽपत्येषु तिष्ठत्सु पतिर्भार्याधनस्य न स्वाम्यतस्तस्मिन् सत्यपि मातृधनविभाग इत्यर्थः॥ यद्यपि पै[2]त्र्ये धने पुत्राणां जन्मन आरभ्य स्वामित्वं तथापि व्याधितत्वादिदोषरहिते पितरि जीवति तदिच्छामन्तरेण न पुत्रास्तद्धनविभागार्हाः। तथा **शङ्खः**—जीवति पितरि पुत्रा रिक्थं भजेरन् यद्यपि स्यात्पश्चादधिगतं तैरनर्हा एव पुत्रा अर्थधर्मयोरस्वातन्त्र्यात्—इति। अर्थोपभोगे यागादिरूपे धर्मेऽपि पित्रनुज्ञां विना प्रवर्तितुमनर्हत्वादित्यर्थः। **पश्चात्** जन्मन इति शेषः। **अधिगतं** स्वाम्यमिति शेषः। अर्थेष्वस्वातन्त्र्यं विवृतं **हारीतेन**—जीवति पितरि पुत्राणामर्थादानविसर्गाक्षेपेष्वस्वातन्त्र्यम्—इति। **अर्थादानविसर्गौ** द्रव्योपभोगव्ययौ। **आक्षेपो**ऽपराधादिषु दास्यादीनां भर्त्सनादिकम्। एते**ष्वस्वातन्त्र्यं** पित्रनुज्ञां विना स्वेच्छया न प्रवर्तितव्यं तैरित्यर्थः। यत्पुनः

१ 'यत्पुनरभावेपि मातुर्यतः' इति अ; 'यत्पुत्रभावेपि मातुर्यतः' क. २ 'यद्यपि पैतृकेषु धनेषु' इति ब.

पितर्युपरते पुत्रा विभजेरन् पितुर्धनम् ।
अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते ॥

इति **देवल**वचनं तत्रा**स्वाम्य**मस्वातन्त्र्यमित्यर्थोऽवसेयः सत्यपि निर्दोषे पितरि पुत्रपौत्राणां जन्मन आरभ्यैव पितृपितामहधने स्वामित्वस्य लोकसिद्धत्वात् । उत्पत्त्यैवार्थं स्वामित्वाल्लभत इत्याचार्या इति **गौतमे**नाभिधानाच्च । ननु स्वामित्वस्य लोकसिद्धत्वं कथमुच्यते यावता शास्त्रैकसमधिगम्यत्वं स्वस्वामिभावस्य समर्थितं **संग्रहकारेण**

वर्तते यस्य यद्धस्ते तस्य स्वामी स एव न ।
अन्यस्वमन्यहस्तेषु चौर्याद्यैः किं न दृश्यते ॥
तस्माच्छास्त्रत एव स्यात्स्वाम्यं नानुभवादिति ।
अस्यापहृतमेतेन न युक्तं वक्तुमन्यथा ॥
विदितोऽर्थागमः शास्त्रे यथावर्णं पृथक् पृथक् ।
न च स्वमुच्यते तद्यत्स्वेच्छया विनियुज्यते ॥
विनियोगोऽस्य सर्वस्य शास्त्रेणैव नियम्यते । इति ।

अस्यार्थः । न हि यत्समीपे यद्धनं दृश्यते तस्य तद्धनं स्वं स च तस्य स्वामीति चौर्यादिलब्धधनेऽपि स्वस्वामिभावप्रसङ्गात् । किं च मम स्वमनेनापहृतमिति व्यवहारो न सङ्गच्छेत । यत्समीपे धनं दृश्यते तस्यैव तत्र स्वामित्वात् । किं च—स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः (गौतमधर्मसूत्र १०.३९-४२)—इत्येवमादिषु **गौतमा**दिवाक्येषु रिक्थादिसाधारणस्वत्वहेतूपदेशः प्रतिवर्णं प्रतिनियतप्रतिग्रहादिस्वत्वहेतूपदेशश्च व्यर्थः स्यात् । **रिक्थ**मप्रतिबन्धो दायः **क्रयः**[1] प्रसिद्धः **संविभागः** सप्रतिबन्धो दायः **परिग्रहः** प्रागन्येनास्वीकृतस्य वनादिसाधारणप्रदेशसम्बन्धिनः काष्ठतृणजलादेः स्वीकारः । **अधिगमः** निध्यादेः प्राप्तिः । एतेषु स्वत्वनिमित्तेषु सत्सु **स्वामी** भवति । अत्राप्रतिबन्धो दायो जन्मनैव

1 'क्रयः' इति नास्ति अ-आदर्शे.

स्वत्वहेतुः सप्रतिबन्धदायस्तु प्रतिबन्धापगमे सतीति ज्ञातव्यम् । **ब्राह्मणस्य लब्धं** प्रतिग्रहादिप्राप्तमधिकमसाधारणम् । **क्षत्रियस्य विजितं** विजयदण्डादिलब्धमसाधारणम् । **वैश्यशूद्रयोर्निर्विष्टं** भृतिरूपेण लब्धमसाधारणम् । तत्र वैश्यस्य कृषिगोरक्षादिलब्धं निर्विष्टं शूद्रस्य द्विजशुश्रूषादिलब्धम् । अत्र वैश्यशूद्रग्रहणस्योपलक्षणत्वादन्येषामनुलोमजानां प्रतिलोमजानां च—सूतानामश्वसारथ्यमित्यादिनोक्तं ( मनु १०.४७ ) यद्यदसाधारणं भृतिद्रव्यं तत्सर्वं निर्विष्टशब्देन परिगृह्यते । निःपूर्वस्य विशेर्भृत्यर्थत्वं तु—निर्वेशो भृतिभोगयोरित्य**मरसिंहेना**भिधानादवगम्यत इति गौतमवचनस्यार्थः । न च येन यद्यथेष्टं विनियुज्यते स तस्य स्वामी तच्च तस्य स्वं चौर्यादिलब्धं तु न तथेति वाच्यम् । सर्वस्य न्यायोपार्जितस्यापि धनस्य कुटुम्बपोषणादौ विनियोगः शास्त्रेण नियमित इति स्वेच्छानुसारेण विनियोगविषयत्वाभावादिति । एतत्संग्रहकारमतं **धारेश्वरभट्टेना**प्याश्रितम् । तस्माच्छास्त्रैकसमधिगम्यत्वात् कथं स्वस्वामिभावस्य लोकसिद्धत्वमिति चेत्, अत्राभिधीयते । शास्त्रार्थज्ञानरहितानां पामराणामपि हि क्रयादिप्राप्ते धने क्षेत्रादिस्वत्वव्यवहारो दृश्यते । न च स शास्त्रैकसमधिगम्यत्वे घटते । न च लौकिकत्वे चौर्यादिलब्धस्यापि स्वत्वापत्तिरिति वाच्यम् । प्रतिग्रहाद्युपायके एव लोके स्वत्वव्यवहारात् । न चैव स्वामी रिक्थेत्यादिशास्त्रानर्थक्यापत्तिः । तस्य व्याकरणशास्त्रवल्लोकसिद्धस्वत्वहेतुनिबन्धनार्थत्वात् । उक्तं चैतन्नयविवेके **प्राभाकर**मताम्बुजप्रभाकरेण **भवनाथेन**—लोकसिद्धं वार्जनं जन्मादि, अत एवानिदंप्रथमलोकधीविषयतया स्थिते निबन्धनार्था स्मृतिर्व्याकरणादिस्मृतिवदिति । **अर्जनं** स्वत्वहेतुः । **जन्मादि** पुत्रजन्म पितृपितामहधने स्वत्वहेतुः । **आदि**शब्देन क्रयादीनां ग्रहणम् । **अनिदंप्रथम**त्वमनादित्वम् । **व्याकरणादिस्मृतिवदि**ति । यथा व्याकरणशास्त्रे सिद्धा एव शब्दाः

---

१ 'वैश्यशूद्रयो'''साधारणम्' इति वाक्यं नास्ति अ-आदर्शे. २ 'प्रतिलोमजानाम्' इति नास्ति अ-क-आदर्शयोः. ३ 'न च' इति नास्ति अ-क-आदर्शयोः.

साधुत्वज्ञानार्थमनुख्यायन्ते तथेत्यर्थः । व्याकरणशास्त्रस्य लोकसिद्धशब्दान्वाख्यापकत्वमुक्तं **महाभाष्ये** सदन्वाख्यानाच्छास्त्रस्येति । सदन्वाख्यानात् सिद्धशब्दान्वाख्यापकत्वादित्यर्थः । न च यथेष्टविनियोज्यत्वं स्वत्वमिति वयं ब्रूमः । किं तर्हि यथेष्टविनियोगयोग्यत्वम् । तच्च शास्त्रेण कुटुम्बभरणादिविनियोगनियमनेन विनियोगान्तरविषयतामलभमानस्याप्यर्जितत्वप्रयुक्तमस्त्येव । यथा कुतश्चिद्धेतोरङ्कुरोत्पादनमकुर्वतोऽपि कुशूलादिस्थितस्य बीजस्य बीजत्वप्रयुक्तमङ्कुरोत्पादनयोग्यत्वम् । उक्तं च **नयविवेके**—तच्च तस्य तदर्हं यद्येनार्जितम्—इति । **तदर्हं** यथेष्टविनियोगार्हम् । **भट्टमतानुसारिणि तन्त्ररत्ने**ऽपि—यथेष्टविनियोज्यत्वं हि स्वत्वं केवलक्रत्वर्थत्वेऽन्यत्राविनियोगाद्यथेष्टविनियोगाभाव इति । **विनियोज्य**मत्र विनियोगार्हं—अर्हे कृत्यतृचश्च—इति **पाणिनि**स्मरणात् ( पा. ३.३. १६९ ) । यत्तु कैश्चित्स्वत्वस्य लौकिकत्वं प्रसाध्य तत्प्रयोजनमुक्तं ब्राह्मणेन यदसत्प्रतिग्रहेण वाणिज्यादिना वा लब्धं तत् स्वत्वस्य शास्त्रैकसमधिगम्यत्वे

यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् ।
तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव च ॥

इति वचनेन परित्यक्तव्यताभिधानात्स्वमेव न भवतीति तत्पुत्राणामविभाज्यं स्यात्, स्वत्वस्य लौकिकत्वे तु तादृशमपि स्वं भवत्येवेति तत्पुत्राणां तद्विभाज्यमेव प्रायश्चित्तं त्वर्जकस्यैव न तत्पुत्रादीनां दायत्वेन तैस्तद्ग्रहणात्, दायस्य च धर्म्यागमत्वेन दोषानापादकत्वात् । धर्म्यागमत्वं तु

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव वा ॥

इति मनुनाभिधानात् ( मनु १०. ११५ ) । **प्रयोगो** वृद्ध्यर्थं द्रव्यप्रयोगः । **कर्मयोगः** आर्त्विज्यादिकरणमिति । तदेतन्न सुन्दरमिव प्रतिभाति । यथा सिद्धशब्दानुशासनार्थे व्याकरणशास्त्रे ये लोकसिद्धाः

शब्दास्ते सर्वे सामान्यतो विशेषतो वानुशिष्टा एवेति यस्तत्र नानुशिष्टो यो वा—न ङिसम्बुद्ध्योः (पा. ८.२.८)—इत्येवमादिवाक्यैः सम्बुद्धौ लुप्तनकारोऽसाधुरित्येवंरूपेण प्रकारेणासाधुतयोपदिष्टः स लोकसिद्ध एव न भवतीति न प्रयोगार्हस्तथा लोकसिद्धस्य स्वत्वहेतुनिबन्धनार्थे गौतमादिशास्त्रे सर्वोऽपि स्वत्वहेतुरुपदिष्ट एवेति[1] यस्तत्र नोपदिष्टो यो वा चौर्यादिवत्स्वत्वासाधकत्वेनोक्तः स लौकिकोऽपि स्वत्वहेतुर्न भवतीत्यतोऽसत्प्रतिग्रहवाणिज्यादिलब्धस्य यदि शास्त्रे स्वत्वं निषिद्धं तर्हि लोकेऽपि चौर्यादिलब्धवत् तत्स्वत्वस्यानङ्गीकर्तव्यत्वात् । तस्माद्यद्गर्हितेनेति वाक्यमसत्प्रतिग्रहस्वयंकृतकृषिवाणिज्यादीनां स्वत्वहेतुत्वे सत्यपि ब्राह्मणस्य

आपद्गतः संप्रगृह्णन् भुञ्जानोऽपि यतस्ततः ।
न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः ॥ (या. ३.४१)
कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयंकृतम् ।
आपत्काले स्वयं कुर्वन्नैनसा युज्यते द्विजः ॥

इत्येवमादिभिर्**याज्ञवल्क्यबृहस्पत्या**दिवाक्यैरापद्वृत्तित्वेनोक्तानां तेषामनापद्याश्रयणे दोषसम्बन्धात्तदुपायलब्धद्रव्यपरित्यागजपतपोरूपं प्रायश्चित्तं विदधाति न तु तदुपायलब्धस्य स्वत्वं निषेधतीत्यास्थेयम् । अत एवासत्प्रतिग्रहादिनार्जयितुर्न चोरादिवद्दण्डविशेषः स्मर्यते । एवं चानापद्यप्यसत्प्रतिग्रहादिनार्जितस्य स्वत्वमस्त्येवेति तत्पुत्राणां तद्विभाज्यमेव । अर्जयितुरेव दोषसम्बन्धात्प्रायश्चित्ताचरणं चौर्यादिलब्धस्य तु न तादृक्त्वमिति न तद्विभाज्यं विभज्य ग्रहणे तत्पुत्रादयो दण्डादिभाज इत्यलं प्रसङ्गागतवित्तया[2] (वार्तया ?) । निर्दोषे पितरि स्थिते—इति वचनात्सदोषे पितरि जीवत्यपि पुत्राणां न तत्पारतन्त्र्यमिति भवति तेषां स्वेच्छया विभागकर्तृत्वम् । अत एव **नारदः** (दाय. १६)

व्याधितः कुपितश्चैव विषयासक्तमानसः ।
अन्यथाशास्त्रकारी च न विभागे पिता प्रभुः ॥

---

१ 'एवेति उपदिष्टशास्त्रे स्वत्वं निषिद्धस्तत्र नोपदिष्टः' इति **ब.** २ 'वित्तयं' इति **अ-क**; 'वित्तया' इति **ब.**

**अन्यथाशास्त्रकारी** स्मृत्याचारव्यपेतमार्गवर्ती । **शङ्खोऽपि**—अकामे पितरि रिक्थविभागो वृद्धे[1] विपरीतचेतसि दीर्घरोगिणि च—इति । **अकामे** विभागेच्छारहिते **वृद्धे** कुटुम्बव्यवहाराक्षमे । अशक्तत्वादिदोषयुक्ते पितरि पुत्राणां विभागेच्छाभावे ज्येष्ठस्य स्वातन्त्र्यमनुजानां तु तदधीनतयावस्थानम् । तथा च **शङ्खलिखितौ**—पितर्यशक्ते कुटुम्बस्य व्यवहारं ज्येष्ठः कुर्यादनन्तरो वा कार्यज्ञस्तदनुमतेन—इति । **अनन्तरः** अनुजः । **तदनुमतेन** ज्येष्ठानुमतेन । **हारीतोऽपि**—कामं दीने प्रोषित आर्तिं गते वा ज्येष्ठोऽर्थांश्चिन्तयेत्—इति । निर्दोषे पितरि जीवति तस्येच्छया पुत्राणां पैतृकधनविभागो मातरि निवृत्तरजस्कायां तु तदिच्छाभावेऽपि भवति पुत्राणामिच्छया तद्धनविभागः । तथा च **गौतमः** ( २८.१-२ )—ऊर्ध्वं पितुः पुत्रा रिक्थं विभजेरन्निवृत्ते रजसि मातुर्जीवति पितरि चेच्छति—इति । **बृहस्पतिरपि**

पित्रोरभावे भ्रातॄणां विभागः संप्रदर्शितः ।
मातुर्निवृत्ते रजसि जीवतोरपि शस्यते ॥

पितुश्चासति रतिसामर्थ्ये धनस्पृहायां वा गतायां भवति पुत्रेच्छया तद्धनविभागः । तथा च **नारदः** ( दाय. २-३ )

अत ऊर्ध्वं पितुः पुत्रा विभजेयुर्धनं समम् ।
मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ॥
निवृत्ते चापि रमणे[2] पितर्युपरतस्पृहे ।

अत्र **पुत्रा विभजेयु**रित्यभिधानात्पितुरिच्छाभावेऽपि विभाग उक्तः । **प्रत्तासु** कृतविवाहासु । **रमणे** रतिसामर्थ्ये । **उपरतस्पृहे** धनस्पृहानिवृत्तियुक्ते । **प्रत्तासु भगिनीषु** चेत्येतत्काकाक्षिवदुभयत्र सम्बध्यते । एतेनेदमुक्तं भवति । मातुर्निवृत्तरजस्कतया पितुर्निवृत्तरतिसामर्थ्यतया तयोरपत्योत्पादनयोग्यताभावनिश्चये पितुर्धनस्पृहाभावे भगिनीषु च कृतविवाहासु पुत्राः स्वेच्छया विभागं कुर्युरिति । केचित्तु मातुर्निवृत्ते रजसीत्यादिकमुपरतस्पृहे इत्यन्तमेकं वाक्यमित्यङ्गीकृत्य रजोनिवृत्त्यादीनां

१ 'वृद्धे' इति नास्ति क-आदर्शे. २ 'मरणे' इति अ.

समुचितानां विभागं प्रति निमित्तत्वमाहुः ॥ पित्रोर्जीवतोर्भ्रातॄणां सहवासो मुख्य इत्याह **व्यासः**

भ्रातॄणां जीवतोः पित्रोः सहवासो विधीयते ।

पित्रोरूर्ध्वमपि द्रव्योपचयार्थं सहवासं कुर्युरित्याहतुः **शङ्खलिखितौ**-कामं सह वसेयुरेकतः संहता वृद्धिमापद्येरन्-इति । **नारदोऽपि**[1] (दाय० ५)

बिभृयाद्वैकतः सर्वाञ्ज्येष्ठो भ्राता यथा पिता ।
भ्राता शक्तः कनिष्ठो वा शक्त्यपेक्षा कुले स्थितिः ॥

पृथग्दैवपित्र्यकर्मकरणाद्धर्मवृद्धिमपेक्षमाणा विभजेयुरित्याहतुर्**मनुप्रजापती** (मनु ९.१११)

एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया ।
पृथग्विवर्धते धर्मस्तस्माद्धर्म्या पृथक्क्रिया ॥ इति ॥

विभागानन्तरं पृथग्दैवपित्र्यकर्मानुष्ठानमाह **बृहस्पतिः**

एकपाकेन वसतां पितृदेवद्विजार्चनम् ।
एकं भवेद्विभक्तानां तदेव स्याद् गृहे गृहे ॥ इति ।

पितुरिच्छया यो विभागस्तत्प्रकारमाहा**पस्तम्बः** (२. ६. १४.१)-एकधनेन ज्येष्ठं तोषयित्वा जीवन् पुत्रेभ्यो दायं विभजेत्समम्-इति । मध्यकद्रव्यादुद्धृतेन गवाश्वादिनैकेन वस्तुना ज्येष्ठं पुत्रं परितोष्यावशिष्टं धनं समतयैव विभजेदित्यर्थः । **बौधायनोपि** (बौ. धर्मसूत्र २. २. २-५)-मनुः पुत्रेभ्यो दायं व्यभजदिति समोंऽशः सर्वेषामविशेषाद्धनमेकं चानूद्धरेज्ज्येष्ठस्तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्तीति श्रुतिः । **अविशेषात्** मनुः पुत्रेभ्यो दायं व्यभजदिति विशेषाश्रवणादित्यर्थः । पित्रा पुत्रेभ्यो दायं विभजता स्वयमंशद्वयं ग्राह्यमित्याह **नारदः** (दाय० १२)

द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता ।

**बृहस्पतिरपि**

जीवद्विभागे पितु ता गृहीतांशद्वयं स्वयम् । इति ।

---

१ 'नारदोऽपि' इति नास्ति क-आदर्शे.

पितुरंशद्वयग्रहणमेकपुत्रविषयमित्याहतुः **शङ्खलिखितौ**—स यद्येकपुत्रः स्याद् द्वौ भागावात्मनः कुर्यात्—इति । एकशब्दोऽत्र श्रेष्ठवाचीति **पारिजातकारः** । पुत्रो यदि गुणवत्तया धनार्जनसमर्थस्तदानेन सह विभागे पितांशद्वयं गृह्णीयादिति तन्मतेऽस्य वाक्यस्यार्थः । **कात्यायनस्तु** (८३८) पित्रा सर्वेभ्योऽपि पुत्रेभ्यः सम एवांशो देयो न तु ज्येष्ठायैकमुत्कृष्टं वस्तु स्वेनापि सम एवांशो ग्राह्यो न त्वंशद्वयमित्यभिप्रेत्याह

सकलं द्रव्यजातं यद्भागैर्गृह्णन्ति तत्समैः ।
पितरौ भ्रातरश्चैव विभागो धर्म्य उच्यते ॥ इति ।

तदेतत्पक्षद्वयमपि दर्शयति **याज्ञवल्क्यः** (२. ११४)

विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान् ।
ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ॥

**श्रेष्ठभागेन** उत्तमवस्तुसहितेन भागेन । अनयोः पक्षयोरन्यतरपक्षाश्रयणे पितुरिच्छैव नियामिकेति पूर्वार्धस्यार्थः । ज्येष्ठाय पित्रोत्कृष्टवस्तूद्धारेऽनुजैरनुशयो न कर्तव्यः समांशदाने ज्येष्ठेनाधिकं मह्यं न दत्तमित्यनुशयो न कर्तव्य इत्याह **नारदः** ( दाय० १५ )

पित्रैव तु विभक्ता ये समन्यूनाधिकैर्धनैः ।
तेषां स एव धर्म्यः स्यात्सर्वस्य हि पिता प्रभुः ॥

यदि पिता शास्त्रोक्तमार्गपरित्यागेन स्वेच्छया विषमं विभागं करोति तदा स निवर्तनीय एवेत्यभिप्रेत्याह **याज्ञवल्क्यः** (२. ११६)

न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः ।

यदि **धर्म्यो** धर्मशास्त्रोक्तस्तदा **पितृकृतः** पित्रा कृत एव न निवर्तनीयः । इतरथा तु निवर्तनीय इत्यर्थः । यदा स्वयं सममेवांशं गृह्णाति ज्येष्ठादिपुत्रेभ्योऽपि समांशान्ददाति तदा पत्नीनां स्वस्वपुत्रसमांशभागित्वमाह **स** एव (या. २.११५)

यदि कुर्यात्समानंशान्पत्न्यः कार्याः समांशिकाः ।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥

पत्न्य इति बहुवचनात्प्रतिपत्नि स्वांशेन समानमंशं गृह्णीयान्न तु ताभ्यः पृथक्कृत्यांशो देयः । जायापत्योर्न विभागो विद्यते–इति (आपस्तम्बधर्मसूत्र २.६.१४.१६) हारीतवचनविरोधापत्तेः । यदि पुत्रो धनार्जनसमर्थतया स्वांशं न जिघृक्षति तदा किमपि तस्मै दत्त्वा[1] तत्पुत्राणां दायग्रहणेच्छा मा भूदित्येवमर्थं विभागः कर्तव्य इत्याह **स** एव (या. २.११६)

शक्तस्यानीहमानस्य किञ्चिद् दत्त्वा पृथक्क्रिया ।

जीवति पितरि पुत्रेच्छया यो विभागः स प्रकारान्तराश्रवणात्

सकलं द्रव्यजातं यद्भागैर्गृह्णन्ति तत्समम् ।

इति **कात्यायन**वचनात् (८३८) मातुर्निवृत्ते रजसीति वचने सममित्यनुषङ्गाच्च समतया कर्तव्यः । मृतपितृकाणां यो विभागः स समतया कार्यः । तथा च **याज्ञवल्क्यः** (२.११७)

विभजेयुः सुताः पित्रोरूर्ध्वं रिक्थमृणं समम् ।

**हारीतो**ऽपि–समानो मृते पितरि रिक्थविभागः–इति । **पैठीनसि**रपि–पैतृके विभज्यमाने दायाद्ये भ्रातृणां समो विभागः–इति । यानि तु

ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् ।
ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः ॥
उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना ।
एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं ततोऽनुजः ॥
अंशमंशं यवीयांस इति धर्मो व्यवस्थितः ।

इत्येवमादीनि विषमविभागप्रतिपादकानि मन्वादिवचनानि (मनु ९. ११२, ११६-११७) कलियुगव्यतिरिक्तविषयाणि । अत एव कलौ विषमविभागनिषेध **आदिपुराणे**

ऊढायाः पुनरुद्वाहो(हं ?)ज्येष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ॥

---

१ 'किमपि तस्मै दत्त्वा' इति नास्ति अ–क–आदर्शयोः.

**ज्येष्ठांशं** जन्मविद्यादिकृतज्यैष्ठ्यनिबन्धनमंशम् । **स्मृतिसंग्रहे**ऽपि

यथा नियोगधर्मो वा नानूबन्ध्यावधोऽपि वा ।
तथोद्धारविभागोऽपि नैव संप्रति वर्तते ॥ इति ।

**संप्रति** कलियुगे। पितुरूर्ध्वं विभागे मातुः स्वपुत्रसमांशभागित्वमाह **याज्ञवल्क्यः** ( २. १२३ )

पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत् ।

**विष्णुरपि**—मातरः पुत्रभागानुसारिभागहारिण्यः ( विष्णुधर्मसूत्र १८.३४ ) । मातुः समांशभागित्वं स्त्रीधनरहिताया वेदितव्यम् । अत एव **स्मृत्यन्तरे**

जननयस्वधना पुत्रैर्विभागेंऽशं समं हरेत् ।

**अस्वधना** प्रातिस्विकस्त्रीधनशून्या । स्त्रीधनसहितायास्तु जीवद्विभागेऽजीवद्विभागे वार्धांशभागित्वमिति **विज्ञानेश्वराचार्याः** । **जननी**ग्रहणमपुत्राणामपि मातृसपत्नीनां पितामहीनां चोपलक्षणम् । अत एव **व्यासः**

असुताः स्वपितुः पत्न्यः समानांशाः प्रकीर्तिताः ।
पितामह्यश्च ताः सर्वा मातृतुल्याः प्रकीर्तिताः ॥

यत्तु कैश्चिन्मात्रादीनां जीवनमात्रोपयुक्तधनभागित्वमुक्तं कथं तन्मते समशब्दो नानुपपन्न इति विद्वद्भिर्विचारणीयम् । यत्पुनः **स्मृतिचन्द्रिकायां** समशब्दस्य सार्थकत्वमुक्तं विभाज्यधनस्य भूयस्त्वे जीवनमात्रोपयोगिधनग्रहणं स्वल्पत्वे तु समांशहरणमेव न तु जीवनोपयोगवशादधिकहरणमित्येवमर्थः[1] समशब्द इति तदसुन्दरम् । कदाचिज्जीवनमात्रोपयोगिधनग्रहणविधानं कदाचित्समांशग्रहणविधानमिति वाक्यभेदापादकविधिवैरूप्यप्रसङ्गात् । न च विभाज्यधनस्वल्पत्वविषये एवास्य विधेः प्रवृत्तिरिति वाच्यं स्वेच्छया विधिसङ्कोचस्याश्रयितुमयुक्तत्वात् । भिन्नमातृकाणां सवर्णानां समसंख्यानां विभागप्रकारमाह **बृहस्पतिः**

यद्येकजाता बहवः समाना जातिसंख्यया ।
सापत्न्यास्तैर्विभक्तव्यं मातृभागेन धर्मतः ॥

---

१ 'इत्येवमर्थसमशब्दः' इति क.

**व्यासो**ऽपि

समानजातिसंख्या ये जातास्त्वेकेन सूनवः ।
विभिन्नमातृकास्तेषां मातृभागः प्रशस्यते ॥

भिन्नसंख्याकानां सवर्णानां विभागप्रकारमाह **बृहस्पतिः**

सवर्णा भिन्नसंख्या ये पुंभागस्तेषु[1] शस्यते । इति ।

येषां पिता अविभक्त एव मृतस्तैर्बहुभिरपि सम्भूय पितृव्यतत्पुत्रादिभिः सह विभागे स्वपितुर्य एकोंशः स एव ग्राह्यः । तथा च **याज्ञवल्क्यः** (२. १२०)

अनेकपितृकाणां तु पितृतो भागकल्पना ।

**कात्यायनो**ऽपि (८५५-८५६)

अविभक्तेऽनुजे प्रेते तत्सुतं रिक्थभागिनम् ।
कुर्वीत जीवनं येन लब्धं नैव पितामहात् ॥
लभेतांशं स पित्र्यं तु पितृव्यात्तस्य वा सुतात् ।
स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत् ॥
लभते तत्सुतो वापि निवृत्तिः परतो भवेत् ।

**अनुज**ग्रहणमग्रजस्याप्युपलक्षणम् । अयमर्थः । पौत्रः पितरि मृते पितृव्यादिभ्यः पितामहधने स्वपितुर्योंशस्तं गृह्णीयात् । एवं पौत्रपुत्रोऽपि स्वपितरि मृते प्रपितामहस्यांशं गृह्णीयात् । प्रपौत्रपुत्रस्य तु वृद्धप्रपितामहधनेंऽशभागित्वं नास्तीति । **देवलो**ऽपि

अविभक्तविभक्तानां कुल्यानां वसतां सह ।
भूयो दायविभागः स्यादा चतुर्थादिति स्थितिः ॥

**अविभक्ते**त्यत्र षष्ठीबहुवचनस्य लुक् छान्दसः । अविभक्तानामेव वा विभक्तानामपि सह वसतां संसृष्टानां वा पुनर्दायविभागः प्रपौत्रपर्यन्तमेव । चतुर्थपुरुषादारभ्य तु स निवर्तेत इत्यर्थः । यत्तु

तृतीयः पञ्चमश्चैव सप्तमो वापि यो भवेत् ।
जन्मनामपरिज्ञाने लभेतांशं क्रमागतम् ॥ इति ।

---

१ 'ये भागस्तेषु' इति अ.

**बृहस्पति**वचनं तद्दूरदुर्गमदेशस्थितप्रपौत्रपुत्रादिविषयं तथा प्रकृत्य पाठात् । आ चतुर्थादित्येतत्तु वचनमेकदेशनिवासिविषयमिति नानयोर्विरोधः । पौत्रस्य पैतामहधने पित्रा सह कथं विभाग इत्यपेक्षायामाह **बृहस्पतिः**

द्रव्ये पितामहोपात्ते स्थावरे जङ्गमे तथा ।
सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि ॥

पित्रा सम एवांशो ग्राह्यो न तु स्वार्जितवदत्र विषमविभागपक्षाश्रयणेनांशद्वयमित्यर्थः । **याज्ञवल्क्योपि** (२.१२१)

भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव च ।
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि ॥

पितर्यनिच्छत्यपि पैतामहधनविभागो भवतीत्याह **व्यासः**

क्रमागते गृहक्षेत्रे पिता पुत्राः समांशिनः ।
पैतृके न विभागार्हाः सुताः पितुरनिच्छतः ॥

कचित्पितुरिच्छयैव पैतामहधनविभाग इत्याहतुर्**मनुविष्णू** (मनु ९.२०९, विष्णुधर्मसूत्र १८.४३)

पैतृकं तु पिता द्रव्यमनवाप्यं यदाप्नुयात् ।
न तत्पुत्रैर्भजेत्सार्धमकामः स्वयमर्जितम् ॥

यत्पैतामहं केनाप्यपहृतं पितामहेन वा आप्तुमशक्यं पितोद्धरति तत्स्वार्जितमिव विभागेच्छारहितः पुत्रैः सह न विभजेदित्यर्थः । **बृहस्पतिर**पि

पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम् ।
विद्याशौर्यादिनावाप्तं तत्र स्वाम्यं पितुः स्मृतम् ॥
प्रदानं स्वेच्छया कुर्याद्भागं चैव ततो धनात् ।
तदभावे तु तनयाः समांशाः परिकीर्तिताः ॥

असवर्णानां विभागप्रकारमाह **याज्ञवल्क्यः** (२.१२५)

चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः ।
क्षत्रियास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः ॥

ब्राह्मणेन ब्राह्मण्यादिषु चतसृषु स्त्रीषु उत्पादिता ब्राह्मणमूर्धावसिक्ताम्बष्ठपारशवा यथाक्रमं चतुस्त्रिद्व्येकभागाः क्षत्रियेण क्षत्रियादिषु स्त्रीषूत्पादिताः क्षत्रियमाहिष्योग्रास्त्रिद्व्येकभागाः । वैश्येन वैश्याशूद्र्योरुत्पादितौ वैश्यकरणौ द्व्येकभागावित्यर्थः । प्रतिग्रहप्राप्ता भूमिर्मूर्धावसिक्तादिभ्यो न देयेत्याह **बृहस्पतिः**

न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै ।
यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेत् ॥

अत्र प्रतिग्रहेतिविशेषणात् क्रयादिलब्धा मूर्धावसिक्तादीनामपि दायो भवत्येव । ब्राह्मणादिभिस्त्रिभिर्वर्णैः शूद्रायामुत्पादितः क्रयादिलब्धामपि भुवं लब्धुं नार्हः । तथा च **देवलः**

शूद्र्यां द्विजातिभिर्जातो न भूमेर्भागमर्हति ।
सजातावाप्नुयात्सर्वमिति धर्मव्यवस्थितिः ॥ इति ।

यच्च

ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक् ।
यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत् ॥

इति **मनुवचनं** ( ९. १५५ ) तत्पितृप्रीतिदत्तधनसद्भावविषयमिति दाक्षिणात्याः । पौरस्त्यास्तु निर्गुणापरिणीतशूद्रापुत्रविषयमित्याहुः । गुणवदपरिणीतशूद्रापुत्रविषये[1] **बृहस्पतिः**

अनपत्यस्य शुश्रूषुर्गुणवान् शूद्रयोनिजः ।
लभेताजीवनं शेषं सपिण्डाः समवाप्नुयुः ॥

अपरिगृहीतास्वित्यनुवृत्तौ[2] **गौतमोऽपि** ( गौ. धर्मसूत्र २८. ३७ )—शूद्रापुत्रोऽप्यनपत्यस्य शुश्रूषुश्चेल्लभते वृत्तिमूलमन्तेवासिविधिना । **वृत्तिमूलं** जीवनमूलम् । प्रतिलोमजानामपरिणीतशूद्रापुत्रवज्जीवनोपायमात्र-

---

१ 'निर्गुणापरिणीतशूद्रापुत्रविषये बृहस्पतिः' इति अ. २ 'आपरिगृहीतासु' इति अ.

भागित्वमाह स (गौ. धर्मसूत्र २८.४३) एव—शूद्रापुत्रवत्प्रतिलोमासु—इति। **प्रतिलोमासु** उत्कृष्टवर्णस्त्रीषु हीनवर्णैरुत्पादिता अपरिणीतशूद्रापुत्रवद्वृत्तिमूलमात्रभाज इत्यर्थः॥ असवर्णेषु पुत्रेषु गुणवत्त्वनिर्गुणत्वादिकृतो यो विशेषः स

कन्यानामसवर्णानां विवाहश्च द्विजन्मभिः।

इत्या**दिपुराणे** कलिवर्ज्यप्रकरणे असवर्णापरिणयस्य निषेधा**त्सांप्रतं मूर्धावसिक्तादीनां प्रचाराभावेन नेह प्रपञ्चितः। समयनिर्णयोद्योते** कलिवर्ज्यप्रकरणेऽस्माभिरुदाहृतेन

दत्तौरसेतरेषां च पुत्रत्वेन परिग्रहः।

इति वचनेन कलौ युगे दत्तौरसपुत्रिकापुत्रव्यतिरिक्तानां क्षेत्रजादीनां गौणपुत्राणां निषेधात्सांप्रतं तेषां प्रचाराभावेन तद्विभागविषयो विशेषो नात्र निरूप्यते। तत्र वचने औरसग्रहणं

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः। (या. २.१२८)

इति **याज्ञवल्क्या**दिवाक्येष्वौरसतुल्यतयोक्तस्य दत्तापेक्षया मुख्यस्य सांप्रतिकलोकव्यवहारपरिगृहीतस्य पुत्रिकापुत्रस्याप्युपलक्षणम्। औरसादीनां मुख्यगौणपुत्राणां स्वरूप**माचारविवेकोद्योते** श्राद्धप्रकरणे निरूपितम्[1]।

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्।
अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति॥

(वसिष्ठधर्मसूत्र १७.१७)

इति **वसिष्ठा**द्युक्तप्रकारेण पुत्रिकाकरणानन्तरमौरस उत्पन्ने कथं भागकल्पनेत्यपेक्षायामाह **मनुः** (९.१३४)

पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः॥

**बृहस्पति**रपि

---

१ 'निरूप्यते' इति ब.

एक एवौरसः पित्र्ये[1] धने स्वामी प्रकीर्तितः ।
तत्तुल्या पुत्रिका प्रोक्ता भर्तव्यास्त्वपरे सुताः ॥

यानि तु पुत्रिकापुत्रस्य न्यूनभागप्रतिपादकानि

समग्रधनभोक्ता स्यादौरसोऽपि जघन्यजः ।
त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थं पुत्रिकासुतः ॥

इत्यादीनि **ब्रह्मपुराणा**दीनि वचनानि तान्यौरसस्यात्यन्तसगुणत्वे पुत्रिकापुत्रस्यासवर्णत्वेऽत्यन्तनिर्गुणत्वे वा[2] द्रष्टव्यानि ॥ दत्तकस्यौरसाभावे रिक्थहरत्वमाह **मनुः** (९. १४१-४२)

उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्रिमः ।
स हरेतैव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः[3] ॥
गोत्ररिक्थे जनयितुर्न भजेद् दत्रिमः क्वचित् ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥

**अपि**शब्दात् स्वगोत्रतः । **स्वधा** तृप्तिहेतुः । दत्तपुत्रप्रतिग्रहानन्तरमौरस उत्पन्ने दत्तस्य चतुर्थांशभागित्वमाह **वसिष्ठः** (१५. ९)—तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्याद् दत्तकः—इति । **कात्यायनो**ऽपि (८५७)

उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः ।
सवर्णा असवर्णास्तु ग्रासाच्छादनभाजनाः ॥

**सवर्णा** दत्तकादयः असवर्णाः कानीनादयः । **कल्पतरौ** तु तृतीयांशहराः सुता इति पठितम् । एतच्च दत्तकस्यौरसापेक्षया सगुणत्वे द्रष्टव्यम् । यत्तु

एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ।
शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥ (मनु ९. १६३)

इति **मनु**वचनं तदौरसप्रशंसापरम् । दत्तकादीनामौरसप्रतिकूलत्वे

---

१ 'पिण्डे' इति अ. २ 'वा' इति नास्ति अ-आदर्शे. ३ 'अन्यगोतमः' इति अ.

निर्गुणत्वे च चतुर्थभागनिषेधपरमिति तु **विज्ञानेश्वरयोगिनो** मतम् । **वसुनः** धनस्य । यत्तु

भ्रातृणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ ( मनु ९. १८२ )

इति **मनु**वचनं [1]तत्पितृव्यस्य पुत्राद्यभावे स्वपितृवदवश्यं श्राद्धं कर्तव्यमित्येतदर्थं न तु तेषां पुत्रत्वप्रतिपादनार्थम् । तथा च सति—स्वर्यातस्य ह्यपुत्रस्य धनभागुत्तरोत्तरः । पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुता गोत्रजा बन्धुरिति याज्ञवल्क्यवचने ( २. १३५-१३६ ) भ्रातुः पुत्रे सत्यपुत्रत्वाभिधानं न विरुध्यते । शूद्रधनविभागविषये विशेषमाह **याज्ञवल्क्यः** ( २. १३३-३४ )

जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत् ।
मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम् ॥

**शूद्रेणा**परिणीतायामुत्पादितः **कामतः** पितुरिच्छयांशभाग्भवति । **मृते पितरि** यदि परिणीतायाः पुत्राः सन्ति तदा ते **भ्रातरो** दासीपुत्रं स्वभागापेक्षयार्धभागग्राहकं कुर्युः । यदि परिणीतायाः पुत्रा दुहितरस्तत्पुत्रा वा न स्युस्तदा समग्रं जनयितुर्धनं दासीपुत्रो गृह्णीयात् । यदि दुहितरो दौहित्रा वा स्युस्तदार्धमेवेत्यर्थः । अत्र शूद्रेणेति विशेषाद् द्विजातिभिर्दास्यामुत्पादितः पितुरिच्छयाप्यंशं न लभते नापि तस्मिन्मृतेऽर्धं नापि पुत्राद्यभावे कृत्स्नमिति सूचितम् । किं तु शुश्रूषत्वादिगुणयोगित्वे जीवनोपायमात्रं स लभत इति प्रागेवास्माभिर्दर्शितम् ॥ विभजद्भिः पूर्वसंस्कृतैर्भ्रातृभिरसंस्कृतानां भ्रातॄणां भगिनीनां च विवाहान्ताः संस्कारा मध्यकधनेन कर्तव्याः । तथा च **बृहस्पतिः**

असंस्कृता भ्रातरस्तु ये स्युस्तत्र यवीयसः ।
संस्कार्याः पूर्वजैस्ते वै पैतृकान्मध्यकाद्धनात् ॥

---

१ अस्य वाक्यस्य स्थाने 'तद्भ्रातुः पुत्रेषु सत्सु श्राद्धादिकरणे नान्यः प्रतिनिधिः कार्य इत्येतदर्थम्' इति ब—आदर्शे पाठः.

**यवीयस** इति मुम्दीर्घयोरभावश्छान्दसः। भ्रातृग्रहणमत्र भगिनीनामप्युपलक्षणम्। अत एव **व्यासः**

असंस्कृतास्तु ये तत्र पैतृकादेव तद्धनात्।
संस्कार्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि ॥

भगिनीविषये विशेषमाह **याज्ञवल्क्यः** (२. १२४)

असंस्कृतास्तु संस्कार्या भ्रातरः पूर्वसंस्कृतैः।
भगिन्यश्च निजादंशाद् दत्त्वांशं तु तुरीयकम् ॥

अत्र **निजादंशादिति** नापादानपञ्चमी किं तर्हि ल्यब्लोपे निजमंशमपेक्ष्य परिकल्पितं चतुर्थमंशमिति। अयमर्थः। यज्जातीया कन्या तज्जातीयस्य पुत्रस्य यो भागस्तच्चतुर्थांशसमानमंशं मध्यकद्रव्यादुद्धृत्य प्रतिभगिनि दत्त्वा ताः संस्कर्तव्या इति। अनेन दुहितॄणामपि पितुरूर्ध्वं विभागेंऽशभाक्त्वमित्यवगम्यते। तथा च दर्शयति **मनुः** (९. ११८)

स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक्।
स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः ॥

इति। अयमर्थः। ब्राह्मणादयो भ्रातरो ब्राह्मण्यादिभगिनीभ्यश्चतुस्त्रिद्व्येकभागा इत्यादिवाक्यैः स्वजातिविहितेभ्योंऽशेभ्यः स्वात्स्वादंशाच्चतुर्थभागं दद्युरिति। तद्यथा। यदि कस्यचिद् ब्राह्मण्येव पत्नी पुत्रश्चैकः कन्या चैका तत्र पित्र्यं सर्वं द्विधा विभज्य तयोरेकं भागं पुनश्चतुर्धा विभज्य चतुर्थमंशं कन्यायै दत्त्वावशिष्टं सर्वं पुत्रो गृह्णीयात्। यदि द्वौ पुत्रौ एका कन्या पितृधनं त्रेधा विभज्य तेष्वेकं भागं चतुर्धा विभज्य चतुर्थमंशं कन्यायै दत्त्वावशिष्टं पुत्राभ्यां विभज्य ग्राह्यम्। यद्येकः पुत्रो द्वे कन्ये तदा सर्वं द्वेधा विभज्य तयोरेकं चतुर्धा विभज्य तस्य द्वावंशौ द्वाभ्यां दत्त्वावशिष्टं पुत्रेण ग्राह्यम्। यदि ब्राह्मणीपुत्र एकः क्षत्रियापुत्री एका तदा पित्र्यं द्रव्यं सप्तधा विभज्य क्षत्रियापुत्रभागांस्त्रीन् चतुर्धा विभज्य चतुर्थमंशं क्षत्रियाकन्यायै दत्त्वाऽवशिष्टं पुत्रो गृह्णीयात्। एवं सर्वत्र योज्यम्। यत्तु कैश्चिदुक्तं संस्कारमात्रोपयोगि द्रव्यदानमत्र विवक्षितं न तु चतु-

र्थांशदानं बहुभ्रातृकाया बहुधनप्रसक्तेर्बहुभगिनीकस्य च निर्धनत्वप्रसक्तेरिति तदप्युक्तप्रकारेण व्याख्यानात्परिहृतम्। न ह्यत्र स्वकीयभागादुद्धृत्य चतुर्थांशो देय इत्युच्यते। तस्मात्पितुरूर्ध्वं विभागे कन्याप्युक्तप्रकारेणांशभागिनी जीवति तु पितरि यदेवास्यै पिता ददाति तदेव लभते विशेषवचनाभावादिति **विज्ञानेश्वरासहायमेधातिथीनां** पक्षः। पित्र्यधनाभावे ज्येष्ठैः स्वार्जितद्रव्येणावश्यकाः संस्काराः कर्तव्या इत्याह **नारदः** (दाय० ३३-३४)

येषां तु न कृताः पूर्वं संस्कारविधयः क्रमात्।
कर्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात्॥
अविद्यमाने पित्र्यर्थे स्वांशादुद्धृत्य वा पुनः।
अवश्यकार्याः संस्कारा भ्रातृणां पूर्वसंस्कृतैः॥

भ्रातृग्रहणं भगिनीनामप्युपलक्षणम्। मातरि सपत्न्यां वाऽविस्पष्टगर्भायां पित्रा ये विभक्तास्तैर्विभागानन्तरमुत्पन्नाय स्वस्वभागादपकृष्य स्वभागसमो भागो दातव्यः। तथा च **विष्णुः** (विष्णुधर्मसूत्र१७.३)—पितृविभक्ता विभागानन्तरोत्पन्नस्य विभागं दद्युः—इति। पिता च विभक्तैर्दत्तं तद्भागं गृहीत्वानेन सह वसेत्तस्याप्राप्तव्यवहारत्वेन पालनीयत्वात्। भागदानात्प्रागेव मृते पितरि विभक्तैर्भागो न देयः किं तु पितृभागमेव विभक्तजो गृह्णीयात्। तथा च **गौतमः** (२८. २७)—विभक्तजः पित्र्यमेव—इति। यस्तु विभागानन्तरं गर्भस्थो भूत्वोत्पन्नः स पित्र्यमेवांशं गृह्णीयात्।[1] तथा च **बृहस्पतिः**

पित्रा सह विभक्ता ये सापत्ना वा सहोदराः।
जघन्यजास्तु ये तेषां पितृभागहरास्तु ते॥

**अत्र हेतुरुक्तस्तेनैव**

अनीशः पूर्वजः पित्र्ये भ्रातुर्भागे विभक्तजः।

---

१ 'तथा च गौतमः…वांशं गृह्णीयात्' इति वाक्यद्वयं नास्ति क—आदर्शे.

अर्थान्तरमपि किञ्चिदाह स एव

पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम् ।
विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः ॥
यथा धने तथर्णे च दानाधानक्रयेषु च ।
परस्परमनीशास्ते मुक्त्वाशौचोदकक्रियाम् ॥

पित्रा सह केषांचित्संसृष्टत्वे तेभ्यो विभज्य पित्र्यंशं मृतेऽपि न विभागानन्तरमुत्पन्नो गृह्णीयात् । तथा च **मनुः** (९.२१६)

ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम् ।
संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह ॥

पितुरूर्ध्वं मातर्यस्पष्टगर्भायां भ्रातृषु विभक्तेषु पश्चादुत्पन्नो दृश्यादृश्यरूपाद्विभक्तधनादुद्धृतं विभक्तभ्रातृभागसममंशं तेभ्यो लभत इत्याह **याज्ञवल्क्यः** (२. १२२)

विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ।

**सवर्णा**ग्रहणेनासवर्णायां विभागादूर्ध्वमुत्पन्नश्चतुस्त्रिद्व्येकभागा इति पूर्वोक्तं स्वांशमेव लभते न तु विभक्तभ्रातृभागसमं भागमिति दर्शितम् । अनेनैव न्यायेन जीवद्विभागेऽपि विभक्तजस्यासवर्णापुत्रस्य न सकलपित्र्यधनभागित्वमिति ज्ञातव्यम् । अथवा परिदृश्यमानाद्गृहोपस्करवाह्नदोह्याभरणादिरूपाद्धनादुपचयापचयाभ्यां निर्णीते पत्रादिकादुद्धृतं भागं लभते न तु गुप्तादपीति । अस्मिन्नेव विषये पक्षान्तरमाह **स एव** (या. २. १२२)

दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ।

अयं पक्षो विभक्तभ्रात्रपेक्षया योऽल्पगुणस्तद्विषय इति व्यवस्था कृता **हलायुधेन** । एवं भ्रातृविभागकाले प्रमीतभ्रात्रन्तरभार्यायामप्रजस्य स्पष्टगर्भायां पश्चादुत्पन्नो भ्रातुः पुत्रः स्वपित्र्यंशं तेभ्यो लभते । स्पष्टगर्भायां भ्रातृभार्यायां न प्रसवपर्यन्तं विभागः कार्यः । तथा च **वसिष्ठः** (१७. ४०-४१)—अथ भ्रातॄणां दायविभागो याश्चानपत्याः स्त्रियस्तासामा

पुत्रलाभात्–इति । आ पुत्रलाभात्प्रतीक्षा कार्येति शेषः । विभागानन्तर-मुत्पन्नेन विभक्तेभ्यो भ्रातृभ्यः पित्रा यत्पूर्वं प्रीत्याभरणादिकं दत्तं न तद्विभागादूर्ध्वमुत्पन्नेन प्रत्याहर्तव्यम् । तथा च **याज्ञवल्क्यः** ( २. १२३ )

पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत् ।

एवं विभागात्पूर्वमपि प्रीत्यादिदत्ते वेदितव्यम् ॥ यद्धनं भ्रातृतत्पुत्रा-दिसाधारणमिदं द्रव्यं ममाप्यत्रांशोऽस्तीति तद्धने स्वांशं तद्विभागे कृतेऽपि विभक्तेभ्य उद्धृत्य स लभते । तथा च **बृहस्पतिः**

कृतेऽकृते विभागे वा रिक्थी यत्र प्रवर्तते ।
सामान्यं चेद्भावयति तत्र भागहरस्तु सः ।

विभागसमये देशान्तरस्थितो भ्रातृतत्पुत्रादिः पश्चाच्चिरेणागतोऽपि विभक्तेभ्यः स्वांशं लभत इत्याह **स** एव

ऋणं लेख्यं गृहं क्षेत्रं यस्य पैतामहं भवेत् ।
चिरकालप्रोषितोऽपि भागभागागतस्तु सः ॥
गोत्रसाधारणं त्यक्त्वा योऽन्यं देशं समाश्रितः ।
तद्वंशस्यागतस्यांशः प्रदातव्यो न संशयः ॥
तृतीयः पञ्चमः षष्ठः सप्तमश्चापि यो भवेत् ।
जन्मनामपरिज्ञाने लभेतांशं क्रमागतम् ॥
यं परम्परया मौलाः सामन्ताः स्वामिनं विदुः ।
तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही ॥ इति ।

विभजनयोग्यं द्रव्यमाह **कात्यायनः** ( ८४० )

पैतामहं च पित्र्यं च यच्चान्यत्स्वयमर्जितम् ।
दायादानां विभागेषु सर्वमेतद्विभज्यते ॥

**स्वयमर्जितं** पित्राद्यविभक्तद्रव्योपयोगेन स्वयमर्जितम् । अन्यथा स्वयमर्जितं तु न विभाज्यं पितृद्रव्याविरोधेनेत्यादिवक्ष्यमाणवचनात् ।

---

१ 'चेद्भावपति' इति क–अ.

एतस्य त्रिविधस्यापि धनस्य विभागो यदि पितामहादिकृतमृणं स्यात्तदा तद्दत्त्वा कर्तव्यः। तथा चाह स एव ( कात्या. ८५० )

ऋणं प्रीतिप्रदत्तं तु दत्त्वा शेषं विभाजयेत्।

तथा

भ्रात्रा पितृव्यमातृभ्यां कुटुम्बार्थमृणं कृतम्।

विभागकाले[1]देयं तद्रिक्थिभिः सर्वमेव तु ॥ (कात्या.८४६)

**नारदो**ऽपि ( दाय० ३२ )

यच्छिष्टं पितृदायेभ्यो दत्त्वर्णं पैतृकं च यत्।

भ्रातृभिस्तद्विभक्तव्यमृणी स्यादन्यथा पिता ॥

एतच्च विभाज्यधनबाहुल्यविषयम्। तदल्पत्वे तु रिक्थवदृणमपि सर्वैर्विभज्य ग्राह्यं

विभजेरन्सुताः पित्रोरूर्ध्वं रिक्थमृणं समम्।

इति पूर्वोदाहृतवचनात् (या. २.११७)। विभागकाले यादृशमृणं विचार्य देयं तदाह स एव ( कात्या. ८४९ )

पित्र्यं पित्र्यर्णसम्बद्धमात्मीयं वात्मना कृतम्।

ऋणमेवं कृतं शोध्यं विभागे बन्धुभिः सह ॥ इति ॥

**पित्र्यर्णसंबद्धं** पित्रर्णापाकरणार्थं कृतम्। **आत्मीयं** स्वकुटुम्बपोषणाद्यावश्यककार्यार्थमपरेण कृतम्। **आत्मना कृतं** स्वकुटुम्बपोषणार्थमेवेति शेषः। अविभक्तेषु केनचित्सर्वानुमतिमन्तरेण यत्साधारणात्पैतृकाद्धनाद्धर्मार्थं प्रीत्या वा ऋणत्वेन वा दत्तं तत्सर्वैर्ज्ञातं दातुः सकाशाद्विभज्य ग्राह्यम्। न हि तस्य साधारणे पित्र्यधनेऽसाधारण्येन दानं युक्तमित्याह स एव ( कात्या. ८४८ )

धर्मार्थं प्रीतिदत्तं च यदृणं स्वेन योजितम्।

तद् दृश्यमानं विभजेन्न दानं पैतृकाद्धनात् ॥

सर्वैर्ज्ञायमानस्य गृहक्षेत्रादेर्विभज्य ग्रहणम्। अपरिज्ञायमानं तु यस्मि-

---

१ 'पितृकम्' इति अ-क.

न्पुरुषे[1] तद्द्रव्यसम्बन्धशङ्का भवति तं कोशाख्यं दिव्यं कारयित्वा शोधयितव्यम्। तथा च **स** एव ( कात्या. ८४१-४२ )

दृश्यमानं विभज्येत गृहक्षेत्रं चतुष्पदम्।
गूढद्रव्याभिशङ्कायां प्रत्ययस्तत्र कीर्तितः॥
गृहोपस्करवाह्याश्च दोह्याभरणकर्मिणः।
दृश्यमाना विभज्यन्ते कोशं गूढेऽब्रवीन्मनुः॥

**प्रत्ययो** दिव्यम्। **गृहोपस्कर** उलूखलादिः **कर्मिणो** दासादयः। अत्र कोशकथनं

शङ्काविश्वाससन्धाने विभागे रिक्थिनां सदा।
क्रियासमूहकर्तृत्वे कोशमेव प्रदापयेत्॥

इति दिव्यप्रकरणे स्वेनैवोक्तस्य (कात्या. ४१५) कोशनियमस्य स्मारणार्थम्[2]॥
अविभाज्यं दर्शयति **मनुः** ( ९. २०६ )

विद्याधनं तु यद्यस्य तत्तस्यैव धनं भवेत्।
मैत्रमौद्वाहिकं चैव माधुपर्किकमेव च॥

**मैत्रं** मित्राल्लब्धम्। **माधुपर्किकं** मधुपर्ककाले पूज्यतया लब्धम्।
**व्यासः**

विद्याप्राप्तं शौर्यधनं यच्च सौदायिकं भवेत्।
विभागकाले तत्तस्य नान्वेष्टव्यं स्वरिक्थिभिः॥

सौदायिकस्वरूपमुक्तं **तेनैव**

ऊढया कन्यया वापि पत्युः पितृगृहादपि।
भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम्॥ इति।

एतच्च पित्र्याद्यविभक्तद्रव्यव्ययमन्तरेण यदि लब्धं तदा न विभाज्यमितरथा विभाज्यमेव। अत एव **याज्ञवल्क्यः** (२. ११८-९)

---

१ 'पुत्रे' इति क. २ 'स्मरणार्थम्' इति ब-क.

पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम् ।
मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत् ॥
क्रमादभ्यागतं द्रव्यं धृतमभ्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥

**क्रमादभ्यागतं** पितृक्रमागतं द्रव्यमुद्धरेत् इतरानुमत्येति शेषः । अयं क्रमागतस्य हृतोद्धृतस्य विभज्यत्वप्रतिषेध उद्धर्तृसमांशभागित्वमितरेषां नेत्येवंपरः । अत एव **शङ्खः**

पूर्वनष्टां तु यो भूमिमेकश्चेदुद्धरेत् क्रमात् ।
यथाभागं लभन्तेऽन्ये दत्त्वांशं तु तुरीयकम् ॥

उद्धृतस्य चतुर्थमंशं दत्त्वावशिष्टं यथाभागमितरे गृह्णीयुरित्यर्थः । एतत्सर्वमप्यविभाज्यं पित्राद्यविभक्तद्रव्यानाश्रयणेनार्जने न त्वन्यथेत्याह **मनुरपि** ( ९. २०८ )

अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जयेत् ।
दायादेभ्यो न तद् दद्याद्विद्यया लब्धमेव च ॥

**श्रमेण** सेवाकृष्यादिना । **व्यासोऽपि**

अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति यद्धनम् ।
दायादेभ्यो न तद् दद्याद्विद्यालब्धं च यद्धनम् ॥

विद्यालब्धस्य स्वरूपं निरूपयति **कात्यायनः** ( ८६७ )

परभक्तोपयोगेन विद्या प्राप्तान्यतस्तु या ।
तया लब्धं धनं यत्तु विद्याप्राप्तं तदुच्यते ॥

अत्र परान्यशब्दावविभक्तापेक्षया प्रयुक्तौ । विद्याप्राप्तं प्रपञ्चितं तेनैव ( कात्या. ८६८-८७३ )

उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्वकम् ।
विद्याधनं तु तद् विद्याद्विभागे न विभज्यते ॥
शिष्यादार्त्विज्यतः प्रश्नात्सन्दिग्धप्रश्ननिर्णयात् ।
स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत् ॥

विद्याधनं तु तत्प्राहुर्विभागे'न'विभज्यते ।
शिल्पिष्वपि हि धर्मोऽयं मूल्याद्यच्चाधिकं भवेत् ॥

विद्याबलकृतं चैव याज्यतः शिष्यतस्तथा ।
एतद्विद्याधनं प्राहुः सामान्यं यदितोऽन्यथा ॥

परं निरस्य यल्लब्धं विद्यया पणपूर्वकम् ।
विद्याधनं तु तद्विद्यान्न विभाज्यं बृहस्पतिः ॥

विद्याप्रतिज्ञया लब्धं शिष्यादाप्तं च यद्भवेत् ।
ऋत्विङ्न्यायेन यल्लब्धमेतद्विद्याधनं भृगुः ॥ इति ।

**उपन्यस्ते** क्रमजटादिरूपेण सङ्कल्य्य[1] पठिते । **पणपूर्वकमुपन्यस्ते** इत्यन्वयः । **शिष्यात्** अध्यापनात् । **आर्त्विज्यतः** हौत्रादिकरणात् । **प्रश्नात्** दुर्बोधार्थप्रश्नात् । **सन्दिग्धप्रश्ननिर्णयात्** कठिनप्रश्नोत्तराभिधानात् । **स्वज्ञानशंसनात्** सभायां स्वज्ञानप्रख्यापनाद्वादजल्पवितण्डादिरूपात् । **प्राध्ययनात्** प्रकृष्टाध्ययनात् । **शिल्पिष्वपीत्यादि** शिल्पविद्योपजीविष्वपि **अयं** विद्याधनाविभजनरूपो **धर्मोस्ति** । उचितमूल्याद्यदधिकं पुरुषप्रतिष्ठया लभ्यते । **विद्याबलकृतं** सभापूजादौ यद्विद्याधिक्यवशाल्लब्धम् । **याज्यतः** दक्षिणाव्यतिरेकेण सत्काररूपेण लब्धम् । **विद्याप्रतिज्ञया लब्धं** बहुविद्योऽहमस्मीति प्रतिज्ञया लब्धम् । **शिष्यात्** आप्तगुरुदक्षिणारूपेण । **ऋत्विङ्न्यायेन** उपद्रष्टृत्वादिना । कस्यचिद्विद्याधनेऽप्यंशभागित्वमाह **नारदः** ( दाय० १० )

कुटुम्बं बिभृयाद् भ्रातुर्यो विद्यामधिगच्छतः ।
भागं विद्याधनात्तस्मात्स लभेताश्रुतोऽपि सन् ॥

**अश्रुतोऽपि** अविद्योऽपि । येनाविभक्तपित्रादेर्विद्या लब्धा तया धनमर्जितं तद्विद्याधनं सर्वैर्विभाज्यम् । तथा च **कात्यायनः** (८७४)

---

१ 'सङ्कल्प्य' इति ब-क.

कुले विनीतविद्यानां भ्रातॄणां पितृतोऽपि वा ।
शौर्यप्राप्तं तु यद्वित्तं विभाज्यं तद् बृहस्पतिः ॥

**शौर्यप्राप्तं** विद्यया शौर्येण वा यत्प्राप्तं तद्धनं विभाज्यम् । तत्राप्यर्जकस्यांशद्वयं भवत्येव । येन चैषां स्वयमुपार्जितं स्यात् स द्व्यंशमेव हरेत्—इति **वसिष्ठे**नाभिधानात् (वसिष्ठधर्मसूत्र १७. ५१) । अविभाज्यविद्याधनेऽप्यर्जकेच्छयांशदानमाह **गौतमः** (गौ. धर्मसूत्र २८.२८)—स्वमर्जितं[1] वैद्योऽवैद्येभ्यः कामं दद्यात्—इति । विद्याशब्देन विद्यास्थानं गृह्यते विद्यां वेत्तीति **वैद्यः** । अर्जकेच्छाभावे अंशदानाभावमाह **नारदः** (दाय० ११)

वैद्योऽवैद्याय नाकामो दद्यादंशं स्वतो धनात् ।
पितृद्रव्यं समाश्रित्य न चेत्तेन तदाहृतम् ॥

अवैद्याय सत्यामपीच्छायां[2] न दद्यात् । तथा च **कात्यायनः** (८७५)

नाविद्यानां तु वैद्येन देयं विद्याधनं क्वचित् ।
समविद्याधिकानां तु देयं वैद्येन तद्धनम् ।

अविद्यानां न क्वचिद् देयं सकामेनापि न देयमित्यर्थः । अयं च निषेधो विद्यारहितानां धनसद्भावे ज्ञातव्यः । धनराहित्ये तु तेभ्योऽपीच्छया विद्यावता दातव्यम् । शौर्यप्राप्तादीनामविभाज्यत्वमाह **स एव** (कात्या. ८७७)

शौर्यप्राप्तं विद्यया च स्त्रीधनं चैव यत्स्मृतम् ।
एतत्सर्वं विभागे तु विभाज्यं नैव रिक्थिभिः ॥

अविभाज्यस्य शौर्यधनस्य स्वरूपं दर्शितं **तेनैव** (कात्या. ८७६)

आरुह्य संशयं यत्र प्रसभं कर्म कुर्वते ।
तस्मिन्कर्मणि तुष्टेन प्रसादः स्वामिना कृतः ॥

---

१ 'धर्मार्जितं वैद्यो' इति अ-क. २ 'अवैद्या संसत्यादपीच्छायां न विद्या (?)' इति अ-क.

तत्र लब्धं तु यत्किञ्चिद्धनं शौर्येण तद्भवेत् ॥

अविभाज्यान्तरं तत्स्वरूपं चोक्तं तेनैव (काल्या. ८७८)

ध्वजाहृतं भवेद्यत्तु विभाज्यं नैव तत्स्मृतम् ।
संग्रामादाहृतं यत्तु विद्राव्य द्विषतां बलम् ॥
स्वाम्यर्थे जीवितं त्यक्त्वा तद् ध्वजाहृतमुच्यते ।

साधारणपित्र्यादिद्रव्याश्रयणेन शौर्यादिना येन प्राप्तं तत्र तस्यार्जकत्वादंशद्वयभाक्त्वमित्याह **व्यासः**

साधारणं समाहृत्य यत्किंचिद्वाहनादिकम् ।
शौर्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः ॥
तस्य भागद्वयं देयं शेषास्तु समभागिनः ।

अविभाज्यान्तरमाह **बृहस्पतिः**

पितामहपितृभ्यां च दत्तं मात्रापि यद् भवेत् ।
तस्य तन्नापहर्तव्यं शौर्यभार्याधने तथा ॥

**नारदोऽपि** (दाय० ६-७)

शौर्यभार्याधने चोभे यच्च विद्याधनं भवेत् ।
त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः ॥
मात्रा च स्वधनं दत्तं यस्मै स्यात्प्रीतिपूर्वकम् ।
तस्याप्येष विधिर्दृष्टो मातापीष्टे यथा पिता ॥

औद्वाहिकवत्कन्यागतस्याप्यविभाज्यत्वमभिसन्धाय तयोः स्वरूपमाह **कात्यायनः** (८७९-८८०)

यल्लब्धं लाभकाले तु स्वजात्या कन्यया सह ।
कन्यागतं तु तद्वित्तं शुद्धं वृद्धिकरं स्मृतम् ॥
वैवाहिकं तु तद्विद्याद्भार्यया यत्सहागतम् ।
धनमेवंविधं सर्वं विज्ञेयं धर्मसाधकम् ॥

अनयोरपि साधारणद्रव्याश्रयणेनार्जने पूर्वोदाहृतवचनाद्विभाज्यत्वमर्जकस्य चांशद्वयं ज्ञातव्यम् । साधारणद्रव्यानाश्रयणेनापि ज्येष्ठेनाविभक्तेन

पितरि प्रेते यदर्जितं तद्यदि कनीयांसो विद्याभ्यासरतास्तदा तेभ्योऽपि विभज्य देयमर्जकत्वात्स्वेन चांशद्वयं ग्राह्यम् । अत एव **मनुः** (९.२०४)

यत्किंचित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति ।
भागो यवीयसां तत्र यदि विद्यानुपालिनः ॥

विचाररहिताः सर्वेऽपि भ्रातरः कृष्यादिना यदि धनमर्जयन्ति तत्र सर्वेषां समो भागो न तु बह्वल्पधनार्जनपर्यालोचनया विषमो भागः कल्प्य इत्याह **स** एव ( मनु० ९.२०५ )

अविद्यानां तु सर्वेषामीहातश्चेद्धनं भवेत् ।
समस्तत्र विभागः स्यादपित्र्य इति धारणा ॥

**ईहातः** कृष्यादिचेष्टातः । **अपित्र्ये** पितृद्रव्याश्रयणाभावेऽपि । अविभाज्यान्तरमाह **मनुः** ( ९. २१९ )

वस्त्रं पत्रमलङ्कारः कृतान्नमुदकं स्त्रियः ।
योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते ॥

**वस्त्रं** धृतं वस्त्रं तद्येन धृतं तस्यैव । पित्रा धृतं वस्त्रं तु पितुरूर्ध्वं श्राद्धभोक्त्रे दातव्यम् ।

वस्त्रालङ्कारशय्यादि पितुर्यद्वाहनादिकम् ।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत् ॥

इति **बृहस्पति**वचनात् । नूतनानि तु वस्त्राणि विभाज्यान्येव । **पत्रं** वाहनमश्वशिबिकादि । तद्येनारूढं तस्यैव । पित्र्यं तु वस्त्रवदेव । अथवा **पत्रं** पत्रस्थितमृणत्वेन दत्तं धनं—धनं पत्रनिविष्टम्-इति कात्यायनेनाभिधानात् ( ८८२ ) । अश्वादीनां बाहुल्ये तद्विक्रयोपजीविभिस्तानि विभाज्यान्येव । अजादीनां वैषम्येण समविभागासम्भवे ज्येष्ठस्याधिकं देयं

अजाविकं सैकशफं न जातु विषमं भजेत् ।
अजाविकं सैकशफं ज्येष्ठस्यैव विधीयते ॥

इति **मनु**नाभिधानात् ( मनु ९. ११९ ) । अलङ्कारोऽपि येन धृतः

स तस्यैव । अधृतः साधारणत्वाद्विभाज्यः । **कृतान्नं** तण्डुलमोदकादि । तदप्यविभाज्यं यथासंभवं भोक्तव्यम् । **उदकं** उदकाधारभूतं कूपादिकं । तच्च विषमसंख्याकं पर्यायेणोपभोक्तव्यं न मूल्यद्वारेण विभाज्यम् । **स्त्रियश्च** दास्यो विषमाः पर्यायेण कर्म कारयितव्याः पित्रावरुद्धास्तु समा अपि अविभाज्याः[1] । स्त्रीषु च संयुक्तास्वविभागः—इति **गौतमे**नाभिधानात् ( गौ. धर्मसूत्र २८. ४५ ) । **योग**शब्देनालब्धलाभकारणमिष्टं[2] क्षेम-शब्देन च तडागनिर्माणादिपूर्तं कर्म गृह्यते । एतद् द्रव्यं पितृद्रव्याश्रयणेनार्जितमपि न विभाज्यम् ।

क्षेमं पूर्तं योगमिष्टमित्याहुस्तत्त्वदर्शिनः ।
अविभाज्ये तु ते प्रोक्ते शयनासनमेव च ॥

इति **लौगाक्षि**णाभिधानात् । योगक्षेमशब्देन मन्त्रिपुरोहितादीनां ग्रहणं तेषां योगक्षेमहेतुत्वादिति **कल्पतरु**कारादयः । **प्रचारो** गृहारामादिषु प्रवेशनिर्गममार्गो गवादीनां प्रचरणमार्गश्च । अविभाज्यान्तरमाहतु**र्व्या-सोशनसौ**

अविभाज्यं सगोत्राणामा सहस्रकुलादपि ।
याज्यं क्षेत्रं च पत्रं च कृतान्नमुदकं स्त्रियः ॥ इति ।

**याज्यं** शिष्यः । **शङ्खलिखितौ**—न वास्तुविभागो नोदपात्रालङ्कारोपयुक्तवाससाम्—इति । **वास्तु** गृहम् । अत्र क्षेत्रगृहयोरविभाज्यत्वाभिधानमत्यल्पे बहुभिर्विभज्य ग्रहीतुमयोग्ये एकस्मिन् गृहक्षेत्रादौ वेदितव्यम् । तत्तु तत्परिवर्तनादिद्वारा एकस्मै सर्वैर्दातव्यम् । अथवा प्रतिग्रहलब्धक्षेत्रादिकं ब्राह्मणीपुत्रेण क्षत्रियापुत्रादिभिः सह न विभाज्यमित्येवंपरोऽयं क्षेत्रादेर्विभाज्यत्वनिषेधः ।

न क्षत्रियभूर्देया क्षत्रियादिसुताय वै ।
यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेत् ॥

---

१ 'किताज्याः (?)' इति अ–क. २ इष्टमिति नास्ति ब–आदर्शे; 'यिष्टं' इति अ–क.

इति वचनात् । अस्य वस्त्रादिविभागनिषेधस्य धृतवस्त्रादिविषयत्वं न तु सामान्यविषयत्वमित्यभिप्रेत्य वस्त्रादिविषये संख्यामूल्यादिकृतवैषम्ये विभागप्रकारमाह बृहस्पतिः

वस्त्रादयोऽविभाज्या यैरुक्तं तैर्न विचारितम् ।
धनं भवेत्समृद्धानां वस्त्रालङ्कारसंश्रितम् ॥
मध्यस्थितमनाजीव्यं दातुं नैकस्य शक्यते ।
युक्त्या विभजनीयं तदन्यथानर्थकं भवेत् ॥
विक्रीय वस्त्राभरणमृणमुद्ग्राह्य लेखितम् ।
कृतान्नं चाकृतान्नेन परिवर्त्य विभज्यते ॥
उद्धृत्य कूपवाप्यम्भः स्वानुसारेण भुज्यते ।
एकां स्त्रीं कारयेत्कर्म यथांशेन गृहे गृहे ॥
बह्वयः समांशतो देया दासानामप्ययं विधिः ॥
यथाभागानुसारेण सेतु[1]ः क्षेत्रं विभज्यते ।
प्रचारश्च यथांशेन कर्तव्यो रिक्थिभिः सदा ॥ इति ।

**न विचारितं** विभागनिषेधस्य विशेषविषयत्वं न विविच्योक्तमित्यर्थः । **ऋणमुद्ग्राह्य लेखितं** पत्रस्थमृणमधमर्णादुद्धृत्य विभाज्यं न तु पत्रस्थमेवेत्यर्थः । **कात्यायनोऽपि** ( ८८२-८८४ )

धनं पत्रनिविष्टं तु धर्मार्थं यन्निरूपितम् ।
उदकं चैव दाराश्च निबन्धो यः क्रमागतः ॥
धृतं वस्त्रमलङ्कारो नानुरूपं तु यद्भवेत् ।
यथाकालोपयुक्तानि तथा योज्यानि बन्धुभिः ॥
गोप्रचारश्च रथ्या च वस्त्रं यच्चाङ्गयोजितम् ।
प्रयोज्यं न विभज्येत शिल्पार्थं[2] च बृहस्पतिः[3] ॥

---

१ 'मेतुः' इति अ-क. २ अ-क—आदर्शयोरेवं लिखितं 'शिल्पार्थं' इत्यस्यानन्तरं 'अत्रत्यो ग्रन्थः शोधयित्रे (? तव्यः)'. ३ 'बृहस्पतिः धर्मार्थं यन्निरूपितम्' इत्यारभ्य 'समभागेन तद् भृगुः । अन्योन्यापहृतं चैव' इत्यन्तो ग्रन्थो नास्ति अ-क-आदर्शयोः.

**धर्मार्थं यन्निरूपितं** देवपूजाद्यर्थं सर्वसाधारणत्वेन स्थापितं परादिकं (?घण्टादिकम्)। **निबन्धः** अत्रैतावद्देयमित्यादिरूपेण राजादिभिर्व्यवस्थापितं द्रव्यम्। **धृतं वस्त्रमत्र** बहुमूल्यं विवक्षितम्। **नानुरूपं यद्भवेत्** यत्साक्षाद्विभक्तुमशक्यम्। अङ्गयोजितं वस्त्रमत्राबहुमूल्यं विवक्षितम्। **प्रयोज्यशब्देन** पुस्तकादिकं गृह्यत इति प्राच्याः। पुस्तकादिकं शिल्पार्थं च क्रमान्मूर्खैः शिल्पानभिज्ञैश्च सह न विभाज्यमिति ज्ञातव्यम्। इतरथा जीवनोपायत्वात् तत्सर्वैर्विभाज्यमित्यर्थः। विभागो देशधर्मानुसारेण कर्तव्य इत्याह स एव (८८४ अ)

देशस्य जात्या सङ्घस्य धर्मो ग्रामस्य यो भृगुः।
उदितं स्यात्स तेनैव दायधर्मं प्रकल्पयेत्॥ इति।

विभागकाले यत्केनचिद्वञ्चयित्वा स्थापितं विभागानन्तरं ज्ञातं तत्सर्वैः समतया विभज्य ग्राह्यम्। तथा च **मनुः** (९. २१८)

ऋणे धने च सर्वस्मिन् प्रविभक्ते यथाविधि।
पश्चाद् दृश्येत यत्किञ्चित् तत्सर्वं समतां नयेत्॥

**याज्ञवल्क्योऽ**पि (२. १२६)

अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते।
तत्पुनस्तत्समैरंशैर्विभजेरन्निति स्थितिः॥

अपहृतद्रव्यवश्यदशाप्रोक्तमार्गेण (?) विभक्तं यच्च विभागकाले विस्मृतं पश्चात्प्राप्तं तदपि साम्येन विभाज्यम्। तथा च **कात्यायनः** (८८५-८८६)

प्रच्छादितं तु यद्येन पुनरासाद्य तत्समम्।
भजेरन् भ्रातृभिः सार्धमभावे हि पितुः सुताः॥
अन्योन्यापहृतं यच्च दुर्विभक्तं च यद्भवेत्।
पश्चात्प्राप्तं विभज्येत समभागेन तद्भृगुः॥

**अन्योन्यापहृतं यच्चेति** दृष्टान्तार्थं पुनरुपादानम्। अत्र समभा-

गविधानं पूर्वं विषमविभागकरणेऽप्यस्मिन्विषये समभाग एवेति नियमनार्थम्। यदन्येन केनचिद्धृतं नष्टं वा विभागानन्तरं लब्धं तदपि सर्वैर्विभज्य ग्राह्यम्। तथा च स एव (कात्या० ८८७)

विभक्तेनैव यत्प्राप्तं धनं तस्यैव तद्भवेत्।
हृतं नष्टं च यल्लब्धं प्रागुक्तं च पुनर्भवेत्॥ इति।

**प्रागुक्तं** प्रच्छादितं चेत्यादिनोक्तम्। **पुनर्भवेद्** विभाज्यमित्यर्थः। अत्र वञ्चितद्रव्यादेरेव पश्चाद् दृष्टस्य विभागविधानात्पूर्वं विभक्तस्य सर्वस्यापि न पुनर्विभागः

विभागे तु कृते किञ्चित्सामान्यं यत्तु दृश्यते।
नासौ विभागो विज्ञेयः कर्तव्यः पुनरेव हि॥

इति सकलद्रव्यस्य पुनर्विभागविधायकं मनुवचनं तद्विभक्तद्रव्यस्यायव्ययकरणात्प्रागेव वञ्चितादिद्रव्यदर्शने ज्ञातव्यम्। इतरथा पूर्वोदाहृतवचनानां वञ्चितादिद्रव्यमात्रविभागविधायकानां नैरर्थक्यापत्तेः। साधारणद्रव्यवञ्चकस्य दण्ड्यतामाह **मनुः** ( ९. २१३ )

यो ज्येष्ठो विनिकुर्वीत लोभाद् भ्रातॄन्यवीयसः।
सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः॥

**ज्येष्ठ**ग्रहणं कनीयसामप्युपलक्षणम्। **अभाग** इति दुष्टत्वप्रतिपादनार्थं न तु सर्वथा नगानर्हत्व ( भागानर्हत्व? ) ज्ञापनार्थं पूर्वोदाहृतवचनानुसारात्। विभक्तेषु केनचिद्विभागापलापे कृते तन्निर्णयप्रमाणान्याह **याज्ञवल्क्यः** ( २. १४९ )

विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः।
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः॥

**ज्ञातयः** पितृवंश्याः। **बन्धवो** मातृवंश्याः। **साक्षिणः** प्रागुक्तलक्षणाः। **अभिलेखितं** विभागपत्रम्। **यौतकैः** पृथक् कृतैर्गृहक्षेत्रैरिति विशेषणविशेष्यभावेनान्वयः। **नारदो**ऽपि (दाय० ३६)

---

१ 'सर्वैर्विभज्य' इत्यस्मादनन्तरं 'नापैतीति शेषः यत्पुनः' इत्यन्तो भागो गलितो ब-आदर्शे.

विभागधर्मसन्देहे दायादानां विनिर्णयः ।
ज्ञातिभिर्भागलेख्येन पृथक्कार्यप्रवर्तनात् ॥

**पृथक्कार्यप्रवर्तनात्** पृथग्वैश्वदेवादिधर्मकरणात् । पृथग्वैश्वदेवादिधर्मो विभक्तैः कर्तव्य इत्याह **स** एव ( नारद, दाय० ३७ )

भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते ।
विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक् ॥

अन्यान्यपि विभागलिङ्गानि दर्शितानि **तेनैव** ( नारद, दाय० ३८-४० )

साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम् ॥
दानग्रहणपश्वन्नगृहक्षेत्रप्रतिग्रहाः ।
विभक्तानां पृथग् ज्ञेया दानधर्मागमव्ययाः ॥
येषामेताः क्रिया लोके प्रवर्तन्ते स्वरिक्थिषु ।
विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान् ॥

**बृहस्पति**रपि

पृथगायव्ययाधानं कुसीदं च परस्परम् ।
वणिक्पथं च ये कुर्युर्विभक्तास्ते न संशयः ॥

**वणिक्पथो** वाणिज्यम् । अन्योन्यमृणदानादिकमविभक्तानां निषिद्धमिति विभक्तत्वे तल्लिङ्गम् । निषेधश्च कृतो **याज्ञवल्क्येन** (२.५२)

भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ॥ इति ।

एतैर्विभागलिङ्गैर्विभागनिर्णयः साक्ष्यादिप्रमाणाभावे कर्तव्य इत्युक्तं[1] **बृहस्पति**ना

साहसं स्थावरस्वाम्यं प्राग्विभागं च रिक्थिनाम् ।
अनुमानेन विज्ञेयं न स्युर्यत्र च साक्षिणः ॥

---

१ 'इत्युक्तं बृहस्पतिमाह' इति अ.

लिङ्गैरपि निर्णयस्य कर्तुमशक्यत्वे

युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत् ।

इति सामान्यवचनेन प्राप्तं दिव्यं निषेधति **वृद्धयाज्ञवल्क्यः**

विभागधर्मसन्देहे बन्धुसाक्ष्यभिलेखितैः ।

विभागभावना कार्या न भवेद्दैविकी क्रिया ॥ इति ।

कथंचिदपि निर्णयस्य कर्तुमशक्यत्वे पुनर्विभागः कर्तव्य इत्याह **मनुः**

विभागे यत्र सन्देहो दायादानां परस्परम् ।

पुनर्विभागः कर्तव्यः पृथक्स्थानस्थितैरपि ॥

यत्र सन्देहः कथंचिदपि नापैतीति शेषः । यत्पुनः

सकृदंशो निपतति सकृत्कन्या प्रदीयते ।

सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ॥

इति **तेनै**वोक्तं ( मनु ९. ४७ ) तद्युक्तिभिः कथंचिन्निर्णये कर्तुं शक्ये वेदितव्यम् । विभक्तैर्यत्कर्तव्यं तदाह **नारदः** (दाय० ४२-४३)

यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः ।

पृथक्कर्मगुणोपेता न चेत्कार्येषु संमताः ॥

स्वभावाद्यदि दद्युस्ते विक्रीणीयुरथापि वा ।

कुर्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य वै ॥

अयमर्थः । यद्येकस्माज्जाता बहवो विभक्तास्तदा पृथग्धर्माः परस्परानुमतिं विना धनसाध्याग्निहोत्रादि धर्मकारिणः स्युः । तथा द्रव्यसाध्यकृष्यादिलौकिककर्मकारिणः स्युः । तथा विभिन्नकुटुम्बभरणादि सर्वं[1] स्वेच्छया कुर्युः । कर्मसाधनगृहोपस्करादिद्रव्ययुक्ताः स्युः । तथा कार्येषु यदि भ्रात्रादयो न संमतास्तदाताननादृत्य कार्यं कुर्युः । तथा ते विभक्ताः स्वभागादान ( स्वभागदान ? ) विक्रयाधानादि सर्वं स्वेच्छया कुर्युः । यस्मात्ते विभक्तत्वात् स्वधने स्वतन्त्राः स्वामिन इति । यत्तु

१ 'सर्वं स्वेच्छया कुर्युः' इति नास्ति अ-क-आदर्शयोः.

विभक्ता अविभक्ता वा दायादाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये ॥

इति **बृहस्पति**वचनं तत्स्थावरेतरधनं विभज्य गृहीत्वा स्थावरविभागस्य दुष्करतां मन्वानास्तत्फलमेव फलकाले ये विभज्य गृह्णन्ति तेषां विभक्तत्वे सत्यपि स्थावरे स्वातन्त्र्याभावात् परस्परानुमतिमन्तरेण तद्दानादिकं न कर्तव्यमित्येवंपरम् । **विज्ञानेश्वराद**यस्तु अविभक्तेषु द्रव्यस्य साधारणत्वादेकस्यानीश्वरत्वेन सर्वाभ्यनुज्ञावश्यं कर्तव्या, विभक्तेषु तूत्तरकाले विभक्ताविभक्तसंशयव्युदासेन व्यवहारसौकर्यार्थं सर्वाभ्यनुज्ञा न पुनरेकस्यानीश्वरत्वेनातो विभक्तानुमतिमन्तरेणापि व्यवहारः सिध्यत्येवेत्याहुः । विभक्तकृत्यान्तरमुक्तं **बृहस्पति**ना

येनांशो यादृशो भुक्तस्तस्य तन्न विचालयेत्[1] ।

विभक्तानां मध्ये योंऽशातिक्रमं करोति स राज्ञा स्वीयेंऽशे स्थापनीयः । औद्दण्ड्ये दण्डनीयश्च । तथा च **स** एव

स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत् ।
स राज्ञांशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत् ॥

**अनुबन्धो** निर्बन्धः ॥ दायभागानर्हान्दर्शयति **मनुः** (९.२०१)

अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा ।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥

**उन्मत्तः** उन्मादेनाभिभूतः । **जडो** विकलान्तःकरणो हिताहितज्ञानशून्यः । **निरिन्द्रियाः** व्याध्यादिना विगतघ्राणहस्तपादादीन्द्रियाः श्रौतस्मार्तकर्मानधिकारिणः । **याज्ञवल्क्यः** (२.१४०)

क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः ।
अन्धोऽचिकित्स्यरोगाद्या भर्तव्याः स्युर्निरंशकाः ॥

**तज्जः** पतितोत्पन्नः । **अचिकित्स्यरोगाः** असाध्यक्षयादिरोगयुक्ताः । विभागानन्तरं कथंचिदौषधादिना रोगनिर्हरणे भागार्हत्वमस्त्येव

---

१ 'विवासयेत्' इति अ-क.

यथाविभागानन्तरोत्पन्नस्य । **आद्य**शब्देन पितृद्वेष्यादीनां ग्रहणम् । अत एव **नारदः** ( दाय. २१,२२ )

पितृद्विट् पतितः षण्ढो यश्च स्यादपपात्रितः ।
औरसा अपि नैतेंऽशं लभेरन् क्षेत्रजाः कुतः ॥
दीर्घतीव्रामयग्रस्ता ये जडोन्मत्तपङ्गवः ।
भर्तव्याः स्युः कुलस्यैते तत्पुत्रास्त्वंशभागिनः ॥

**अपपात्रितः** राजद्रोहादिना महापराधेन बन्धुभिर्घटापवर्जनविधिना बहिष्कृतः । **शङ्खलिखिता**वपि—अपपात्रिते रिक्थपिण्डोदकानि व्यावर्तन्ते—इति । **वसिष्ठो**ऽपि ( १७.५२ )—अनंशास्त्वाश्रमान्तरगताः—इति । **आश्रमान्तराणि** नैष्ठिकब्रह्मचार्याश्रमो वनस्थाश्रमो यत्याश्रमश्च । **कात्यायनः** ( ८६२ )

अक्रमोढासुतश्चैव सगोत्राद्यश्च जायते ।
प्रव्रज्यावसितश्चैव न रिक्थं तेषु कर्हिचित् ॥

**सगोत्राद्यश्च जायते** सगोत्रपरिणेतुः सकाशात्सगोत्रायामुत्पन्नः । अक्रमोढासुतस्यापि पितृसवर्णत्वे रिक्थभाक्त्वमाह **स** एव (कात्या. ८६३)

अक्रमोढासुतस्त्वृक्थी सवर्णश्च यदा पितुः ।
असवर्णाप्रसूतश्च क्रमोढायां च यो भवेत् ॥

प्रतिलोमोत्पन्नस्य दायानर्हतामाह **स** एव ( कात्या. ८६४ )

प्रतिलोमप्रसूतायास्तस्याः पुत्रो न रिक्थभाक् ।
ग्रासाच्छादनमत्यन्तं देयं तद्बन्धुभिर्मतम् ॥

गुणवत्सु सत्सु पित्र्यदृष्टादृष्टकार्योपयुक्तगुणरहितस्य पुत्रस्य पित्र्यदायानर्हतामाह **बृहस्पतिः**

सवर्णाजोऽप्यगुणवान्नार्हः स्यात्पैतृके धने ।
तत्पिण्डदाः श्रोत्रिया ये तेषां तत्तु विधीयते ॥
उत्तमर्णाधमर्णेभ्यः पितरं त्रायते सुतः ।
अतस्तु विपरीतेन तेन नास्ति प्रयोजनम् ॥

---

१ "दीनां…लभेरन् क्षेत्रजाः" इति भागो गलितो अ–आदर्शे.

तया गवा किं क्रियते या न धेनुर्न गर्भिणी ।
कोऽर्थः पुत्रेण जातेन [1]यो न विद्वान्न धार्मिकः ॥
शास्त्रशौर्यार्थरहितस्तपोविज्ञानवर्जितः ।
आचारहीनः पुत्रस्तु मूत्रोच्चारसमः स्मृतः ॥

**उत्तमर्णं** ऋषिदेवपितॄणामृणम् । **अधमर्णं** लौकिकमृणम् । **मनु**रपि ( ९.२१४ )

सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनम् ।

इति । एते दायानर्हाः क्लीबादयो रिक्थग्राहिभिर्यावज्जीवं पोषणीयाः—भर्तव्यास्ते निरंशकाः—इति पूर्वोदाहृतयाज्ञवल्क्यवचनात् । अपोषणे

सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिभिः ।
ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् ॥

इति **मनुना** (९-२०२) दोषस्याभिधानाच्च । **अत्यन्तं** यावज्जीवम् । पतितस्यापोषणीयत्वमाह **देवलः**

मृते पितरि न क्लीबकुष्ठ्युन्मत्तजडान्धकाः ।
पतितस्तदपत्यं च लिङ्गी दायांशभागिनः ॥
तेषां पतितवर्जेभ्यो भक्तवस्त्रं प्रदीयते ।

**लिङ्गी** कपटयत्यादिवेषधारी । **पतित**ग्रहणं पतितापत्यस्याप्युपलक्षणम् । अत एव **बौधायनः** ( २.२.४३-४६ )—अतीतव्यवहारान्ग्रासाच्छादनैर्बिभृयुरन्धजडक्लीबव्यसनिव्याधितांश्चाकर्मिणः पतिततज्जवर्जम्—इति । **अतीतव्यवहाराः** मूकादयः । **अकर्मिणः** धर्मजनकश्रौतस्मार्तकर्मस्वसमर्थाः । आश्रमगताश्च न भरणीयाः । अत एव **वसिष्ठः** ( १७.५२-५४ )—अनंशास्त्वाश्रमान्तरगताः क्लीबोन्मत्तपतिताश्च भरणं क्लीबोन्मत्तानाम्—इति । अत्र क्लीबोन्मत्तानामेव भरणीयत्वाभिधानादितरेषामर्थात् तत्प्रतिषेधः । प्रव्रज्यावसितोऽप्यतिदुष्टत्वात्पतितसमानन्यायत्वेन न पोषणीयः । निरंशकपुत्राणां दायानर्हतापादकक्लीबताद्यभावे पित्र्यभागहरत्वमाह **देवलः**

---

१ 'यो न विद्वान्... लौकिकमृणम्' इति भागो विसंष्ठुलः पौर्वापर्यरहितो **ब**-आदर्शे.

तत्पुत्राः पितृदायांशं लभेरन् दोषवर्जिताः ।

**याज्ञवल्क्योऽ**पि ( २.१४१ )

औरसाः क्षेत्रजास्तेषां निर्दोषा भागहारिणः ।

**विष्णुः** ( विष्णुधर्मसूत्र १५.३४-३८ )—तेषामेवौरसाः पुत्रा भागहारिणो न तु पतितस्य पतनीये कर्मणि कृतेऽनन्तरोत्पन्नाः प्रतिलोमासु स्त्रीपूत्पन्नाश्चाभागिनस्तत्पुत्राः पैतामहेऽप्यर्थे—इति । [1]पतितपुत्रवत्प्रव्रज्यावसितपुत्रोऽपि न भागार्हः । निरंशानां दुहितरो यावद्विवाहं पोषणीयाः संस्कार्याश्च । निर्दोषपुत्ररहिताः सद्वृत्तास्तेषां पत्न्यश्च यावज्जीवं पोषणीयाः। तथा च **याज्ञवल्क्यः** ( २.१४१-१४२ )

सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृताः ॥

अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः ।

निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥

क्षतवृत्तास्तु गृहाद्बहिर्निष्कासनीया न च भरणीयाः । पोषकप्रातिकूल्यमात्रे तु निष्कासनीया एव पोषणं तु [2]कर्तव्यमेवेति वृद्धाः । एवमपुत्ररिक्थग्राहित्वेन वक्ष्यमाणानां पत्न्यादीनां संसृष्ट्यादीनां च दायानर्हतापादकधर्मयोगित्वे तद्रिक्थभाक्त्वं नेति ज्ञातव्यं याज्ञवल्क्येन पत्नी दुहितरश्चेत्यादिकमभिधाय तदपवादत्वेन क्लीबोऽथ पतितस्तज्ज इत्यभिधानात् ।

भ्रात्रादिभिः सह विभक्तस्यौरसपुत्रिकापुत्रदत्तकतत्पुत्रादिरहितस्य प्रमीतस्य यद्धनं तद्ग्रहणे क्रममाह **याज्ञवल्क्यः** ( २. १३५-१३६ )

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।

तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः ॥

एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ।

स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः ॥

**[3]पत्नी** धर्म्यविवाहसंस्कृता । **दुहितरश्चे**त्युक्तसमुच्चयार्थेन **चकारेण**

---

१ 'पतितपुत्रवत्...स्तेषां पत्न्यश्च' इति भागो नास्ति अ-क-आदर्शयोः. २ 'कर्तव्यमेवेति...दायानर्हतापादक०' इति भागो गलितः अ-क-आदर्शयोः. ३ 'पत्नी धर्म्य' इत्येतौ शब्दौ न स्तः ब-आदर्शे.

दौहित्राणां ग्रहणम् । **तत्सुताः** भ्रातुः पुत्राः । **गोत्रजाः** सपिण्डाः समानोदकाश्च । **एषा**मिति निर्धारणे षष्ठी । एतेषु पत्न्यादिषु पूर्वपूर्वस्याभावे उत्तर उत्तरः स्वर्यातविभक्तापुत्रधनं गृह्णाति । **अयं विधिः** सर्वेष्वनुलोमजेषु प्रतिलोमजेषु ब्राह्मणादिवर्णेषु च साधारण इत्यर्थः । यद्यप्यत्र पुत्रशब्दः सकलमुख्यगौणपुत्रसाधारणस्तथापि कलौ क्षेत्रजादीनां निषिद्धत्वेनाभावादौरसादिपुत्रत्रय एव पर्यवस्यति ॥ पत्न्याः प्रथमं धनग्राहित्वं **बृहस्पति**रप्याह

आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः ।
शरीरार्धं स्मृता जाया पुण्यापुण्यफले समा ॥
यस्य नोपरता भार्या देहार्धं तस्य जीवति ।
जीवत्यर्धे शरीरस्य कथमन्यः समाप्नुयात् ॥
कुल्येषु विद्यमानेषु पितृभ्रातृसनाभिषु ।
असुतस्य प्रमीतस्य पत्नी तद्भागहारिणी ॥

**आम्नाये** वेदे—अर्धो वा एष आत्मनो यत्पत्नीत्येवमादौ ( तै. सं. ६. १.८.५) । **स्मृतितन्त्रे** धर्मशास्त्रे—पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत् । पतितार्धशरीरस्य निष्कृतिर्न विधीयते ( वसिष्ठधर्मसूत्र २१.१५, पराशरस्मृति १०. २६ ) इत्येवमादौ । पत्न्याः पतिव्रताया एव धनग्राहकत्वं नान्यस्या इत्याह **बृहस्पतिः**

अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च ॥

**प्रजापति**रपि

पूर्वं मृता त्वग्निहोत्रं मृते भर्तरि तद्धनम् ।
लभेत्पतिव्रता नारी धर्म एष सनातनः ॥

**अग्निहोत्र**शब्देन अग्न्यादीनि तत्साधनानि गृह्यन्ते । **तद्धनं** स्थावरजङ्गमात्मकम् । अत एवोक्तं **तेनैव**

जङ्गमं स्थावरं हेम कुप्यं धान्यरसाम्बरम् ।
आदाय दापयेच्छ्राद्धं मासषाण्मासादिकम् ॥

पितृव्यगुरुदौहित्रान् भर्तुः स्वस्रीयमातुलान् ।
पूजयेत्कव्यपूर्ताभ्यां वृद्धांश्चाप्यतिथीन् स्त्रियः ॥ इति ।

**कुप्यं** त्रपुसीसादिकम् । **कव्यं** पित्रुद्देशेन त्यक्तमन्नादिकम् । **पूर्त**मत्र खातादिकर्माङ्गभूतदानादिकम् । यत्तु स्थावरग्रहणनिषेधकं **स्मृतिचन्द्रिकायां** बार्हस्पत्यत्वेन निबद्धं

यद्विभक्ते धनं किञ्चिदाध्यादि विविधं स्मृतम् ।
तज्जाया स्थावरं मुक्त्वा लभेत मृतभर्तृका ॥
वृत्तस्थापि कृतेऽप्यंशे न स्त्री स्थावरमर्हति ॥ इति

वचनं त**द्विज्ञानेश्वर–कृत्यकल्पतरु–रत्नाकर–पारिजातहलायुधा**दिबहुतरनिबन्धेष्वबद्धत्वात्प्रत्युत **कल्पतरु**प्रभृतिषु जङ्गमं स्थावरं हेमेत्येतद्विरुद्धवाक्यस्य बृहस्पतिवचनत्वेन निबन्धनादनादृत्यमिव प्रतिभाति । यदि कथंचि**च्चन्द्रिकाकार**प्रामाण्यादाद्रियेत तदाप्यत्र पत्नीशब्दप्रयोगाभावात्कृत्स्नमर्थं लभेत चेत्यादिपूर्वोदाहृतवचने तु स्थावरजङ्गमात्मकसमग्रधनभाक्त्वप्रतिपादकेषु पत्नीशब्दप्रयोगात् पत्नीव्यतिरिक्तासुरादिविवाहप्राप्तभार्याविषयत्वेन व्यवस्थापनीयम्[1] । **स्मृतिचन्द्रिकाकार**स्तु–स्त्री स्थावरमर्हति–इति वचनं दुहितृरहितपत्नीविषयं स्थावरभाक्त्वबोधकं जङ्गमं स्थावरं हेमेत्यादिवाक्यं तु दुहितृसहितपत्नीविषयमिति[2] व्यवस्थामाह । अस्यां व्यवस्थायां स्वोत्प्रेक्षामात्रमन्तरेण किमपि निगमनं न पश्यामः । स्थावरं मुक्त्वेत्यभिधानं दायादानुमतिमन्तरेण स्थावरविक्रयनिषेधपरमिति **माधवीये विद्यारण्यश्रीचरणाः** । यत्तु विभक्तासंसृष्टपतिकानामपि स्त्रीणां जीवनमात्रभाक्त्वविधायकं

अदायकं राजगामि योषिद्भृत्यौर्ध्वदेहिकम् ।
अपास्य श्रोत्रियद्रव्यं श्रोत्रियेभ्यस्तदर्पयेत् ॥ इति

**कात्यायन**वचनं ( ९३१ ), यच्च

---

१ 'पत्नीशब्दप्रयोगात्पत्नीव्यतिरिक्तासुरादि' इत्येवं पठितं अ–आदर्शे. २ 'दुहितृसहितसपत्नीविषयम्' इति अ.

अन्यत्र ब्राह्मणात्किंचिद्राजा धर्मपरायणः ।
तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः ॥ इति

**नारद**वचनं ( दाय० ५२ ) तद् द्वयमप्यवरुद्धस्त्रीविषयं ज्ञातव्यम् । यत्तु पत्न्या दानादावस्वातन्त्र्यबोधकं

मृते भर्तरि भर्त्रंशं लभेत कुलपालिका ।
यावज्जीवं हि न स्वाम्यं दानाधमनविक्रये ॥

इति **कात्यायन**वचनं ( ९२४ ) तद् दृष्टार्थनटनर्तकदानादौ स्वातन्त्र्यनिषेधपरम् । अदृष्टार्थदाने तदुपयोगिनोराधिविक्रययोश्च स्वातन्त्र्यमस्त्येव ।

व्रतोपवासनिरता ब्रह्मचर्ये व्यवस्थिता ।
दमदानरता नित्यमपुत्रापि दिवं व्रजेत् ॥

इत्यनेनैव ( काला. ९२५ ) नित्यं दानरतत्वस्याभिधानात् । पूर्वोदाहृतजङ्गमं स्थावरं हेमेत्यादिवचनाच्च । यानि तु

भ्रातॄणामप्रजाः कश्चित्प्रव्रजेत म्रियेत वा ।
विभजेरन् धनं तस्य शेषास्तु स्त्रीधनं विना ॥
भरणं चास्य कुर्वीरन् स्त्रीणामा जीवनक्षयात् ।
रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु तत् ॥

इत्येवंरूपाणि च **नारदा**दिवचनानि ( दाय. २५-२६ ) तान्यविभक्तभर्तृकस्त्रीविषयाणि संसृष्टभर्तृकस्त्रीविषयाणि वा यथासम्भवं ज्ञातव्यानि तथा प्रस्तुत्य तेषां पाठात् । अविभक्तभर्तृकाः संसृष्टभर्तृकाश्च स्त्रियस्तद्भर्तृधनग्राहिणा पोषणीया इत्याह **नारदः**

यावन्तो विधवा नार्यो ज्येष्ठेन श्वशुरेण वा ।
गोत्रजेनापि वान्येन भर्तव्याश्छादनाशनैः ॥

अस्मिन्नेव विषये पक्षान्तरमप्याह **कात्यायनः** ( ९२२ )

स्वर्याते स्वामिनि स्त्री तु ग्रासाच्छादनभागिनी ।
अविभक्ते धनांशं तु प्राप्नोत्यामरणान्तिकम् ॥

**अविभक्त**ग्रहणं संसृष्टस्याप्युपलक्षणम् । **तु**शब्दोऽत्र वाशब्दार्थो निपातानामनेकार्थत्वात् । स्त्री मरणान्तिकमन्नवस्त्रभागिनी भवति । अक्लेशेन जीवनं धनसाध्यं नित्यनैमित्तिकं कर्म स्त्रीभिः कर्तुं योग्यं पूर्तादिकाम्यं कर्म च यावता धनेन सिध्यति स्वभर्तुर्धनात्तावन्तमंशं वा प्राप्नोतीत्यर्थः । अत्राद्यः पक्षः पत्नीव्यतिरिक्तभार्याविषयः स्त्रीणां जीवनमात्रोपयोगिद्रव्यभागित्वाभिधानात् । द्वितीयः पक्षः पत्नीविषय इति व्यवस्था । पत्न्यपि यदि श्वशुरादिषु शुश्रूषां न करोति तदा ग्रासाच्छादनमात्रभागिन्येव । तथा च **स** एव ( कात्या. ९२३ )

भोक्तुमर्हति क्लृप्तांशं गुरुशुश्रूषणे रता ।
न कुर्याद्यदि शुश्रूषां चैलपिण्डे नियोजयेत् ॥

**क्लृप्तांश**माच्छिद्येति शेषः । क्वचिदन्यत्रापि क्लृप्तांशापहरणं कर्तव्यमित्याह **स** एव ( कात्या. ९२८-९२९ )

अपकारक्रियायुक्ता निर्लज्जा वार्थनाशिका ।
व्यभिचाररता या च स्त्री धनं न च सार्हति ॥

व्यभिचारिणीनामशनाच्छादनभाक्त्वमपि नेत्याह **नारदः** (दाय.२६)

भरणं चास्य कुर्वीरन् स्त्रीणामा जीवनक्षयात् ।
रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु तत् ॥ इति ।

**इतरासु** व्यभिचारिणीषु । यत्तु व्यभिचारिणीनामप्यन्नवस्त्रदानविधायकं

एवमेव विधिं कुर्याद्योषित्सु पतितास्वपि ।
वस्त्रान्नमासां देयं तु वसेयुश्च गृहान्तिके ॥

इति वचनं तद्भर्तृविषयमिति वृद्धाः । शङ्कितव्यभिचारा विभक्तासंसृष्टपत्नी जीवनमात्रभागिनी । तथा च **हारीतः**

विधवा यौवनस्था चेत्पत्नी भवति कर्कशा ।
आयुषः क्षपणार्थं तु दातव्यं जीवनं बुधैः ॥ इति ।

**कर्कशा** क्रूरान्तःकरणा शङ्कितव्यभिचारेति यावत् । तदेवं वृत्त-

स्थाया विभक्तासंसृष्टपत्न्या जङ्गमस्थावरात्मकसकलभर्तृधनभाक्त्वं सिद्धम्। पत्नीनां बहुत्वे सजातीयाः पत्न्यः समं विभज्य गृह्णीयुः। ये पत्न्या भर्तृधनग्रहणे प्रतिबन्धं कुर्वन्ति ते राज्ञा दण्डनीया इत्याह **प्रजापतिः**

तत्सपिण्डा बान्धवा वा ये तस्याः परिपन्थिनः।
हिंस्युर्धनानि तान् राजा चोरदण्डेन दण्डयेत्॥

**हिंस्युः** प्रतिबध्नीयुः॥

पत्न्या अभावे दुहिता पितृधनभागिनीत्यस्मिन्नर्थे **बृहस्पतिः**

अङ्गादङ्गात्सम्भवति पुत्रवद्दुहिता नृणाम्।
सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता॥
तस्मात्पितृधनं त्वन्यः कथं गृह्णीत मानवः।

**अन्यः** पुत्रपत्नीव्यतिरिक्तः तस्यां तिष्ठन्त्यां कथं पितृधनं गृह्णीतेत्यर्थः। **मनुरपि** (९.१३०)

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत्॥

**नारदोऽपि** (दाय. ५०)

पुत्राभावेऽपि दुहिता तुल्यसन्तानदर्शनात्।
पुत्रश्च दुहिता चोभौ पितुः सन्तानकारकौ॥

**पुत्रग्रहणं** पत्न्या अप्युपलक्षणम्। केचिदाहुः। दुहितृ रिक्थभाक्त्वबोधकान्येतानि वचनानि पुत्रिकाविषयाणीति। तदसत्। तृतीयः पुत्रः पुत्रिका विज्ञायत इति **वसिष्ठ**वचनात् (१७.१५-१६) पुत्रकोटिनिविष्टायाः पुत्रिकाया औरसपुत्रवत्सत्यामपि पत्न्यां पितृरिक्थहरायाः पत्न्यभावे रिक्थग्राहिताबोधकेषु पत्नी दुहितरश्चेत्यादिवचनेषु दुहितृशब्देन ग्रहीतुमयुक्तत्वात्। दुहितॄणां बहुत्वे समं विभज्य ताभिर्ग्राह्यम्। यदि काश्चित्परिणीतास्तदा त्वपरिणीतयैव ग्राह्यम्। अपरिणीतानां बहुत्वे ताभिर्विभज्य ग्राह्यम्। अत एव **कात्यायनः** (९२६)

पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणी ।
तदभावे तु दुहिता यद्यनूढा भवेत्तदा ॥

सर्वासां परिणीतत्वेऽपि यदि काश्चित्प्रतिष्ठिताः काश्चिन्निर्धनत्वेनाप्रतिष्ठितास्तदा त्वप्रतिष्ठितयैव ग्राह्यम् । निर्धनानां बहुत्वे ताभिर्विभज्य ग्राह्यम् । अत एव **गौतमः** ( २८.२२ )—स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च—इति । **स्त्रीधनं** मातृधनम् । एतच्च पितृधनस्याप्युपलक्षणं समानन्यायत्वात् ॥

दुहितुरप्यभावे दौहित्रो धनग्राही । तथा च **विष्णुः**

अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः ।
पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रका मताः ॥

दौहित्राभावे पिता धनभाक् । तदभावे माता रिक्थहारिणी । तदभावे भ्रातरः । तदभावे भ्रातुः पुत्रः । तथा **बृहद्विष्णुः** (१७.४-९,११)—अपुत्रधनं पत्न्यभिगामि तदभावे दौहित्रगामि तदभावे पितृगामि तदभावे मातृगामि तदभावे भ्रातृगामि तदभावेऽपि भ्रातृपुत्रगामि तदभावे सकुल्यगामि—इति । **कात्यायनो**ऽपि ( ९२७ )

अपुत्रस्याथ कुलजा पत्नी दुहितरोऽपि वा ।
तदभावे पिता माता भ्राता पुत्राश्च कीर्तिताः ॥

**अपि**शब्देन दुहितृकोटिनिविष्टस्य दौहित्रस्य ग्रहणम् । **पुत्राः** भ्रातुः पुत्राः । भ्रातृष्वपि सोदरासोदरसमवाये सोदरा एव धनभाजः, तदभावे भिन्नोदराः । अत एव **मनुः** ( ९.१८७ )

अनन्तरः सपिण्डो यस्तस्य तस्य धनं भवेत् । इति ।

**बृहस्पति**रपि

बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा ।
यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेत् ॥

**ज्ञातयः** सपिण्डाः **सकुल्याः** समानोदकाः **बान्धवाः** पितृष्वस्रीयादयः ।

भ्रातृणामभावे भ्रातुः पुत्रा धनभाजः[1]। तेष्वपि सोदरभ्रातुः पुत्राः प्रथमं धनभाजः, तेषामभावे भिन्नोदरभ्रातुः पुत्रा धनभाजः । भ्रातृ-भ्रातृपुत्रसमवाये भ्रातुः पुत्राणां धनग्रहणे नाधिकारः । यदा त्वपुत्रः कश्चिद् भ्राता प्रमीतः अवशिष्टा भ्रातरो यावत्तद्धनं विभज्य गृह्णन्ति ताव-त्कथंचिदन्यस्य भ्रातुर्मरणे तत्पुत्रः पितृव्यधनग्रहणे स्वस्य पितृद्वाराधिकारः प्राप्त इति–प्रमीतपितृकाणां तु पितृतो भागकल्पना ( या.२.१२० ) इति न्यायेन तद्धनमन्यैः पितृव्यैः सह विभज्य गृह्णीयात् । भ्रातुः पुत्राणा-मप्यभावे पितामही धनग्राहिणी ।

मातर्यपि च वृत्तायां पितुर्माता धनं हरेत् ।

इति मनुनाभिधानात् ( ९.२१७ ) । यद्यप्यत्र[1] वाक्ये मातुरनन्तरं पिता-मह्येव प्रतिभाति तथापि क्रमपरे याज्ञवल्क्यवाक्ये निबद्धक्रमाणां भ्रातृसु-तान्तानां मध्ये प्रवेशाभावेन सगोत्रकोटिनिविष्टा पितामही भ्रातुः पुत्रा-णामनन्तरमस्मान्मनुवचनाद्धनग्राहिणीति ज्ञातव्यम् । न चैवं मनुवचन-विरोधः । तस्य पितामह्या धनग्रहणाधिकारप्राप्तिमात्रपरस्य क्रमपरत्वाभा-वात् । पितामह्याश्चाभावे सगोत्रेषु प्रत्यासन्नाः पितामहादयः सपिण्डा गृह्णीयुः । तेष्वप्ययं क्रमः । आदौ पितामहो धनभाक् । तस्याभावे पितृव्यः । तस्याभावे तत्पुत्रादिः । पितामहसन्तत्यभावे अनेनैव क्रमेण प्रपितामहतत्पुत्रादयो धनभाजः । तेषामप्यभावे अनेनैव क्रमेण सपिण्डेषु यः प्रत्यासन्नः स गृह्णीयात् । सपिण्डानामभावे प्रत्यासत्तिकृतेनानेनैव क्रमेण समानोदका धनभाजः[2] । ते च समानोदकाः सपिण्डानामुपरितनाः[3] सप्त पुरुषाः पूर्वपुरुषजन्मनामज्ञाने सत्यधिका वा । तथा च वृद्धमनुः[4]

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
समानोदकभावस्तु निवर्तेता चतुर्दशात् ॥
जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यते । इति ।

---

१ 'यद्यप्यत्र' इत्येतन्नास्ति ब–आदर्शे. २ 'धनभाजः ते च समानोदकाः' इत्येते शब्दाः गलिता अ–आदर्शे. ३ 'उपरितराः' इति अ–क. ४ 'बृहद्मनुः' इति ब.

समानोदकानामभावे बन्धवो धनभाजः । ते च त्रिविधा आत्मबन्धवः पितृबन्धवो मातृबन्धवश्चेति । तथाचोक्तं **स्मृत्यन्तरे**

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः ।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥
पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥
मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥

एतेष्वपि प्रथममात्मबन्धवो धनभाजः । तेषामभावे पितृबन्धवस्तेषामभावे मातृबन्धवो धनभाजः

बह्वो ज्ञातयो यत्र सकुल्या बान्धवास्तथा ।
यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेत् ॥

इति वचनात् ॥

बन्धूनामभावे आचार्यो धनग्राही । यद्यपि क्रमपरे याज्ञवल्क्यवाक्ये शिष्यस्यैव नाचार्यस्य पृथङ्निर्देशस्तथापि शिष्यग्रहणेन ततोऽपि प्रधानतमस्याचार्यस्य शिष्यापेक्षया प्रथमं धनभाक्त्वं सूचितमेवेति न विरोधः । अत एव **चापस्तम्बः** (आप.ध.सूत्र.२.६.१४.२-३)–पुत्राभावे प्रत्यासन्नः सपिण्डः[1] तदभावे आचार्य आचार्याभावेऽन्तेवासीति । आचार्याभावे शिष्यो धनभाक् तदभावे सहाध्यायी पूर्वोदाहृतयाज्ञवल्क्यवचनात् । सब्रह्मचारिणामप्यभावे ब्राह्मणधनं श्रोत्रियो गृह्णीयात् । क्षत्रियादिधनं तु राजा गृह्णीयात् । तथा च **गौतमः** (गौ.धर्मसूत्र २८. ३९)–श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन् । **विष्णुरपि** ( विष्णुधर्मसूत्र १७. १२-१३ )–तदभावे सहाध्यायिगामि । तदभावे ब्राह्मणधनवर्जं राजगामीति । **मनुरपि** (९.१८८-८९)

---

१ सपिण्डः तदभावेन्तेवासीति पठितं अ–आदर्शे.

सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः ।
त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते ॥
अहार्यं ब्राह्मणधनं राज्ञा नित्यमिति स्थितिः ।
इतरेषां च वर्णानां सर्वाभावे हरेन्नृपः ॥

**देवलो**ऽपि

सर्वत्रादायिकं[1] राजा हरेद् ब्रह्मस्ववर्जितम् ।
अदायिकं तु ब्रह्मस्वं श्रोत्रियेभ्यः प्रदापयेत् ॥

**बृहस्पति**रपि

येऽपुत्राः क्षत्रविट्शूद्राः पत्नीभ्रातृविवर्जिताः ।
तेषां धनहरो राजा सर्वस्याधिपतिर्हि सः ॥

रिक्थग्राहिणावश्यं प्रेतश्राद्धादि पित्र्यं कर्म तस्य कर्तव्यमित्याह **विष्णुः** (विष्णुधर्मसूत्र १५.४०)—यश्चार्थहरः स पिण्डदायी स्मृतः । यो यद्धनमाददीत स तस्मै श्राद्धं कुर्यात् पिण्डं च त्रिपुरुषं दद्यात् । श्राद्धशब्देनात्र प्रेतश्राद्धमुच्यते । वानप्रस्थयतिनैष्ठिकब्रह्मचारिणां धनं न पुत्रपत्न्यादयो गृह्णीयुः । किं तर्ह्यन्ये गृह्णीयुः[2] । तथा च पुत्रपत्न्याद्यपवादत्वेन तद्रिक्थग्राहकान्दर्शयति **याज्ञवल्क्यः** ( २.१३७ )

वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः ।
क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ॥

**ब्रह्मचारि**शब्देनात्र नैष्ठिको विवक्षितो यतिसाहचर्यात् । तेनोपकुर्वाणकब्रह्मचारिणो धनं पुत्रपुत्रीदौहित्राभावात् पित्रादय एव पूर्वोक्तक्रमेण गृह्णीयुः । नैष्ठिकब्रह्मचारिणो धनमाचार्यो गृह्णाति यतेर्धनं सच्छिष्यो गृह्णाति । सच्छब्देनात्राध्यात्मशास्त्रश्रवणतदर्थानुष्ठानक्रमत्वं ( क्षमत्वं? ) विवक्षितं न तु सद्वृत्तत्वं दुर्वृत्तस्याचार्यादेरपि भागानर्हत्वस्य प्रमाणान्तरेणैव प्राप्तत्वात् । वानप्रस्थधनं धर्मभ्रात्रेकतीर्थी लभते । **धर्मभ्राता** प्रतिपन्नो भ्राता समानाचार्यको वा । **एकतीर्थी** एकाश्रमी । धर्मभ्राता

१ 'सर्वत्रादायकम्' इति **ब**. २ 'किंतर्हि···ह्णीयुः' इति वाक्यं नास्ति **अ**–आदर्शे.

चासौ एकतीर्थी च धर्मभ्रात्रेकतीर्थी । एवं क्रमशब्दस्य प्रतिलोमक्रमपरत्वमाश्रित्य नैष्ठिकब्रह्मचर्यादिधनमाचार्यादयो गृह्णन्तीत्युक्तं **विज्ञानेश्वराचार्यैः** । अस्माकं तु वानप्रस्थधनमाचार्यो गृह्णीयाच्छिष्यो वा–इति **विष्णु**वाक्यदर्शनात् ( विष्णुधर्मसूत्र १७. १५-१६ ) क्रमशब्दोऽनुलोमक्रमपर इति प्रतिभाति । शिष्यस्य वानप्रस्थधनग्राहकत्वं विष्णूक्तमाचार्याभावे ज्ञातव्यम् । यत्तु–अनंशास्त्वाश्रमान्तरगताः–इति **वसिष्ठ**वचनं ( १७.५२ ) तदन्याश्रमिणो धनं यत्यादिभिर्न ग्राह्यमित्येवंपरम् । अन्यथैतद्वचनविरोधापत्तेः । यत्तु–अनिचयो भिक्षुः–इति गौतमेनाभिधानात् ( गौ.धर्मसूत्र ३.१० ) यत्यादीनां धनसम्बन्धाभावेन कथं तद्धनभाक्त्वं शिष्यादीनामभिधीयते । अत्र ब्रूमः

[1]कौपीनाच्छादनार्थं तु वासोऽपि बिभृयाद्यतिः ।
योगसम्भारभेदांश्च गृह्णीयात्पादुके तथा ॥

इति वचनाद्यतेरपि वस्त्रपुस्तकादिद्रव्यसम्बन्धो विद्यत एव ।

अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा ।
अर्थस्य निचयं कुर्यात्कृतमाश्वयुजे त्यजेत् ॥

इति वचनात् (या. ३. ४७) वानप्रस्थस्य धनसम्बन्धोऽस्त्येव । नैष्ठिकब्रह्मचारिणोऽपि शरीरयात्रार्थं वस्त्रादिद्रव्यसम्बन्धोऽस्त्येव । अतः शिष्यादीनां तद्द्रव्यभाक्त्वकथनं न विरुध्यते ॥

संसृष्टिनां मिथो विभागे ज्यैष्ठ्यादिकृतं भागवैषम्यं न भवतीत्याह **मनुः** ( ९. २१० )

विभक्ताः सह जीवन्तो विभजेरन् पुनर्यदि ।
समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते ॥

अत्र समविभागनियमनादेव विषमविभागनिराकरणे सिद्धे पुनर्ज्यैष्ठ्यं तत्र न विद्यते इत्यभिधानं ज्यैष्ठ्यादिकृत एव विषमविभागो न भवति

---

१ अस्मात्प्राक् 'अह्नो' इति शब्दो वर्तते अ–ब–क–आदर्शेषु । स च प्रमादादत्र पठित इति भाति । अनन्तरं 'अह्नो मासस्य' इति श्लोकः पठ्यत एव.

बह्वल्पधनसंसर्गे तु संसृष्टधनानुसारेण भागवैषम्यं भवतीति ज्ञापनार्थम् । केचित्तु संसर्गसमये यदीयं यावत्संसृष्टं तदनुसारेण संसृष्टद्रव्यस्य य उपचयस्तद्विभागे वैषम्यं परिकल्पनीयमस्माज्ज्ञापकात् संसृष्टद्रव्यं तु समत्वेनैव विभाज्यं तस्य तथैव विधानादित्याहुस्तदसुन्दरम् । संसृष्टद्रव्योपचयांशो वैषम्येण विभाज्यः संसृष्टद्रव्यं तु साम्येनैव तथा विधानादित्यत्र विनिगमकादर्शनात् । संसृष्टिषु विद्याशौर्यादिना योऽधिकं लभते स तस्मिन्द्रव्येंऽशद्वयभागितरे समांशभाज इत्याह **बृहस्पतिः**

संसृष्टानां तु यः कश्चिद्विद्याशौर्यादिनाधिकम्[1] ।
प्राप्नोति तस्य दातव्यो द्व्यंशः शेषाः समांशिनः ॥

एतच्च—अर्जकस्य द्वौ भागौ—इत्येतदर्थविधायकवसिष्ठादिवाक्यबलादेव (वसिष्ठधर्मसूत्र १७.५१) सिद्धौ पितृद्रव्यानुपरोधेनार्जितं यथा न विभाज्यं न तथेदं, किं तर्हि संसृष्टद्रव्यानुपरोधेन यदर्जितं तदप्यनेन प्रकारेण विभाज्यमिति ज्ञापनार्थम् । संसृष्टं द्रव्यमेषामस्तीति व्युत्पन्नः संसृष्टिशब्दः । धनसंसर्गश्च पित्रादिभिः सहैव कर्तव्यो नान्यैः सहेत्याह **बृहस्पतिः**

विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः ।
पितृव्येणाथवा प्रीत्या स तत्संसृष्ट उच्यते ॥ इति ।

संसृष्टिषु मिथो विभागकरणात्प्राथोसुतस्य (?) प्राग्मृतस्य पुत्रपौत्रेषु सुते (?) सत्सु—प्रमीतपितृकाणां तु पितृतो भागकल्पना—(या.२.१२०) इति न्यायेन संसृष्टिभ्यो विभज्य स्वपित्र्यमंशं गृह्णीयुः । यस्य संसृष्टिनो मृतस्य पुत्रपौत्रा न सन्ति तद्रिक्थग्रहणाधिकारित्वेन पूर्वोक्तक्रमेण पत्नीदुहित्रादीनां प्राप्तौ तदपवादतया संसृष्टिन एव तद्रिक्थग्राहित्वं स्वर्यातस्य ह्यपुत्रस्येति प्रकृत्य[2] दर्शयति **याज्ञवल्क्यः** (२.१३८)

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।

तुशब्दोऽत्र पत्नीदुहित्राद्यपवादत्वसूचनार्थः । अपुत्रस्य संसृष्टिनो मृतस्य धनं संसृष्ट्येव गृह्णाति न तत्पत्न्यादिरिति प्रथमपादार्थः । अस्याप्यपवादः

---

१ '०नाधिकः' इति अ—क. २ 'प्रकृत्य' इति नास्ति अ—आदर्शे.

सोदरस्य तु सोदर इति । अत्र संसृष्टिनः संसृष्टीति पदद्वयस्यानुषङ्गः । ततश्चायमस्यार्थः । यत्र सोदरोऽपि संसृष्टी भिन्नोदरोऽपि संसृष्टी तत्र सोदरसंसृष्टिन एव तद्रिक्थग्राहित्वं न भिन्नोदरसंसृष्टिन इति । संसृष्टद्रव्यविभागकाले संसृष्टिनो मृतस्य पत्न्यामविज्ञातगर्भायां पश्चादुत्पन्नस्य पुत्रस्य स्वपित्र्यंशभागित्वमस्त्येवेति सोदरो भिन्नोदरो वा संसृष्टी मृतसंसृष्ट्यंशं तस्मै दद्यात् तदभावे स्वयं गृह्णीयादित्याह **स** एव (या. २.१३८)

दद्याच्चापहरेच्चांशं जातस्य च मृतस्य च ।

**जातस्य** पुत्रस्य तत्पित्र्यंशं दद्यान्**मृतस्य** संसृष्टिनः पुत्रपौत्ररहितस्य गृह्णीयादित्यर्थः । यत्र भिन्नोदराः संसृष्टिनः सोदरास्त्वसंसृष्टिनस्तत्र विभज्य धनग्रहणं कारणस्य सोदरत्वस्यैकत्र सद्भावादपरत्र संसृष्टित्वसद्भावात । तदुभयेऽप्यपुत्रपौत्रस्य मृतस्य संसृष्टिनो धनं विभज्य गृह्णीयुरित्याह **स** एव (या. २.१३९)

अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत् ।
असंसृष्ट्यपि चादद्यात्संसृष्टो नान्यमातृजः ॥

**असंसृष्टी**तिपदस्य काकाक्षिवदुभयत्र सम्बन्धः । संसृष्ट इत्येतदप्युभयत्र सम्बध्यते । पूर्वत्रसंबद्धस्य संसृष्टशब्दस्य एकोदरसंसृष्टः सोदर इत्यर्थः । तत्र च पुंलिङ्गमविवक्षितम् । इतरत्र **संसृष्टः** संसृष्टीत्यर्थः । **अन्यमातृज** एवेति एवकारोऽध्याहार्यः । एवं चास्यायमर्थः । अन्योदर्यस्तु संसृष्टी धनं हरेन्न त्वसंसृष्ट्यन्योदर्यो धनं हरेत् । सोदरसंसृष्ट्यपि धनं हरेत्संसृष्टोप्यन्यमातृज एव न धनं हरेदिति । एतेनान्वयव्यतिरेकाभ्यामसंसृष्टिनः सोदरा भ्रातरो भगिन्यः संसृष्टिनो भिन्नोदराश्च समं विभज्य गृह्णीयुरित्युक्तम् । संसृष्टिविभागं प्रक्रम्यामुमेवार्थं स्पष्टीकृत्य दर्शयति **मनुः** (९.२११-२१२)

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।
म्रियेतान्यतरो वापि तस्य भागो न लुप्यते ॥
सोदर्या विभजेयुस्तं समेत्य सहिताः समम् ।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ॥

**हीयेत** आश्रमान्तरपरिग्रहेण ब्रह्महत्यादिदोषेण वा स्वांशग्रहणयोग्यो न भवेदित्यर्थः । न **लुप्यते** न संसृष्टिभिरेव ग्राह्यः किं तु पृथगुद्धरणीयः । **तं** उद्धृतं भागं **सोदर्या** असंसृष्टा अपि **समेत्य** देशान्तरस्थिता अपि ततः समागत्य **सहिता** मिलिता भिन्नोदराः संसृष्टाः सोदरा भगिन्यश्च **समं** न्यूनाधिकभावमन्तरेण विभज्य गृह्णीयुरित्यर्थः । अत्र च स्थावरजङ्गमात्मकोभयविधधनसद्भावे स्थावरं द्रव्यमसंसृष्टाः सोदरा भ्रातरो भगिन्यश्च विभज्य गृह्णीयुः । जङ्गमं गूढद्रव्यं प्रकटद्विपदचतुष्पदादिरूपद्रव्यं च संसृष्टा भिन्नोदरा विभज्य गृह्णीयुरिति व्यवस्था । तथा च **प्रजापतिः**

अन्तर्धनं च यद् द्रव्यं संसृष्टानां तु तद्भवेत् ।
भूमिं गृहं त्वसंसृष्टाः प्रगृह्णीयुर्यथांशतः ॥

**द्रव्य**मित्यनेन गोबलीवर्दन्यायेन प्रकटद्विपदचतुष्पदादिद्रव्यरूपस्य जङ्गमद्रव्यस्य ग्रहणम् । **संसृष्टानां** भिन्नोदराणामिति शेषः । **असंसृष्टाः** सोदरा भ्रात्रादय इति शेषः । **स्मृतिचन्द्रिकाकारस्तु**—अन्योदर्यस्तु संसृष्टी नान्योदर्याद्धनं हरेत् । असंसृष्ट्यपि वादद्यात्सोदर्यो नान्यमातृजः ॥—इति याज्ञवल्क्यवाक्यं पठित्वा केवलस्थावरसद्भावे केवलजङ्गमसद्भावे चास्माद्याज्ञवल्क्यवचनादसंसृष्टोऽपि सोदर एव गृह्णाति न त्वसंसृष्टसोदरसद्भावे संसृष्ट्यपि भिन्नोदरो गृह्णीयात् । स्थावरजङ्गमात्मकोभयविधस्य द्रव्यस्य सद्भावे मनुवचनात्प्रजापत्युक्तव्यवस्थया असंसृष्टाः सोदरभ्रात्रादयः संसृष्टा विभिन्नोदराश्च विभज्य गृह्णीयुरित्याह । अत्र स्मृतिचन्द्रिकाकारमते याज्ञवल्क्यवाक्ये पौनरुक्त्यं दुष्परिहरं स्यात् । अन्योदर्यस्तु संसृष्टी नान्योदर्यादित्यनेनोक्तस्य नान्यमातृज इत्यनेन पुनरभिधानात् । किं च मनुवचनसंवादार्थलाभे अर्थान्तरकल्पनायां मूल[1]भूतश्रुत्यन्तरकल्पनापत्त्या कल्पनागौरवदोषः प्रादुःष्यात् । यत्र तु सोदरेष्वपि केचित्सं[2]सृष्टिनः केचिदसंसृष्टिनस्तत्र धनग्रहणकारणयोः सोदरत्वसंसृष्टत्व-

१ 'मूलभूत…पत्त्या' इति नास्ति ब-आदर्शे. २ 'संसृष्टिनः…गृह्णीयुर्न त्व०' इति वाक्यभागः गलितः क-आदर्शे.

योरुभयोरपि सद्भावात्संसृष्टिनः सोदरा गृह्णीयुर्न त्वसंसृष्टिनः सोदराः । अत एव बृहस्पतिः

संसृष्टौ यौ पुनः प्रीत्या तौ परस्परभागिनौ । इति ।

**गौतमो**ऽपि (गौ.धर्मसूत्र २८.२६)—संसृष्टिनि प्रेते संसृष्टी रिक्थभाक्-इति । संसृष्टिनि प्रेते अपुत्रे इत्यनुषङ्गः । तेनायमर्थः सिद्धः । मृतस्य संसृष्टिनः पुत्रपौत्ररहितत्वे आसन्नतरेषु पत्न्यादिषु सत्स्वपि वचनबलात्तत्संसृष्टी पिता तद्धनं[1] गृह्णाति । एवं पितृव्यभ्रातृपुत्रयोः । संसृष्टिनोः पुत्रपौत्राभावे परस्परं धनग्राहकत्वम् । तथा भ्रातृणां संसृष्टिनां पुत्रपौत्राभावे मिथो रिक्थग्राहकत्वमिति । न च पितृसंसृष्टी पुत्र एव सत्यप्यसंसृष्टिनि पुत्रान्तरे पितृधनं संसृष्टित्वाद् गृह्णातीति वाच्यम् । अपुत्रसंसृष्टिमरणस्य धनग्रहणे प्रयोजकत्वात् । तस्य च पितुः सपुत्रत्वेन तत्राभावात् । न च संसृष्टिनस्तु संसृष्टीति याज्ञवल्क्यवाक्येऽपुत्रस्येति पदाश्रवणात्संसृष्टिमरणमेव प्रयोजकमिति वाच्यं, स्वर्यातस्य ह्यपुत्रस्येति वाक्योपात्तस्यापुत्रस्येति पदस्य स्वर्यातस्येतिपदवत् संसृष्टिवाक्येऽनुषङ्गात् । न च तस्यानुषङ्गो नात्र नाश्रयिष्यत इति वाच्यं सपुत्रपितृव्यादिधनस्यापि संसृष्टिभिर्भ्रातृपुत्रादिभिर्ग्राह्यत्वापत्तेः । किं चैवं पत्न्याद्यधिकारस्यापुत्रविषयत्वात् संसृष्ट्यधिकारस्य सपुत्रविषयत्वाद्भिन्नविषयत्वेनानयोरुत्सर्गापवादभावो न सम्भवतीत्यपवादत्वसूचकस्य संसृष्टिनस्त्विति तुशब्दस्य प्रयोगो न सङ्गच्छेत । अतोऽवश्यमपुत्रस्येति विशेषणं तत्राश्रयणीयम् । न च पितृव्यादिसंसृष्टिष्वपुत्रस्येति विशेषणं संभवाद् भिचाराद्यसंभवे ( ? सम्भवे ) व्यभिचारेव ( ? व्यभिचारे च ) स्याद्विशेषणमर्थवदिति न्यायेनाश्रीयते पुत्रसंसृष्टिनः पितुस्तु न तद्विशेषणमसंभवात् ततश्च संसृष्टिपुत्रस्य धनग्राहकत्वे संसृष्टिपितृमरणं प्रयोजकमस्त्येवेति संसृष्टिपुत्रेणैव तद्धनं ग्राह्यं नासंसृष्टिना पुत्रेणेति वाच्यं, संसृष्टिपितृव्यादिविषये विशेषणपुरस्कारेण विधेः प्रवृत्तिः संसृष्टिपितृविषये तु नेति पूर्वमीमांसाशास्त्रविरुद्धवाक्यभेदा-

---

१ 'तद्धनं न गृह्णाति' इति अ.

पादकविधिवैषम्यप्रसङ्गात् । किं च पित्र्यपैतामहद्रव्यार्हत्वे पुत्रपौत्रत्वं प्रयोजकं तच्च सर्वेषामविशिष्टमिति सर्वैरपि संसृष्टिपितुरंशो विभज्य ग्राह्यः । न च विभागतः पितृद्रव्यार्हत्वमपगतमिति वाच्यं विभागानन्तरमपि धनार्जनसमर्थेनापि स्वधनमसमर्थेभ्यः पुत्रेभ्यो विभज्य देयं स्वेन चासमर्थेन समर्थेभ्यः पुत्रेभ्यो ग्राह्यमित्येतदर्थप्रतिपादकेन—जीवन्नेव वा विभज्य वनमाश्रयेद्वा ( ? येद्वृद्धा ) श्रमं वा गच्छेत् स्वल्पेन वा संविभज्य भूयिष्ठमादाय वसेत् यद्युपदस्येत् पुनस्तेभ्यो गृह्णीयात् क्षीणांश्च विभजेत्—इति **हारीत**वचनेन विभागानन्तरमपि पुत्राणां पितृद्रव्यार्हत्वापगमो न भवतीति दर्शितत्वात् । न चैवं विभक्तजे सत्यपि सर्वेषां पुत्रत्वेन पितृद्रव्यग्राहकता भविष्यतीति शङ्कनीयं

अनीशाः पूर्वजाः पित्र्ये भ्रातुर्भागे विभक्तजः ।
पुत्रैः सह विभक्तेन पित्रा यत्स्वयमार्जितम् ॥
विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः ॥
यथा धने तथर्णे च दानाधानक्रयेषु च ।
परस्परमनीशास्ते मुक्त्वाशौचोदकक्रियाम् ॥

इति **बृहस्पति**वचनेन जीवद्विभागानन्तरं गर्भस्थो भूत्वा य उत्पन्नस्तस्यैव सकलपितृद्रव्यग्रहणाधिकारो नान्येषां विभक्तानामिति प्रतिपादनात् । न च यथा संसृष्टिसोदरे सत्यसंसृष्टिसोदराणां संसृष्टिधनानर्हत्वं तथा संसृष्टिपुत्रे सत्यन्येषां पुत्राणां न तद्धनभाक्त्वमिति वाच्यम् । तत्र तु केवलसोदरत्वस्यासंसृष्टिधनग्राहकत्वेऽप्रयोजकत्वात् संसृष्टित्वसहितस्य सोदरत्वस्य संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदर इति वचनबलेन प्रयोजकत्वावधारणाद्भवतु तथात्वं, पुत्रविषये तु केवलस्य पुत्रत्वस्यैव प्रयोजकत्वात् तस्य च सर्वत्र समानत्वान्न तथात्वम् । संसृष्टिवाक्यस्य तु पूर्वोक्तविधिवैषम्यप्रसङ्गान्न पुत्रविषये प्रवृत्तिर्येन संसृष्टित्वसहितस्य पुत्रत्वस्य संसृष्टिधन-

---

१ अस्मादनन्तरं 'आसन्नतरेषु पत्न्यादिषु...संसृष्टिधनार्हत्व'मिति प्रदीर्घो भागः पुनर्लिखितः ब-आदर्शे.

ग्राहकत्वे प्रयोजकता स्यात् । तस्मात् संसृष्टिनः पितुर्धनं संसृष्टिभिरसंसृष्टिभिरपि पुत्रैर्ग्राह्यमिति स्थितम् । संसृष्टिधनग्राहकेण संसृष्टिनः स्त्रियः पोषणीया दुहिता च विवाहपर्यन्तं पोषणीया संस्कर्तव्या च । तथा च संसृष्टिधनं प्रक्रम्याहतुः **शङ्खनारदौ** (नारद, दाय० २५-२७)

> भ्रातृणामप्रजाः प्रेयात्कश्चिच्चेत् प्रव्रजेत वा ।
> विभजेरन् धनं तस्य शेषास्तु स्त्रीधनं विना ॥
> भरणं चास्य कुर्वीरन् स्त्रीणामा जीवितक्षयात् ।
> रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु तत् ॥
> या तस्य दुहिता तस्याः पित्र्योंऽशो भरणे मतः ।
> आ संस्काराद्धरेद्भागं परतो बिभृयात्पतिः ॥ इति ।

**इतरासु** शय्यामरक्षन्तीषु व्यभिचारिणीष्वित्यर्थः । **आ संस्कारादि**त्यत्राङभिविधाविति विवाहमभिव्याप्येत्यर्थः । संसृष्ट्यभावे संसृष्टधनमसंसृष्टो भ्राता तदभावे माता तदभावे पिता तदभावे पत्नी गृह्णीयात् । तथा च **शङ्खः**—स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामिद्रव्यं तदभावे पितरौ हरेयातां तदभावे ज्येष्ठा पत्नी—इति । यद्यप्येकशेषात्पितरावित्यत्र न क्रमः प्रतीयते तथाप्येतत्समानार्थे मातापितराविति शब्दे मातृशब्दस्य पूर्वपाठदर्शनादस्त्येवात्र पाठक्रमः । **ज्येष्ठा** संयतत्वादिगुणयुक्ता न तु पूर्वोढा तेन न ध्यमादि( ? मध्यमादि) पत्नीनिवृत्तिः । पत्न्यभावे भगिनी तद्धनं गृह्णातीत्याह **बृहस्पतिः**

> या तस्य भगिनी सा तु ततोंऽशं लब्धुमर्हति ।
> अनपत्यस्य धर्मोऽयमभार्यापितृकस्य च ॥

**चशब्दो**ऽत्र भ्रातृमात्रभावसमुच्चयार्थः । केचित्तु या तस्य दुहितेति पठित्वा दुहिता गृह्णीतेत्याहुः । दुहिताभगिन्यभावे-अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत् ( मनु ९. १८७ )—इति पूर्वोक्तक्रमेण संसृष्टिधनं गृह्णीयुर्विशेषाश्रवणात् ॥

---

१ 'संसृष्टिधनं गृह्णातीत्याहुः' इति अ-क.

स्त्रीधनभेदानाह **मनुः** ( ९. १९४ )

अध्यग्न्यध्यावहनिकं दत्तं च प्रीतिकर्मणि ।
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥

**षड्विधग्रहणं** तु ( न्यू )नसंख्याव्यवच्छेदार्थं न पुनरधिकसंख्याव्यवच्छेदार्थम् । अत एव **याज्ञवल्क्येन** ( २. १४३ )

पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितम् ॥

इत्याद्यपदोपादानं कृतम् । **विष्णुरपि** ( विष्णुधर्मसूत्र १७.१८ ) षड्भ्योऽधिकं स्त्रीधनमाह—पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतमाधिवेदनिकं बन्धुदत्तं शुल्कमन्वाधेयकमिति । अध्यग्न्यादिस्त्रीधनस्वरूपं विवृतं **कात्यायनेन** ( ८९५-८९९ )

विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसंनिधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम् ॥
यत्पुनर्लभते नारी नीयमाना पितुर्गृहात् ।
अध्यावहनिकं नाम स्त्रीधनं तदुदाहृतम् ॥
प्रीत्या दत्तं तु यत्किञ्चित् श्वश्र्वा वा श्वशुरेण वा ।
पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते ॥
विवाहात्परतो यत्तु लब्धं भर्तृकुलात्स्त्रिया ।
अन्वाधेयं तु तत्प्रोक्तं यल्लब्धं स्वकुलात्तथा ॥
गृहोपस्करवाह्यानां दोह्याभरणकर्मणाम् ।
मूल्यं लब्धं तु यत्किंचिच्छुल्कं तत्परिकीर्तितम् ॥

गृहोपस्करादीनां यन्मूल्यं कन्यार्पणोपाधित्वेन वरादिभ्यः कन्याभरणत्वेन रूपेण लब्धं तच्छुल्कम् । **आधिवेदनिकं** अधिवेदनकाले पूर्वपरिणीतस्त्रियै दत्तम् । अत एव **याज्ञवल्क्यः** ( २. १४८ )

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यासां दत्ते त्वर्धं प्रकीर्तितम् ॥

पित्रादिभिर्जीवनार्थं स्त्रीभ्यो धनदाने विशेषमाह **कात्यायनः** (९०२)

पितृमातृपतिभ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै ।
यथाशक्त्या द्विसाहस्राद्दातव्यं स्थावरादृते ॥

स्थावरेतरधनं यथाशक्ति कार्षापणसहस्रद्वयपर्यन्तं देयमित्यर्थः । **व्यासो**ऽपि

द्विसाहस्रः परो दायः स्त्रियै देयो धनस्य च ।

**परो दाय** इत्यनेन समृद्धेनापीतोऽधिकं न देयमिति दर्शितम् । अत एवायं नियमः प्रतिसंवत्सरमसकृदर्पणे भवतीति गम्यते । तेनानेकवत्सरेषु जीवनार्थं दीयमानमितोऽधिकमपि स्थावरमपि सत्यां शक्तौ दातव्यम् । यत्त्वलङ्कारादिकमुत्सवादावेव धार्यमित्याद्युपाधिना दत्तं यच्च दायादवञ्चनार्थं दत्तं तस्यापि स्त्रीधनत्वं नास्तीत्याह **कात्यायनः** (९०३)

तत्र सोपाधि[1] यद्दत्तं यच्च योगवशेन वा ।
पित्रा भ्रात्राथवा पत्या न तत्स्त्रीधनमुच्यते ॥ इति ।

स्त्रीभिः शिल्पैर्यत्प्राप्तं यच्च पित्रादिबन्धुव्यतिरिक्तेभ्यः सखादिभ्यः प्रीत्या प्राप्तं तयोरपि स्त्रीधनत्वं नास्तीत्याह **स** एव (कात्या. ९०४)

प्राप्तं शिल्पैस्तु यत्किंचित् प्रीत्या चैव यदन्यतः ।
भर्तुः स्वाम्यं तदा तत्र शेषं तु स्त्रीधनं स्मृतम् ॥

एतेन

भार्या पुत्रश्च दासश्च निर्धनाः सर्व एव ते ।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥

इति वचनं (मनु ८.४१६) तदपि शिल्पादिप्राप्तधनविषयमेवेत्यवसेयम् । स्त्रीणां भर्तुरनुमतिमन्तरेण स्त्रीधनव्ययादौ स्वातन्त्र्यं नास्तीत्याह **मनुः** (९.१९९)

---

१ 'सोपधि' इति ब-क.

न निर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यकात् ॥
स्वकादपि च वित्ताद्धि स्वस्य भर्तुरनाज्ञया ॥

कचित्स्त्रीधने स्वातन्त्र्यमस्तीत्याह **कात्यायनः** (९०१)

ऊढया कन्यया सार्धं पत्युः पितृगृहेऽथवा ।
भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥

कन्यया ऊढया पत्युर्गृहे इत्यन्वयः ।

सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।
यस्मात्तदानृशंस्यार्थं तैर्दत्तमुपजीवनम् ॥
सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम् ।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥ (कात्या. ९०५-९०६)

**भ्रातुः सकाशात्पित्रोर्वेति** मातुः पितृवंश्यानां मातृवंश्यानां चोपलक्षणम् । भर्तृदत्ते स्थावरादन्यत्र स्वातन्त्र्यमाह **नारदः**

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत् ।
सा यथाकाममश्नीयाद्द्याद्वा स्थावरादृते ॥

भर्तृदत्तस्थावरस्योपभोगमात्रमेव स्त्रीभिर्मृताविभक्तपतिभिः कर्तव्यं न तु दानादिकमित्यर्थः । **कात्यायनो**ऽपि (९२१)

अपुत्रा शयनं भर्तुः पालयन्ती गुरौ[3] स्थिता ।
भुञ्जीतामरणाच्छान्ता दायादा ऊर्ध्वमाप्नुयुः ॥

पुरुषाणां कस्मिन्नपि स्त्रीधने न स्वातन्त्र्यं तत्स्वाम्याभावादित्याह **स एव** (कात्या. ९११-९१३)

न भर्ता नैव च सुतो न पिता भ्रातरो न च ।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः ॥
यदि त्वेकतरो ह्येषां स्त्रीधनं भक्षयेद्बलात् ।
सवृद्धिकं स दाप्यः स्याद्दण्डं चैव समाप्नुयात् ॥

---

१ 'द्यात्मयार्धं' इति अ; 'आत्मन्यया' इति ब; 'प्रत्यात्मयार्धं' क. २ त्रिष्वप्यादर्शेषु विकलोऽस्पष्टश्चायं पादः. ३ 'गुणैः स्थिता' इति अ-क.

तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम् ।
मूलमेव स दाप्यः स्याद्यदा स धनवान्भवेत् ॥

**देवलो**ऽपि भर्तुः स्त्रीधनभोगयोग्यता नास्तीत्याह

वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् ।
भोक्त्री च स्वयमेवेदं पतिर्नार्हत्यनापदि ॥
वृथा मोक्षे च भोगे च स्त्रियै दद्यात्सवृद्धिकम् ।
पुत्रार्तिहरणे वापि स्त्रीधनं भोक्तुमर्हति ॥

**वृत्ति**र्जीवनार्थं पित्रादिभिर्दत्तं धनम् । **लाभः** गौर्यादिप्रीत्यर्थं कुतश्चिल्लब्धम् । **वृथा** आपदमन्तरेण । **मोक्ष**स्त्यागो दानमिति यावत् । पुत्रग्रहणं कुटुम्बोपलक्षणम् । **आर्तिः** पीडा । अत्र पति**र्नार्हत्यनापदी**त्यभिधानात् पत्युरेवापदि स्त्रीधनभोगार्हता नान्येषामिति सूचितम् । दुर्भिक्षादौ पत्या गृहीतं स्त्रीधनमसति सामर्थ्ये न देयमित्याह **याज्ञवल्क्यः** ( २. १४७ )

दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधके ।
गृहीतं स्त्रीधनं भर्ता न स्त्रियै दातुमर्हति ॥

**धर्मकार्ये** आवश्यके इति शेषः । **संप्रतिरोधके** बन्दिग्रहणादौ । भर्त्रा आपदि गृहीतं धनं सति सामर्थ्ये स्वेच्छया देयमित्याह **कात्यायनः** ( ९१४ )

व्याधितं व्यसनस्थं च धनिकैर्वोपपीडितम् ।
ज्ञात्वा निसृष्टं तत्प्रीत्या दद्यादात्मेच्छयापि सः ।

**निसृष्टं** अनुमतं स्त्रियेति शेषः । क्वचित् स्त्रिया व्याध्याद्युपरोधे सति यत्प्रीत्यानुज्ञातं तदवश्यं पुरुषो दापनीय इत्याह **स** एव ( कात्या. ९०८-९०९ )

अथ चेत्स द्विभार्यः स्यान्न च तां भजते पुनः ।
प्रीत्या निसृष्टमपि च पतिर्दाप्यश्च तद्बलात् ॥

---

१ 'अनुमन स्त्रिये शेषः' इति अ-क.

ग्रासाच्छादनवासानामाच्छेदो यत्र योषितः ।
तत्र स्वमाददीत स्त्री विभागं रिक्थिनां तथा ॥ इति ।

इदं स्त्रिया दोषराहित्ये वेदितव्यम् । दुष्टा तु न किमपि स्त्रीधनमर्हतीत्याह **स** एव (कात्या० ९२८-९२९)

अपकारक्रियायुक्ता निर्मर्यादार्थनाशिका ।
व्यभिचाररता या च स्त्रीधनं न च सार्हति ॥

**अपकारक्रियायुक्ता** सदा भर्तुः प्रतिकूलाचरणे तत्परा । दुष्टाया स्त्रीधनानर्हत्वे यज्ञादौ लहापिवित्वाभाव ( ? ) हेतुमाह स एव

यज्ञार्थं द्रव्यमुत्पन्नं तस्माद् द्रव्यं नियोजयेत् ।
स्थानेषु धर्मयुक्तेषु न स्त्रीमूर्खविधर्मिषु ॥

पत्या प्रतिदास्यामीति प्रतिश्रुत्य यद्गृहीतं स्त्रीधनं तत्पुत्रैर्ऋणवत्ताभ्यो देयम् । तथा च स एव ( कात्या. ९१६ )

भर्त्रा प्रतिश्रुतं देयमृणवत्स्त्रीधनं सुतैः । इति ।

पुत्रादीनां स्त्रीधनग्रहणे दण्ड्यत्वं दोषसम्बन्धं चाह **मनुः** ( ८. २९, ९. २०० )

जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः ।
ताञ् शिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥
पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् ।
न तं भजेरन्दायादा भजमानाः पतन्ति ते ॥ इति ।

**धृतः** उत्सवादावेव धार्य इत्याद्युपधिमन्तरेण दायादवञ्चनादिहेतुं च विना धृत इत्यर्थः ॥

मृतायाः स्त्रिया धनं पुत्रैर्दुहितृभिश्च साम्येन विभज्य ग्राह्यम् । तथा च **मनुः** ( ९. १९२ )

जनन्यां संस्थितायां तु समं सर्वे सहोदराः ।
भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः ॥

एतच्चान्वाधेयभर्तृप्रीतिदत्तधनविषयम्[1] । अत एवोक्तं तेनैव (मनु. ९. १९५)

अन्वाधेयं च यद्दत्तं पत्या प्रीतेन चैव यत् ।
पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं भवेत् ॥

**प्रजायाः** स्त्रीपुंसरूपायाः सन्ततेरित्यर्थः । एतद्विविधधनविषये परिणीतापरिणीतपुत्रीसमवाये विशेषमाह **बृहस्पतिः**

स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी ।
अप्रत्ता चेत्समूढा तु लभते मानमात्रकम् ॥

**अपत्यानां** पुत्राणाम् । **तदंशिनी** पुत्रसमांशिनी । **समूढा त्वि**त्यादि परिणीता तु मानानुसारेण किमपि लभते न तु पुत्रसमांशमित्यर्थः । अप्रत्तानामभावे प्रत्ताभिरविधवाभिर्भ्रातृभिः सह विभज्य ग्राह्यमित्याह **कात्यायनः** (९१७)

भगिन्यो बान्धवैः सार्धं विभजेरन्सभर्तृकाः ।

एतद्धनविभागकाले दौहित्रीभ्योऽपि तस्मादुद्धृत्य किञ्चिद्देयम् । तथा च **मनुः** (९. १९३)

यास्त्वासां स्युर्दुहितरस्तासामपि यथार्हतः ।
मातामह्या धनात्किंचित्प्रदेयं प्रीतिपूर्वकम् ॥ इति ।

यौतकाख्यं मातृधनमप्रत्तानामेव दुहितॄणामप्रत्ताभिरेव दुहितृभिर्ग्राह्यं न पुत्रैर्न वा प्रत्ताभिः । तथा च **स** एव (मनु ९. १३१)

मातुस्तु यौतकं यत्स्यात्कुमारीभाग एव सः ॥

**यौतकं** विवाहादिकाले एकत्रासन उपविष्टाभ्यां लब्धमत एवोक्तं **निघण्टुकारै**र्युतयोर्यौतकमिति ।

अन्वाधेयभर्तृप्रीतिदत्ताभ्यामन्यद्द्ध्यग्न्यादिस्त्रीधनं दुहितर एव गृह्णीयुः । तासु च प्रत्ताप्रत्तासमवाये सत्यप्रत्ता एव गृह्णीयुस्तासामभावे प्रत्तास्वप्यनपत्यत्वेन निर्धनत्वेन या अप्रतिष्ठितास्ता एव गृह्णीयुः । अत

---

१ 'भर्तृप्रीति…धनविषये' इति भागो गलितो ब–आदर्शे.

एव **गौतमः** (२८.२२)—स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च—इति । दुहितॄणामभावे बहुतरस्वयवयवत्वाद् दौहित्र्यो गृह्णीयुः । तासामप्यभावे दौहित्रा गृह्णीयुः । तथा[1] च **नारदकात्यायनयाज्ञवल्क्याः** (या.२. ११७, नारद, दाय० २)

मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः ।

**अन्वयः** सन्ततिः । सा च संनिधानाद्दुहितुरित्यवगम्यते । **ऋणाच्छेष**मित्यभिधानान्मातुर्ऋणसद्भावे ऋण[2]न्यूनमृणसमं च पुत्रपौत्रैर्ऋणं देयमिति याज्ञवल्क्यवचनात् (२.५०) मातृकृतर्णापाकरणाधिकारिभिः पुत्रपौत्रैर्ग्राह्यम् । यदृणाधिकमस्ति तदर्णदानानन्तरमवशिष्टं दुहित्रादिभिर्ग्राह्यम् । ऋणाभावे तु सर्वमेव ग्राह्यमित्यवगम्यते । **नारदो**ऽपि (दाय० २)

मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः ।

भिन्नमातृकाणां दौहित्रीणां दौहित्राणां च मातृद्वारांशप्रतिकल्पना कार्या । प्रतिमातृ वा स्वस्ववर्गे—इति **गौतमे**नाभिधानात् । (गौ. धर्मसूत्र २८. १५) । दुहितृदौहित्रीदौहित्राणामभावे पुत्रा गृह्णीयुः

विभजेरन् सुताः पित्रोरूर्ध्वं रिक्थमृणं समम् ।

इति **याज्ञवल्क्य**वचनात् (२. ११७) ।

दुहितॄणामभावे तु रिक्थं पुत्रेषु तद्धनम् ।

इति **कात्यायन**वचनाच्च । पुत्राणामभावे पुत्रपौत्रैर्ऋणं देयमिति वचनात्पितामह्यृणापाकरणेऽधिकारिणः पौत्रास्तद्धनभाजः ॥ अनपत्यस्त्रिया धनमुत्तमजातीयसजातीयस्य (?) पत्नीदुहिता गृह्णीयात् तदभावे तदपत्यं गृह्णीयात् । तथा च **मनुः** (९. १९८)

स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथंचन ।
ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत् ॥

**ब्राह्मणी**ग्रहणं हीनजाती( ति ? )व्यतिरिक्तकन्योपलक्षणम् । ब्राह्मादिविवाहसंस्कृतानपत्यतदपत्यरहितस्त्रीधनं भर्ता गृह्णीयादित्याह **मनुः** (९. १९६)

१ 'तथा च कात्यायनयाज्ञवल्क्याः' इति ब. २ 'ऋणं न्यूनमृणं समं च' इति अ-ब-क.

ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम् ।
अतीतायामप्रजसि भर्तुरेव[1] तदिष्यते ॥

आसुरादिविवाहप्राप्तायास्तु धनं मातापितृगामि । तथा च स एव (मनु ९.१९७)

यत्त्वस्यै स्याद्धनं दत्तं विवाहेष्वासुरादिषु ।
अतीतायामप्रजसि मातापित्रोस्तदिष्यते ॥

अनपत्यमातृष्वस्रादिधनं पुत्रतुल्या भागिनेयादयो गृह्णीयुरित्याह **बृहस्पतिः**

मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा ।
श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः ॥
यदासामौरसो न स्यात्सुतो दौहित्र एव वा ।
तत्सुतो वा धनं तासां स्वस्रीयाद्याः समाप्नुयुः ॥

**यद्धनं दत्त**मिति विवाहकालप्राप्तधनस्योपादानमाधिवेदनिकादिस्त्रीधनान्तरस्याप्युपलक्षणम् । अत एवाह **याज्ञवल्क्यः** (२.१४३)

आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितम् ।
अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः । (या. २.१४४)

इति सामान्येनाभिधाय व्यवस्थामाह

अप्रजस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि ।
दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत् ॥ (या. २.१४५)

**चतुर्षु** इत्युपलक्षणम् । गान्धर्वविवाहेऽपि भर्तुः स्त्रीधनग्राहकत्वस्य **मनुना**भिधानात् (९. १९६) । आसुरादिविवाहेषु पितृव्यादिबन्धुलिन्नं (दत्तं ?) तैरेव ग्राह्यं तेषामभावे भर्त्रेत्याह **कात्यायनः** (९१८) बन्धुदत्तं तु बन्धूनामभावे पुत्रगामि (भर्तृगामि ?) तत्—इति । शुल्काख्यं स्त्रीधनं सोदरा एव गृह्णीयुः । तदभावे माता गृह्णातीत्याह **गौतमः** (गौ. धर्मसूत्र २८. २३)—भगिनीशुल्कं सोदर्याणा-

---

१ 'कर्तुरेव' इति अ.

मूर्ध्वं मातुः—इति । यत्तु—स्वं च शुल्कं वोढा इति **शङ्खवचनं** तद्विवाहात्प्राङ्मृतायां द्रष्टव्यम् । अत एव **याज्ञवल्क्यः** (२.१४६)

मृतायां दत्तमादद्यात्परिशोध्योभयव्ययम् । इति ।

यत्तु कन्यायै मातामहादिभिर्दत्तं कटकादिकं तत्सोदरा भ्रातरो गृह्णीयुरित्याह **बौधायनः**

रिक्थं मृतायाः कन्याया गृह्णीयुः सोदराः समम् ।
तदभावे भवेन्मातुस्तदभावे पितुर्भवेत् ॥

अनपत्यपुत्रिकाधनं सोदरेण ग्राह्यं न तु भर्त्रेत्याह **पैठीनसिः**—प्रेतायां पुत्रिकायां न भर्ता द्रव्यमर्हत्यपुत्रायां कुमार्यां च भ्रात्रा तद्ग्राह्यम्—इति । यत्तु

अपुत्रायां मृतायां तु पुत्रिकायां कथंचन ।
धनं तत्पुत्रिकाभर्ता हरेतैवाविचारयन् ॥

इति **मनुवचनं** (मनु ९. १३५) तत्पश्चादुत्पन्नस्यौरसस्य भ्रातुरभावे ज्ञातव्यम् ॥ इति श्रीकोदण्डपरशुरामेति····व्यवहारविवेकोद्योते दायभागव्यवहारपदनिरूपणम् ॥ ३३ ॥

## अथ द्यूतसमाह्वयाख्यव्यवहारपदनिरूपणम् ।

तत्र तत्स्वरूपं दर्शयति **नारदः** (द्यूत० १)

अक्षवध्रशलाकाद्यैर्देवनं जिह्मकारितम् ।
पणक्रीडा वयोभिश्च पदं द्यूतसमाह्वयम् ॥

**अक्षाः** पाशाः । **वध्रश्चर्ममयी** पट्टिका । (शलाकाः) दन्तादिकृता दीर्घचतुरस्रा देवनविशेषाः । **आद्यशब्देन** कपर्दिकादीनां ग्रहणम् । एतैः पणपूर्वकं जिह्मकारितं द्यूतं **वयोभिः** कुक्कुटादिभिः पक्षिभिः पणपूर्वकं कृतं देवनं समाह्वयाख्यमित्यर्थः । **वयोग्रहणं** प्राणिमात्रोपलक्षणम् । **बृहस्पतिः**

अन्योन्यपरिगृहीताः पक्षिमेषवृषादयः ।
प्रहरन्ते कृतपणास्तं वदन्ति समाह्वयम् ॥

**आदिशब्देन** मल्लादीनां ग्रहणम् । **मनुरपि** (मनु ९. २२३)

---

१ अतः परं नास्ति किंचिदपि अ-क-आदर्शयोः.

अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियते यत्तु स विज्ञेयः समाह्वयः ॥

द्यूतसमाह्वयौ राज्ञा निवर्तनीयावित्याह स एव ( मनु ९. २२१, २२२, २२७–२२८ )

द्यूतं समाह्वयं चैव राजा राष्ट्रे निवारयेत् ।
राष्ट्रान्तकरणावेतौ द्वौ दोषौ पृथिवीभृताम् ॥
प्रकाशमेतत्तास्कर्यं यद्देवनसमाह्वयौ ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान्भवेत् ॥
द्यूतमेतत्पुराकल्पे दृष्टं वैरकरं महत् ।
तस्माद् द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥
प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत यो नरः ।
तस्य दण्डविकल्पः स्याद्यथेष्टं नृपतेस्तथा ॥

**दण्डविकल्पो** दण्डविनिर्णयः । इष्टमिच्छा भावे क्तः । **याज्ञवल्क्यः** ( २. २०३ ) तस्करज्ञानार्थं राज्ञा स्वपुरुषस्य पुरतो द्यूतसमाह्वयौ प्रवर्तनीयावित्याह

द्यूतमेकमुखं कार्यं तस्करज्ञानकारणात् ।
एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये ॥

मवम्य (?) निवर्तनीयं यदि कथंचिच्चौरज्ञानार्थं कार्यते तदा तोरणादिप्रकाशचिह्नयुक्तस्थले कारयितव्यमित्याह **कात्यायनः** ( ९३३-९३५ )

द्यूतं नैव तु सेवेत क्रोधलोभविवर्धनम् ।
असाधुजननं क्रूरं नराणां द्रव्यनाशनम् ॥
ध्रुवं द्यूतात्कलिर्यस्माद्विषं सर्पमुखादिव ।
तस्माद्राजा निवर्तेत विषये व्यसनं हि तत् ॥
( वर्तेत चेत्प्रकाशं तु ) द्वारावस्थिततोरणम् ।
असंमोहार्थमार्याणां कार[1] ( येत्तत्करप्रदम् ॥ )

---

१ अत्रैव समाप्तिर्बे–आदर्शस्य.

# NOTES.

N. B. Bṛ. stands for the edition of the fragments of Bṛhaspati collected together by Rao Bahadur Prof. K. V. Rangaswami Aiyangar published in the Gaekwad's Oriental Series. Kalpataru stands for the edition of that part of the work on Vyavahāra which is being edited by the same learned author and is about to be published in the same series.

P. 2 प्रयत्नसाध्ये – This verse occurs in कल्पतरु p. 40,, अपरार्क p. 596, स्मृतिच. II p. 1 and परा. मा. III p. 6 and in numerous other works and is variously explained. Kalpataru and Aparārka offer only one explanation. The व्यव. प्र. p. 4 refers to both the explanations given in the text.

P. 2 याज्ञवल्क्य......व्यवहारपादत्वाभिधानात् – vide या. II. 8 and बृहस्पति p. 3. बृहस्पति's verse is : पूर्वपक्षः स्मृतः पादो द्वितीयस्तूत्तरस्तथा । क्रियापादस्तथा वाच्यश्चतुर्थो निर्णयस्तथा ॥ q. by अपरार्क p. 616, परा. मा. III. p. 16 and other works.

P. 3 मनुः प्रजापति...भुजत् – This verse is not found in the printed नारद (Jolly's ed.) p. 3 where it is stated that the first verse of the section on Vyavahāra as composed by नारद began with the verse धर्मैक०.

P. 3 धर्मशास्त्र...विवेचनम् – व्यव. प्र. p. 8 reads धर्मशास्त्रानुसारेण अर्थशास्त्रविवेचनम्.

P. 3 बृहस्पतिना द्विपात्संप्रतिपत्तिषु – vide Bṛ. p. 29 verse 3.

P. 5 मनुष्य...चतुर्विधम् – vide Bṛ. p. 183 verse 2 which reads चौर्यं for स्तेयम्.

P. 5 निरन्वयं रक्षिजनरहितमिति मेधातिथिना व्याख्यातम् – The editions of both Mandlik and Gharpure do not exhibit this explanation.

P. 6 बृहस्पतिः – दुर्गमध्ये० – vide Bṛ. p. 8 verses 45–47.

P. 7 सम्राड्विवाकः...धर्मतः - व्यवहारतत्त्व p. 198 reads सम्राड्... पुरोहितः । स्वयं स राजा विनुयात्तेषां जयपराजयौ ॥

P. 7 प्राड्वि...बृहस्पतिना विवादे पृच्छति – vide Bṛ. p. 11 verse 69.

P. 7 गौतमस्तु राजा सप्राड्विवाकः – This appears to be part of a sūtra. गौतम XIII. 26 is राजा प्राड्विवाको ब्राह्मणो वा शास्त्रवित्. The words वादिप्रति...विवाक इति are an etymological explanation of प्राड्विवाक which closely follows हरदत्त on गौतम XIII. 26.

P. 8 राजा तु...सद्वा इव – व्यव. प्र. p. 29 reads पुङ्गवा इव, but notes 'मदनरत्ने तु सद्वा इति पाठः। सद्वा उत्तमऋषभा इति व्याख्यातम् । कल्पतरावपि सद्वा इत्येव पाठः ।'; vide कल्पतरु p. 27.

P. 8 Verses लोकवेदाङ्ग॰ and देशाचारानभिज्ञा ये are respectively Bṛ. p. 10 verse 59 and p. 11 verse 64.

P. 9 शब्दाभिधान॰ is Bṛ. p. 13 verse 81.

P. 9 कात्यायन's verses कुलशील॰ and श्रोतारो॰ approximate to the jury system of modern times.

P. 9 आकारणे रक्षणे – is Bṛ. p. 13 verse 82.

P. 10 राजा कार्याणि – is Bṛ. p. 11 verse 65.

P. 10-11 The verses नृपाधिकृत...सभाध्वरसंमिता are Bṛ. pp. 13–14 verses 83–90 except 86 and Bṛ. omits the half-verse कुर्याद...सदा.

P. 11 पूर्वामुखस्तूपविशेत् – This is Bṛ. p. 18 verse 109.

P. 11 The verses राज्ञो ये...बुद्ध्यः occur in Bṛ. pp. 15–16 verses 92–96 except the half-verse एषामग्रे.

P. 12 ये चारण्यचरास्ते – Vide Bṛ. p. 12 verse 73.

P. 12 भागत्रयमेतदुत्तरमावर्तनात्प्राचीनम् – 'आवर्तनं दिनमध्यं' अपरार्क p. 429; मध्यन्दिनादूर्ध्वमहरावर्तनमित्याहुः says रुद्रस्कन्द on खादिरगृह्य I. 2. The स्मृतिच॰ II p. 363 quotes स्कन्दपुराण 'आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परम्'.

P. 12 पूर्वाह्णे तामधिष्ठाय – vide Bṛ. p. 19 verse 115

P. 12 धर्मशास्त्र...स्मृतः – The व्यवहारतत्त्व p. 12 explains : युक्तिर्न्यायः, स च लोकव्यवहार इति व्यवहारमातृका.

P. 13 केवल...विचारयेत्-These occur in Br. pp. 19-20 114, 116-117. The story of माण्डव्य is referred to in कौटिल्य's अर्थशास्त्र IV. 8, in आदिपर्व 63. 92-93. Vide H. of Dh. vol. III p. 255 for other references to माण्डव्य. The verses चोरोऽचोरो० and असत्याः० are very similar to नारद (व्यव. मातृका I. 42 and 71).

P. 14 देशजातिकुलानां...दमार्हकाः - These are Br. p. 21 verses 126 (latter half) - 130 In some digests (such as the कल्पतरु p. 21, व्यव. नि. p. 16, व्यव. प्र. p. 22) a half line is added before अनेन कर्मणा viz खशजाताः प्रगृह्णन्ति (or खशजाः) भ्रातृभार्यामभर्तृकाम्. कल्पतरु (p. 21) reads पूर्वे for सर्वे. अनेन कर्मणा... दमार्हकाः - This is variously interpreted. The मदनरत्न holds that in the respective countries those following the special usages are neither liable to undergo penances nor punishment by the king. व्यव. प्र. p. 22 refers expressly to these views of the मदनरत्न and gives its own opinion that there is no punishment by the king, but a penance is necessary for other worldly purposes. Vide व्यव. म. p. 7 where the view of the मदनरत्न is referred to as 'यत्त्वत्र प्रायश्चित्तादिस्मरणं तदेतद्वाक्यानुपात्तदेशपरमिति केचित्'.

P. 15 कीनाशाः कारुकाः - This is Br. p. 12 verse 74.

P. 16 तपस्विनां तु - This is Br. p. 12 verse 76.

P. 16 सम्यग्विज्ञानसम्पन्नेनेति तृतीयान्तं पदम् - These very words occur in व्यव. प्र. p. 23.

P. 16 गुरुशिष्यौ - vide Br. p. 21 verse 124. व्यव. प्र. (pp. 34-35) refers to the view of the मदनरत्न and does not accept it as correct.

p. 16 यस्याभियोगं - This is Br. p. 23 verse 141.

P. 17 उत्पादयति यो हिंसां - The स्मृतिच. II p. 34 ascribes this verse to व्यास.

P. 18 माधवीये तु – vide परा. मा. III. p. 48, where, however, the printed text has दुर्देशो॰

P. 19 शत्रोद्वाहोद्यतो – vide Bṛ. p. 22, verses 136–37. परा. मा. III p. 49 reads सत्रोद्वाहोद्यतो and स्मृतिच. II p. 30 reads समुद्राहोद्यतो, both of which make good sense.

P. 20 कालं देशं च – vide Bṛ. p. 25 verse 154. परा. मा. III p. 50 reads 'शनैर्यानैराह्वानयेत्'; व्यव. प्र. p. 40 also reads in the same way.

P. 20 आहूतो यत्र नागच्छेत् – vide Bṛ. p. 24, verse 144.

P. 21 अहंपूर्विकया – vide Bṛ. p. 27, verse 172.

P. 21 अप्रगल्भजडोन्मत्त – vide Bṛ. p. 23 verse 142.

P. 22 ब्रह्महत्यासुरापाने – अपरार्क p. 639 reads असह्यवादेषु, स्मृतिच. II p. 34 'असभ्यवादेषु', व्यव. प्र. p. 40 अतिपापेषु. व्यव. प्र. p. 40 and व्यव. म. p. 12 repeat the explanation of the मदनरत्न 'पुनःस्तेयग्रहणं' etc.', but व्यव. प्र. does not approve of it.

P. 22 पूर्वोत्तरेऽभिलिखिते – vide Bṛ. p. 40 verse 31.

P. 23 इति वदता महाभाष्यकारेण – The words of the महाभाष्य are 'न हि प्रयतनं प्रयत्नः। किं तर्हि प्रारम्भो यत्नस्य प्रयत्नः' vol. I. p. 61 ( Kielhorn ). व्यव. प्र. p. 43 mentions the explanation given by the मदनरत्न and by विज्ञानेश्वर, but rejects the former. The व्यवहारतत्त्व p. 202 states 'राजदन्तादित्वात् कार्यशब्दस्य पूर्वनिपातः'.

P. 24 नैव रिक्थी... चैवान्यत्र वासिनः – व्यव. प्र. p. 43 reads अत्यन्तवासिनः and explains 'नैष्ठिकब्रह्मचारिण इति मिताक्षरादिषु' and then (p. 44) refers to the explanation of अन्यत्रवासिनः as read by the मदनरत्न.

P. 26 The printed कल्पतरु ( p. 80 ) reads अदेशं यश्च दिशति and explains 'अदेशो यत्रार्थिप्रत्यर्थिनौ न तस्मिन्काले स्थितौ' which does not tally with what is stated in the text as the view of the कल्पतरु. The स्मृतिच. II p. 48 explains अदेश्यं as 'निर्णयसमयासम्भविनं साक्षिणं यो निर्दिशति'.

P. 26 सन्ति ज्ञातार इत्युक्त्वा – The printed editions of मनु ( 8. 57 ) read साक्षिणः सन्ति मेत्युक्त्वा. The कल्पतरु reads सन्ति ज्ञातार इत्युक्त्वा as in the text. The व्यव प्र. p. 75 remarks : सन्ति ज्ञातार इत्युक्त्वेति कल्पतरुलिखितस्त्वनाकर एवाचार्यमेधातिथिभ्यामधृतत्वादिति ध्येयम्. But it may be noted that even so early a writer as नारद ( व्यव. मातृका I. 61 ) reads 'सन्ति ज्ञातार इत्युक्त्वा'. Jha's ed. reads ज्ञातारः...मेत्युक्त्वा.

P. 28 आचारकरणे etc. These two verses are Bṛ. p. 42 verses 40-41.

P. 28 उभयोर्लिखिते वाक्ये – This is ascribed to कात्यायन by अपरार्क p. 615, स्मृतिच. II. p. 48, परा. मा. III p. 84.

P. 23 साक्षिणस्तु – vide Bṛ. p. 41 verses 33–35. Read साक्षिपराजितः for साक्षी पराजितः.

P. 29 पलायनानुत्तरत्वात् – This is Bṛ. p. 97 verse 22.

P. 30 पूर्वोत्तरे संनिविष्टे – This is Bṛ. p. 42 verse 42.

P. 30 पूर्वोत्तरेऽभिलिखिते – The three are Bṛ. pp. 42–43 verses 43–45 with variations. These are ascribed to कात्यायन in व्यव. नि. p. 63.

P. 31 श्रुत्वा पूर्वोत्तरं – This is Bṛ. p. 45 verse 5.

P. 31 द्विप्रकारा क्रिया...नवविधा स्मृता – These are Bṛ. p. 46 verses 6, 8 ( first half ), p. 80 verse 2( b ).

P. 32 l. 5 स्थालीपुलाकन्यायेन – This न्याय is very old, as it occurs in जैमिनि VII. 4. 12 'लिङ्गस्य पूर्ववत्त्वाच्चोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थालीपुलाकेन'.

P. 33 दत्त्वादत्ते तथादत्ते – This verse presents various readings. Vide my edition of कात्यायन verse 227.

P. 34 मणिमुक्ता॰ – These two verses are Bṛ p. 47 verses 15–16. The व्यव. नि. p. 77 reads महापापाभियोगेषु. व्य. म. p. 22 reads महा...शापेषु विद्यमानेषु साक्षिषु । दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः.

P. 34 चिरन्तनोपांशु॰ – This is Bṛ. p. 48 verse 21 which reads प्रदुष्टेष्वनुमानेषु which is the reading in परा. मा. III. p. 90.

P. 35 लिखिते...दिव्यं विशोधनम् – This is Br. p. 47 verse 17 and नृप...क्रियाम् is Br. p. 47 verse 14.

P. 35 प्रक्रान्ते...काम्ययक्ष – These two are Br. p. 48 verses 19–20. They are ascribed to कात्यायन by परा. मा. III. p. 91 and the first is ascribed to कात्या० by अपरार्क p. 629 and ऋणे लेख्यं साक्षिणो वा to कात्या० by व्यव. नि. p. 73 and स्मृतिच. II. p. 51.

P. 36 लिखितो...द्वादशधा स्मृतः – These are Br. pp. 49–50 verses 4–5.

P.37-32 जातिनामा...ग्रामस्तत्र न संशयः – These are Br. pp. 50–51 verses 6–13, 15, 16–18 with variations. The text of Br. reads अर्थिना च क्रिया भेदैः. व्यव. प्र. p. 109 notes that कल्पतरु and मदनरत्न read 'अर्थिक्रियां क्रियाभेदैः' and explains that as 'अर्थिक्रियामर्थव्यवहारं क्रियाभेदैः प्रमाणविशेषैराप्तवाक्यादिभिः तस्य कृत्वा तत्सम्बन्धितयावधार्य'.

P. 39 नव सप्त पञ्च...त्कदाचन – This is Br. p. 49 verse 1.

P. 39 लिखितौ द्वौ...ध्यक्षस्तथैव च – These two are Br. p. 53 verses 19–20.

P. 40 l. 3. व्यव. प्र. p. 113 accepts the explanation of याचिते given by the मदनरत्न in preference to that of वाचस्पति who took याचिते as an adjective of निक्षेप.

P. 40 धर्मज्ञाः पुत्रिणो मौलाः – व्य. प्र. p. 110 accepts the explanation of मौलाः given by the कल्पतरु and rejects that given by the मदनरत्न 'मौलाः प्रख्यातकुलोद्भवा इति कल्पतरुः । मूलं पूर्वं...इत्यणिति मदनरत्ने । वक्ष्यमाणयाज्ञवल्क्यवचनसंवादात्साक्षित्वेनैव पूर्ववृत्तान्तवेदित्वाक्षेपात्तद्र्थकमौलपदानर्थक्यप्रसङ्गाच्च कल्पतरुव्याख्यानमेव सम्यक्'.

P. 40 आप्ताः शिष्टा विबुद्धा ये – व्यव. प्र. p. 111 notices the explanation of विबुद्धाः given by the मदनरत्न and offers its own explanation 'विबुद्धा विवादविषयीभूतार्थज्ञानवन्तः शास्त्रार्थज्ञानवन्तश्च । मतिबुद्धिपूजार्थेभ्यश्च इति कर्तरि क्तः ।'

P. 42 न साक्षी नृपतिः कार्यः – Vide H. of Dh vol. III p. 336 n. 495 for the English law about a sovereign being cited as a witness.

P. 42 दासनैकृतिकाश्रद्ध – The printed नारद reads अश्राद्ध, which is explained as न श्राद्धमर्हतीति by the com.

P. 43 गरदाग्निदकीनाशशूद्रापत्युपपातकाः । ......निर्धूतान्तावसायिनः – The printed edition reads शूद्रापुत्रौपपातिकाः...निर्धनान्त्यावसायिनः.

P. 43-44 व्यव. प्र. ( pp. 118–119 ) cites many of the explanations of the मदनरत्न and in some cases contrasts them with those of the कल्पतरु and some other works. व्यव. प्र. p. 118 gives the explanation of एकस्थालीसहाय offered by वाचस्पतिमिश्र and चण्डेश्वर and by the मदनरत्न. As to p. 44 ll. 2–3 व्यव. प्र. p. 118 quotes the explanation of अरिचर by the मदनरत्न and the reading अरिधर of the कल्पतरु and its explanation as शस्त्रधारी ( vide कल्पतरु p. 111 ). मदनरत्न explanation of कीनाश and of उपपात is quoted by व्यव. प्र. p. 118 and the conflicting view of कल्पतरु as to the latter is quoted: उपपातितः उपपातकीति कल्पतरुः । मदनरत्ने तूपपातक इति पठितम्। उप...पातकयुक्त इति व्याख्यातं च. लोकभयशून्य इति प्राच्याः – व्यव. प्र. p. 118 ascribes this explanation to भवदेव, who was an eastern writer.

P. 43. The printed नारद ( ऋणादान 185 ) reads वधकश्वर्मकृत् पङ्गुः. मूलिको मूलमत्र...कल्पतरौ – vide कल्पतरु p. 111. The text of नारद ( ऋणादान 156 ) reads श्रेण्यादिषु च सर्वेषु... तेभ्य एव न साक्ष्यं स्याद् द्वेष्टारः सर्वे एव ते ॥

P. 43-44 Out of these eight verses five are found in the printed नारद and the verses श्रोत्रियाद्या वचनतः, स्वयमुक्तिरनिर्दिष्टः, स्मृतिमत्साक्षिसाम्यं तु are not in it.

P. 46 l. 19 ff – कथितेऽभिहिते...स्मरत – This is a metrical वार्तिक on अकथितं च ( पाणिनि I. 4. 51 ). Vide Kielhorn's ed. of the महाभाष्य vol. I p. 335.

P. 47 साक्षिणां लिखितानां च – व्यव. प्र. p. 115 cites the explanation of this verse given by the मदनरत्न and disapproves of it.

P. 48 l. 3 क्रियाप्यसम्भवे॰ is मनु 8. 70.

P. 48 l. 23 अनभिसम्बद्धाः...अपक्षपातिन इति यावत् – This explanation is given by व्य. म p. 38 and व्यव. प्र. p. 120 expressly mentions it as given by the मदनरत्न.

P. 49 साक्षिणोर्थिसमु॰ is Bṛ p. 53 verse 21 with variations.

P. 49 साक्षिदोषाः – This and the following three verses are ascribed to व्यास here and in व्य. म. p. 38 also and to कात्यायन in परा. मा. III. p. 106 and they occur in Bṛ. p. 54 verses 23–25, 27; while व्यव. प्र. p. 122 assigns the verse साक्षिदोषाः to both व्यास and बृहस्पति and the two verses अभावयन् (reads असाधयन्) and जितः सविनयं to व्यास alone. Other digests also differ from each other as to the authorship of these verses.

P. 50 l. 5 सविनयं etc. – व्य. प्र. p. 123 quotes मदनरत्न's explanation of this and discards it.

P. 51 लेख्यदोषास्तु – This is Bṛ. p. 54 verse 22.

P. 51 लेख्यं वा साक्षिणो – This is Bṛ. p. 54 verse 29.

P. 52 उपस्थिताः – This half verse is Bṛ. p. 56 verse 43.

P. 52 त्वरमाण इवाविद्धं – स्मृतिच. II p. 85 and परा. मा. III. p. 107 read इवात्यर्थं, while व्य. म. p. 40 and व्यव. प्र. p. 124 read इवाबद्धं and the latter notes that मदनरत्न read इवाविद्धम्.

P. 53 देवब्राह्मण etc. – These three verses are कात्या॰ 344, 342, 343. The first two are quoted as कात्यायन's by the मिता. on या. II. 73. कल्पतरु p. 124, व्यव. नि. p. 111–112 and परा. मा. III. p. 107–108, 111 ascribe them to मनु. व्यव. प्र. p. 125 ascribes all three to कात्यायन and व्य. म. p. 40–41 ascribes to both मनु and कात्या॰.

P. 53 वधे चे...च्छिवसंनिधौ – This is the reading of कल्पतरु p. 136, व्य. म. p. 41, व्यव. प्रे. p. 125 and others, but परा. मा. III p. 113 reads शवसंनिधौ, which is decidedly preferable. But the weight of authority is against it and it is probably an emendation.

P. 55 सत्यप्रशंसा – These two verses occur in Bṛ. p. 55 verses 32–33.

P. 56 पशुवत्क्षौद्रघृतयोः – This verse does not occur in the printed मनु nor in नारद. The व्यव. नि. p. 118 and कल्पतरु p. 133 contain it, the first attributing it to both मनु and नारद and the latter to मनु alone.

P. 57 ये व्यपेताः स्वकर्मभ्यः – This does not occur in the printed मनुस्मृति. The व्यव. म. p. 42 does ascribe it to मनु.

P. 57 विहायोपानदुष्णीषं – This is Bṛ. p. 56 verse 42.

P. 57 देशकाल० – These four verses are Bṛ. p. 57–58 verses 49–50 and 52 in a different order.

P. 59 यत्र वै भावितं etc – The मदनरत्न and अपरार्क p. 679 quote these verses of कात्यायन and construe या. II. 80 in accordance with कात्यायन's verse. व्यव. म. p. 134 refers to this explanation of the मदनरत्न but prefers विज्ञानेश्वर's explanation of या. II. 80.

P. 60 कूटसाक्ष्यं तु – vide व्यव. प्र. p. 136 for a reference to मदनरत्न here.

P. 62 कूष्माण्डैर्वापि जुहुयात् – The कूष्माण्डमन्त्रs occur in तै. आ. II. 3–6 ( beginning with यद्देवा देवहेडनम् ) and the कूष्माण्डहोम itself is set out in तै. आ. II. 7–8.

P. 62 साक्षिणामेष etc. These three are Bṛ. p. 59 verses 1, 2 and 4 ( with variant readings ).

P. 63 भागदानक्रयाधान० – This is Bṛ. p. 60 verse 5.

P. 63 भ्रातरः संविभक्ता ये – These are Bṛ. pp. 60–61 verses 11–17 ( with variations ).

2

P. 64 अभिशापे समुत्तीर्णे – This verse and the next are ascribed to पितामह by परा. मा. III. p. 128 and the first is ascribed to हारीत by स. वि. p. 116.

P. 66 दत्त्वा भूम्यादिकं राजा etc. – These seven verses are Bṛ. pp. 62–63 verses 20–26 ( with slight variations ). The स्मृतिच. II p. 56, परा. मा. III p. 120 and a few others read सर्वभाव्यविवर्जितम्. भाव्य or आभाव्य means a tax. Vide अपरार्क pp. 792, 794 ( where it says राजभाव्यं करः ) and Madhuban plate in E. I. vol. I p. 67 ( which has सर्वराजकुलाभाव्यप्रत्यायसमेतः ). Most of the copperplate and stone inscriptions from the 5th century A. D. onwards are composed in almost literal conformity with these rules of Bṛhaspati. Vide, for instance, the Chammak copperplate of महाराज प्रवरसेन II (Gupta Inscriptions by Fleet p. 235) and the Madhuban inscription of Emperor Harṣa ( E. I. vol. I p. 67 ), where we meet with the words चन्द्रार्कक्षितिसमकालीनः and पितुः...मातुः...पुण्ययशोभिवृद्धये. The verse षष्टिं वर्षसहस्राणि स्वर्गे मोदति भूमिदः occurs in Gupta inscriptions ( p. 265 ). Vide text pp. 234 and 292 for भाव्य.

P. 67 दानाच्छेदोपवर्णनम् – For verses praising the continuance of gifts made by former kings and condemning their resumption, vide H. of Dh. vol. II ( appendix ), pp. 1272–1277 verses 2–4, 14, 25–26, 39.

P. 68 षष्टिवर्षसहस्राणि – Vide H. of Dh. vol. II p. 1272 ( appendix ) verse 2 and note thereunder which gives references to ancient inscriptions wherein the verse–षष्टिं वर्षसहस्राणि स्वर्गे मोदति भूमिदः । आच्छेत्ता चानुमन्ता च तान्येव नरकं व्रजेत् ॥–occurs and is ascribed to व्यास.

P. 70 स्वात्मना...कल्पतरौ – Vide p. 162 of कल्पतरु. अपरार्क ( p. 687 ) and स्मृतिच. II. p. 61 read as in the text.

P. 70 ज्ञात्वा कालं च etc. – These two are Br̥. p. 66 verses 40, 42 ( with variants ).

P. 71 त्रिविधस्यापि etc. – This is ascribed to कात्यायन by व्यव. प्र. p. 149 and to बृहस्पति by परा. मा. III p. 134.

P. 72 मुमूर्षुशत्रु etc. – This is Br̥. p. 64 verse 30. It is variously read.

P. 72 दूषितो गर्हितः – This is Br̥. p. 65 verse 31.

P. 72 उद्धरेल्लेख्य०. – This is Br̥. p. 66 verse 39.

P. 73 l. 5 We should read प्रमाणेनासल्लेख्यत्व०.

P. 73 साक्षी द्वादश०. – Vide Br̥. p. 46 verse 8 ( latter half ) and 9 ( first half ).

P. 73 एतद्विधान०. – These three are Br̥. p. 73 verses 22–24.

P. 74 स्मार्ते काले० – Vide H. of Dh. vol. III pp. 320–325 for 'smārtakāla.'

P. 76 यद्येकशासने०. – This is Br̥. p. 74 verses 32 ( latter half ) and 33 ( first half ).

P. 76 भुक्तिस्त्रिपुरुषी० – These are Br̥. pp. 75–76 verses 43, 44, 46.

P. 76 अशक्तालस०. – This is Br̥. p. 76 verse 76. We should read शासनारूढमन्येन.

P. 78 असाक्षिके चिरकृते – Vide Br̥. p. 79 verse 68.

P. 78 l. 8 उपधा युक्ति० – Vide कल्पतरु p. 193. व्यव. प्र. p. 168 also says: उपधा युक्तिरिति कल्पतरौ.

P. 78 चोदना प्रतिकालश्च – The text of नारद ( ऋणादान 238 ) reads चोदनाप्रतिघाते तु.

P. 79 घटोग्निरुदकं० – Vide Br̥. p. 80 verses 3–4.

P. 79 सभ्यवाहन० – The text of नारद ( ऋणादान 248 as printed ) reads सत्यं वाहनशस्त्राणि and the मिता. on या. II p. 96, स्मृतिच. II. p. 96, व्यव. प्र. p. 170 also read सत्यं वाहन०.

P. 81 l. 1 अवर्णोऽपवादः – अपवाद means निन्दा.

P. 81 l. 10 तेनैव – This refers to पितामह and not कात्यायन. Vide व्यव. प्र. p. 173.

P. 81 ऋणादिषु तु कार्येषु – This is Bṛ. p. 81 verse 7.

P. 81 l. 21 स्थावरेषु···परिवर्जयेत् – This is ascribed to पितामह by मिता. on या॰ II. 96.

P. 82 l. 7 एतदस्माभिः...विज्ञानेश्वराचार्यादिभिः – the reference is to the मिताक्षरा on या. II. 96.

P. 82 विषं सहस्रेऽपहृते॰. – These four verses are Bṛ. p. 84 verses 29–31 and p. 86 verse 48 ( which reads एवं संख्या ).

P. 83 ll. 3–4 इत्यल्पा...विज्ञानेश्वराचार्याः – Vide मिता on या. II 98.

P. 83 ll. 18–19 विंशद्दशविनाशे...चन्द्रिकाकारः – Vide स्मृतिच. II p. 100 'विंशद्दशविनाशे त्रिंशद्विनाश इत्यर्थः । अथवा विंशद्विनाशे दशविनाशे वेत्यर्थः'.

P. 83 संख्या रश्मि॰ – This is Bṛ. p. 84 verse 28. Some printed works like अपरार्क. p. 699 read विनयेत्तथा, which hardly makes any sense.

P. 84 ll. 19–20 पलानि धरणं दशेति – The halves of मनु 8. 136–137 are differently arranged in the मदनरत्न. And the passage as arranged in the text makes a better sense and is more orderly. To some extent the order of half-verses as set out in the text is supported by the very first verse 'संख्या रश्मिरजोमूला...कार्षापणान्ता'. Acc. to बृह., कार्षापण comes at the end of the passage of मनु dealing with saṁjñas. Secondly, the readings in the text are supported to some extent by व्यव. प्र. p. 176.

P. 84 l. 25 मनुस्मृतिभाष्ये – Vide मेधातिथि on मनु 8. 134.

P. 85 निष्कं सुवर्णाश्चत्वारः – Vide Bṛ. p. 81 verse 9.

P. 86 ll. 8–9 माधवीये॰. – Vide परा. मा. III. p, 161, where the verse सव्रतानां is ascribed to पितामह. स्मृतिच. II. 103 also does the same.

P. 86 l. 17 वर्णानामन्त्यः...कल्पतरुकारः – Vide p. 205 of the कल्पतरु.

P. 86 क्लीबान्नरान्० All these verses are quoted as from नारद by कल्पतरु pp. 205–206 ( except स्त्रीणां तु ), व्यव. प्र. p. 177–78, व्यव. म. pp. 47–48, स्मृतिच. II p. 103, परा. मा. III pp. 159–160 ( except निरुत्साहान् ).

P. 88 l. 15 इत्युक्तं स्मृतिचन्द्रिकायाम् – vide स्मृतिच. II p. 104 which says तत्तैर्नियुक्तस्वजनालाभविषयमित्यवगन्तव्यम्'.

P. 89 l. 16 तथापि...श्वराचार्यैः – Vide मिता. on या. II 97.

P. 89 इन्द्रस्थाने सभायां वा – The दिव्यतत्त्व p. 576 explains इन्द्रस्थाने as 'इन्द्रध्वजस्थाने'. For the इन्द्रध्वज, vide H. of Dh. vol. II pp. 825–826.

P. 90 अदेशकालदत्तानि – This verse is ascribed to कात्यायन by स्मृतिच. II p. 105 and to बृहस्पति by others and to नारद by परा. मा. III p. 163.

P. 92 प्राड्विवाकस्ततो विप्रः – These verses are not found in the prints नारद. They are ascribed to प्रजापति in व्यव. नि. p. 152.

P. 93 l. 25 अर्जुनस्तिलका...माधवीये पाठः – Vide परा. मा. III. p. 169.

P. 94 ll. 2–3 एवंविधानि० – The व्य. म. p. 56 refers to these remarks of the मदनरत्न.

P. 94 मन्त्रः सौम्यो etc. – The mantras addressed to सोम are आप्यायस्व समेतु ते ( ऋ. I. 91. 16 ) and सोमो धेनुं सोमो अर्वन्तं ( ऋ. I. 91. 20 ). The whole of Ṛg. I 91 is सोमदेवताक.

P. 94 l. 7 ओषधे त्रायस्वैनम् – This मन्त्र occurs in तै. सं. I. 2. 1.

P. 94 l. 11 समुच्चय इत्यपरे – When the consequence of doing certain things or repeating certain मन्त्रs are invisible ( अदृष्ट ) there is समुच्चय of them. Vide जै. XII. 4. 1. The व्य. म. p. 57 takes the view of समुच्चय of the सौम्य and वानस्पत्य मन्त्रs.

P. 94 ll. 12–14 वानस्पत्यस्य...बाधशङ्का मा भूदित्येतदर्थम्–The general rule of the मीमांसा is अतिदिष्टानामुपदिष्टैर्बाधः यथा कुशानां शरैः. Compare जै. X. 2. 39–40, X. 8. 8–6. The व्यव. प्र. (pp. 186–187) contains the very words of the मदनरत्न viz. 'वानस्पत्यस्य...तस्य बाध०'.

P. 94 ll. 21–22 अक्षकाष्ठं...स्मृतिचन्द्रिकाकारः Vide स्मृतिच. II. p. 105 for the view.

P. 96 l. 15 मृत्तिका...विकल्प इति विज्ञानेश्वरादयः–Vide मिता. on या. II. 100–102.

P. 99 घटेऽभियुक्तस्तुलितो–This is Br. p. 87 verse 49.

P. 99 l. 22 पुनस्तोल्यः...सर्वं कर्म विधाय तोलनीय इत्यर्थः–The व्य. म. p. 61 mentions this view of the मदनरत्न (viz. साङ्ग-प्रयोगः आवर्तनीयः) in opposition to the view of certain other writers who said that only the weighing is to be repeated and not the whole procedure. Vide व्यव. प्र. p. 193 for the same view as that of the मदनरत्न which is in accordance with what is laid down in the श्रौतसूत्रs. Compare कात्या. श्रौ. सू. I. 7. 28 'प्रधानद्रव्यविपत्तौ साङ्गावृत्तिस्तदादेशात्'. The व्यव. प्र. p. 193 holds the same view as that of the मदनरत्न.

P. 100 l. 7 अल्पपाप...चन्द्रिकाकारः–Vide स्मृतिच. II. p. 111 for तत्रैकेषामिति पूजनार्थं न तु स्वमते समस्य शुचित्वद्योतनार्थम्। अल्प-पापिनोऽप्यशुचित्वात्.

P. 100 व्यासः कक्षच्छेदे०.–This is the same as नारद (ऋ. 284 last pāda being मूर्तितः शुद्धिमाप्नुयात्) to whom स्मृतिच. II. p. 111 ascribes it.

P. 100 यत्तु कक्षच्छेदे...स्मृत्यन्तरवचनं–व्यव. प्र. p. 193 ascribes this verse to बृहस्पति. It occurs without name in व्यव. नि. p. 155.

P. 101 अष्टमं सर्वदेवतम्। ...पर्युक्षितानि च॥–व्य. म. p. 69 mentions this reading of the मदनरत्न.

P. 101 ll. 13–14 सावित्रं त्वष्टमं...चार्यैः–vide मिताक्षरा on या. II 106.

P. 101 ll. 22–24 – Vide जैमिनि III. 5. 22 where in शबर's भाष्य occurs the passage प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य०, which is शतपथब्राह्मण IV. 2. 1. 29. Jai. establishes that the priests होतृ and others partake ( in the ज्योतिष्टोम ) of the सोम contained in the चमस designated by their names.

P. 102 ll. 23–24 यत्तु एतदेव वाक्यं कल्पतरौ – Vide कल्पतरु p. 225.

P. 103 शान्त्यर्थं...शतमिति वचनात् – The व्य. म. p. 70 says 'मिताक्षरायां मदनरत्ने च शान्त्यर्थं...शतम्'.

P. 103 ll. 14–15 – होमश्चात्र...चार्यैः – Vide मिताक्षरा on या. II. 104.

P. 105 हस्तक्षतेषु – The printed नारद ( ऋणा. 301 ) reads कुर्यात्काकपदानि च.

P. 105 l. 16–19 अस्माकं तु – Both the explanations ( viz. of the मिताक्षरा and of the मदनरत्न ) are set out by the व्यव. म. p. 72. The मदनरत्न takes तावत्सूत्रेण as a समाहारद्वन्द्व, while the मिताक्षरा takes तावत् as an adverb and explains that seven strings should be passed round the seven leaves once. व्यव. प्र. ( pp. 197–198 ) also mentions the two interpretations.

P. 107 हस्ताभ्यां तं समादाय – These three verses are differently read in the printed नारद ( ऋणा. 296–299 ).

P. 109 ll. 9–11 हारियोजनयागस्य०. – शबर on जै. IV. 3. 36 and XI. 3. 48 quotes a vedic text under ज्योतिष्टोम 'प्रहृत्य 'परिधीन् जुहोति हारियोजनम्'. परिधिs are encircling sticks of wood. परिधिप्रहरण means throwing them into the आहवनीय fire. तै. सं. 6. 5. 9. 3 has प्रहृत्य परिधीञ्जुहोति.

P. 109 ll. 13 ff पूर्वमीमांसाधिकरणविरोधः – The reference is to Jai. IV. 3. 29–31 and IV. 3. 40–41. बृहस्पतिसव is

an independent sacrifice as well as an aṅga of Vājapeya. On Jai. IV. 3. 40-41 Śabara quotes 'अग्निं चित्वा सौत्रामण्या यजेत वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' and arrives at the conclusion that although the Vājapeya is performed in s'arad the Bṛhaspatisava, an aṅga of Vājapeya, is not performed in śarad, but in its own proper season viz. Vasanta. Here the औपदेशिक (expressly stated) time for वाजपेय is शरद् and for बृहस्पतिसव as an aṅga of Vājapeya that is the औपदेशिक काल, while the time for an independent बृहस्पतिसव is वसन्त and when बृहस्पतिसव is only made an aṅga of वाजपेय, वसन्त would be an आतिदेशिक time for it. The general rule is 'औपदेशिकेन आतिदेशिकस्य बाधः'. But here that rule does not apply. The termination त्वा (in इष्ट्वा) does not convey the idea of immediate succession in time but only priority in time. वाजपेय is performed before बृहस्पतिसव, that is all. The latter is to be performed in spring following the śarad in which वाजपेय was performed. शबर on XI. 3. 48 states क्त्वा तावत्पूर्वकाल एव स्मर्यते. Vide टुप्टीका on जै. V. 1. 1. p. 1288.

P. 113 l. 3 अनयो...विकल्पः - Vide जै. XII. 3. 10 एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यात्प्रधानस्य.

P. 113 ll. 9-10 सदसच्च०. - व्यव. प्र. 206 reads तदादिशस्त्र इति.

P. 113 अप्सु प्रवेश्य - This half verse is Bṛ. p. 88 verse 62.

P. 116 ll. 12–14 शार्ङ्गिणं... सम्बद्धः–These words occur verbatim in व्यव. प्र. p. 209

P. 117 पूर्वाह्णे–This verse is not found in the printed नारद and is ascribed to कात्यायन (450) by the मिता. on या II. 111, कल्पतरु p. 242, अपरार्क p. 712, परा. मा. III p. 188 and several others.

P. 117 दद्याद्विषं etc. These two verses are not found in the printed नारद, though they are ascribed to नारद by the मिता. on या II. 110–111, अपरार्क p. 713, परा मा. III. p. 189 and others. कल्पतरु ( p. 242 ) ascribes them to शङ्ख and नारद.

P. 118 विधिदत्तं विषं येन – This is Bṛ. p. 89 v. 64.

P. 118 वेगो रोमाञ्चमाद्यो – This is quoted by the मिता. on या II. 110–111, परा. III. p. 190, व्यव. प्र. p. 211.

P. 119 विज्ञानेश्वराचार्यैस्तु पञ्चतालशतं–Vide मिता. on या II. 111.

P. 120 यद्भक्तः सोऽभियुक्तः स्यात् – Vide Bṛ. p. 89 v. 66. It is ascribed to बृह. by अपरार्क. 714, व्यव. प्र. 214, व्यव. म. 82.

P. 122 सप्ताहाद्वा द्विसप्ताहाद् etc. – This is Bṛ. p. 89 v. 65 ( which reads यस्य हानिर्न )

P. 123 हेतुमण्णिजन्तस्य भक्षेरयं प्रयोगः–Vide पाणिनि III. 1. 26 ( हेतुमति च ).

P. 123 सोपवासः सूर्यग्रहे–This is Bṛ. p. 90 v. 70 ( which has विपरीते च दोषभाक् ).

P. 124 समुद्धरेत्तैल etc. – This is Bṛ. p. 90 v. 72.

P. 124 कराग्रं न धुनेद्यस्तु – Vide Bṛ. 91 v. 78, which has कराग्रं यो न धुनुयात्. This is ascribed to बृह. alone in व्यव. प्र. p. 217 and to पितामह alone in परा. मा III. p. 196 ( which reads the last पाद as निर्विकार-कराङ्गुलिः ).

P. 126 पत्रद्वये–These are Bṛ. p. 92 verses 82-85.

P. 126 जीवदानादिकैर्मन्त्रैः–Vide शारदातिलक 23. 72–76 for directions about these *mantras* prescribed for the

